४२१। कल्याणी सुभगा दुर्भगा बन्धकी रजकी वलीवर्द्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्र्यनुसृष्ट्यनुदृष्टिकुलटाभ्य इनेयः।

कल्याणी—कुलटाभ्य' ५।॥, इनेय' १।।

सौभागिनेयः दौर्भागिनेयः।

---

सौपर्णेय कौम्भकारेय। प्राचीऽनद्या नदीवर्जितात् प्रीत्यान्तात प्राच ण्येय. स्यात्। दाक्षेय 'गौपेय नद्या इति किं गौणा गोदावरी गौण वङ्गाभ्यो नदी मानुषी सञ्ज्ञाभ्य इति ण्येयप्राप्तेर्विषयम् एतत ग्रन्थकृता माहेय इत्युक्तम् ॥ ४२० ॥

अर्थवशाद्विभक्तेर्विपरिणाम इति न्यायात् एय इति सप्तम्यन्त षष्ठ्यन्त भूत्वाऽनुवर्त्तते इति तयोदशभ्य परस्य ण्येयस्य स्थाने इनेय. स्यात्। स्थानिवत्त्वाद्वृद्धि स्त्रियामीप् च। कल्याण्या अपत्य काल्याणिनेय. स्त्रिया काल्याणिनेयी अत्र सुभगा दुर्भगा परस्त्री इति त्रयाणा सुभगादित्वात् उभयपदस्य वृद्धि. यथा सौभागिनेय' परस्त्रिया अपत्यं पारस्त्रैणेय. इत्यत्र इनेये कृते सुभगादिपाठसामर्थ्यात् ययोर्लोप इतीकारस्य लोपाभावे सन्धौ अस्यैव वृद्धि' ॥ ४२१ ॥

श्रीरा टी—कल्याणी च सुभगा च दुर्भगा च बन्धकी च रजकी च बलीवर्द्दी च ज्येष्ठा च कनिष्ठा च मध्यमा च परस्त्री च अनुसृष्टिश्च अनुदृष्टिश्च च कुलटा च ता. ताभ्य'। राजतीस्थाने रजकीति लिपिकरप्रमाद। जिनेन्द्रबुद्धिपाठेन नृधीरत्वेन साधितम् एभ्यश्चतुर्दशभ्य' पूर्वस्थितसप्तम्यन्तनिर्दिष्टस्य ण्येयस्य क्ति विपरिणामात् इनेय. यकारणकार विनैवादिश्च.। अतएव षीत्त्वादीप् णित्वाद्वि:। तेन कल्याणिनेयीत्यादि। इती लुगिनेयस्य परस्त्रिया। परस्त्रीशब्दात् परस्य इनेयस्य इतो लुक् स्यात् पारस्त्रैणेय' सुभगादित्वात् पदद्वयोर्वृ्द्धि.। इहासत्यर्थकुलटाया ग्रहण तेन सत्या. कुलटाया अपत्य कौलटिनेय. अत्राद्देराकृतिगणत्वात् कौलटिनेय। असत्यास्तु कौलटेर कौलटेयः। सौभागिनेय इति। सुभगादिर्यथा। "सुभगजङ्गलकृत् सिन्धुर्धेनु वनजदीत्तरा। वध्योगी गार्वेणय्य शतकुम्भपरस्त्रियौ। इह सर्वपरादिस्तु लोक प्रयोग इत्यपि। असिहत्या चतुर्विद्या कुरुप्रश्चाल एव च। अधिदेवादिभूतौ च ण्यो राजपुरुषी मत। सर्वात् पुरुषभूमी च तथा वान्तरइत् स्मृत.। अन्वादि-

शति कोऽपि स्यादनुसंवत्सरो मत । अस्य हेत्यस्य हेत्यौ च तथा कुरुकतो मत: । स्यात् पुष्करसदित्येव सूतपूर्वनड स्मृत । अभिगमोऽनुहोडश्च प्राग्लेशनगरान्तदा । नेन्द्रान्तघादिवरुणास्तच्चे चेद्देवता अपि । अथ प्रवाहण. ण्येऽग्रे ण्येयान्ताच्च षणी-त्यपि । अर्द्धादिपरिमाणञ्च भवेदाद्यजनट यदि । अनीश्वरोऽशुचिश्चैवाचेवज्ञा-कुशलौ मतौ । सुभगादिरिति ख्यातोऽसख्यस्तन्त्रेषु तान्त्रिकै ।” सुभगादीनि द्यन्यु-त्तरदानि येषा ते सुभगाया अपत्य सौभागिनेय । द्वयोर्द्वयोर्वृद्धि । एव सौभाग्यं दौर्भाग्य महासोभगाय दीयते उद्याचिदिषु छान्दस. । कुरुजङ्गले भव' कौरु-जाङ्गल: कश्चित् जङ्गलवेनुवनजान्ता. सुभगादौ न पठ्यन्ते तन्मते कौरुजङ्गल. वैश्व-धेनव सौवर्णवनज इति । सुहृद इद भाव सौहार्द सौहार्दम् इह मुख्यस्य ग्रहणात् आदिष्टस्य तु सौहृदमिति सुहृद इद सौहार्द क्रतुप्रधान. सिन्धु मध्यदलोपात् शक्तु-सिन्धु तत्र भव शाक्तुसैन्धव सिन्धुशब्द कच्छादिषु पठ्यते तेन तदन्तविधेरपि ण्ण वैश्वधेनव समूहे आश्वेनव सौवर्णवानज वध्योगशब्दो विदादिस्तस्यान्तरापत्य ट्न. वाध्योग अनन्तर वाध्यौगि । अगारवेणुनामा कश्चित् तस्यापत्यम् आगारवैणव:, एव शातकौम्भ परस्त्रिया अपत्य पारस्त्रैणेय ष्णेयस्य इनेय इह लोके भव ऐह-लौकिक' लोकोत्तरादिति णिक सर्वलोके विदित: सार्वलौकिक' परलोके भव पारलौकिक. प्रयोगे भव. प्रायौगिक आध्यात्मादित्वात् णिक असिहत्याया भव' आसिहात्य चतस्रो विद्या चतुर्विद्या चतुर्विद्या एव चातुर्विद्य चातुर्वर्ण्यमित्यन्य: । परे तु विद्यास्थानेऽप्येवमाहु. कुरुपाञ्चाले भव' कौरुपाञ्चाल. अधिदेवे अधिभूते भवम् आधिदैविकम् आधिभौतिकम् आध्यात्मादित्वात् णिक । राजपुरुषस्य भावो ब्राह्म-णादित्वात ण्य राजपौरुष घेता कि राजपुरुषस्यापत्य राजपुरुषायणि सर्वपुरुष-स्येदं सार्वपौरुष सर्वभूमे निमित्तम् ईश्वर' सयोग. उत्पातो विदितो वा सार्वभौम. । अन्तरहतोऽपत्यम् आन्तरहाति. अनुशतिकस्येदम् आनुशतिकम् अनुसंवत्सरेण दीयते आनुसंवत्सरिकम् अस्य हेति: प्रयोजकमस्य आस्यहैतिक. गणपाठात् मध्यलुक् । अस्य हत्येति युक्त आस्यहात्य: ण्ण' । अत परेकदिश्चिन अस्यहेति अस्यहेत्यौ शब्दौ न पठन्ति । अस्यहत्यशब्दोऽव्यास्रे वर्त्तते । कुरुकतस्यापत्य कौरुकात्य: गर्गादित्वात् ण्णञ. । पुष्करसदोऽपत्य पौष्करसादि बाह्वादित्वात् ञिण । सूत पूर्व यस्य स सूतपूर्व. स चासौ नडश्चेति तस्यापत्यं सौतनाडि । अभिगमनमर्हति अभिगामिको गुण । अनुहोतेन पठति आनुहौतिक. । नगररूपमिद येषा ते प्राग्लेशे वर्त्तमानाश्चेत् सुभ-गादय । पुण्ड्रनगरे भव. पौण्ड्रनागर. सौत्ननागर. । प्राग्लेश इति कि महानगरे भव:

महानागर' इन्द्रोऽन्तो यस्य स इन्द्रान्त घ आदिर्यस्य स घादि घादिश्चासौ वरुणश्चेति घादिवरुण इन्द्रान्तश्च घादिवरुणश्च तो न विद्येते यासु ता' तच्छब्देन देवतोच्यते। तासाञ्च: द्वन्द्व तत्र तस्मिन् तथाच देवताना चे सति देवतावाचकशब्दा सुभगादौ पठ्यन्ते तेनाग्निश्च मरुच्च तौ देवतेऽस्य आग्निमारुत कर्म क्रियते यो देवताद्वन्द्व. सूक्त-सम्बन्धी हवि सम्बन्धी वा तत्रैवाय विधि इह तु न भवति स्कान्दविशाख. ब्राह्म-प्रजापत्य. नेन्द्रान्तघादिवरुणा इति किं सौमेन्द्रम् ऐन्द्रावरुण हवि: इह तु स्यादेव ऐन्द्राग्नम् आग्निमारुतम्। अथानन्तर प्रवाहणशब्दोऽवाादिषु पठ्यते णेय एव तस्य ग्रहण तेन प्रवाहणस्यापत्य प्रावाहणेय तस्यापत्य युवा प्रावाहणेयि एतदादि सर्वं सुपञ्चालादावपि पठ्यन्ते। तेन पूर्वपदस्य विकल्प प्रावाहणय प्रावाहणेयि। आदि अर्द्धौ अर्द्धेति आद्यच् न अत् अनत् आद्यच् अनत् यस्य तत् परिमाणविशेषण तथा चाकारात् भिन्नाद्यच् अद्धादिपरिमाण सुभगादौ पठ्यते तेन अर्द्धद्रोणेन क्रीतम् आर्द्धद्रौणिकम् अर्द्धकौडविकम् अनदिति किम् अर्द्धप्रस्थेन क्रीतम् आर्द्धप्रास्थिकम अर्द्धप्रस्थिकम् इति कश्चित् सुपञ्चालादित्वात् अर्द्धद्रौणिकम् अर्द्धकौडविकम्। एवम् आनैश्वर्य्यम् आशौचम् अशौचम् आचैतन्नम् अचैतन्नम् आकौशलम् अकौशलम् आनैपुण्यम् इत्यादि। असख्य सुभगादि. तन्ते तान्निकैरुक्त तेन उदकशुद्धस्यापत्यम् औदकशुद्धिरित्यादि। प्रसङ्गसङ्गत्या साहित्येन सुपञ्चालादिरिह निरूप्यते। सुसर्वा-र्द्धाज्जनपदा दयामद्रादिशश्च ते। प्राग्ग्रामनगरादिभ्योऽवयवादृतवाचिन। संवत्सरस्तु सख्यादि. सख्या रुख्यादिरेव च। अशानपरिमाणञ्च सख्यादिचेदनामनि। अभि-विष्याति सख्यादिवर्षं प्रोष्ठपदास्तुजे। अथ प्रवाहण णेयि णेयान्तषष्ठीत्यपि। अर्द्धादिपरिमाणञ्च पूर्वदाद्यजम्ऽयदि। अनीश्वरी शुचिश्चैव चेतन्नाऽकुशलौ मतौ। अनिपुणश्च केप्युचा यथा तथा यथा पुरी। सुपञ्चालादयश्चेते कथ्यन्ते कोविदोत्तमै.। सु सर्व अर्द्ध इत्येतेभ्यो जनपद्या सुपञ्चालादौ पठिता तेन सुपाञ्चाले भव सुपाञ्चालक. एव सर्वपाञ्चालक अर्द्धपाञ्चालक. अथानन्तर ते जनपदा मद्रभिन्ना दिक्पूर्वाश्चे द्भवन्ति तदा सुपञ्चालादौ पठ्यन्ते यथा पूर्वपाञ्चालक उत्तरपाञ्चालक दक्षिणपाञ्चालक अमद्रा इति कि पौर्वमद्र आपरमद्र दिग्वाच-केभ्य. प्राग्देशवर्त्ति ग्रामनगरवाचका सुपञ्चालादौ यथा पूर्वा चासौ इषुकामशमी तत्र भव पूर्वेषुकामशम पूर्वकार्णमृत्तिक नगराणा तावत् पूर्वस्मिन् पाटलिपुत्रे भव. पूर्वपाटलिपुत्रक पूर्वकान्यकुब्जक: नगराणा ग्रामग्रहणेनैव सिद्धे भेदेन यत् उभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थ तथाच दिक्पूर्वसमुदाय पूर्वेष

## ४२२ । क्षुद्रागोधाभ्यो वैरारौ ।

क्षुद्रागोधाभ्य ५।॥, वा ।१।, एरारौ १॥ ।

नाटेरः नाटेयः, गौधेर गौधारः गौधेयः । गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः ।

---

कामशब्द्यादिर्ग्रामनामधेयम् इह तु दिग्वाचक विनैव पाटलिपुत्रादिशब्दो नगरमाह । पूर्वत्र ग्रामवाचकसमुदायस्यादिक्पूर्वावयवादुत्तरस्य त्रि' । इह तु दिग्वाचकान्नगरस्योत्तरदस्य त्रिरिति । ऋतुशब्दस्य समभिव्याहारात् ऋत्ववयववाचिन पूर्वदात् ऋतव सुपञ्चालादौ पठ्यन्ते यथा पूर्व वर्षाणा पूर्ववर्षास्तत्र भव पूर्ववार्षिक पूर्वहैमन्तम् अवयवादिति किं पूर्वासु वर्षासु भव पौर्ववार्षिक । सख्यापूर्वसंवत्सर सुपञ्चालादौ पठ्यते यथा द्वौ सवत्सरौ व्याप्याधीष्टो भृतो भावी वा द्विसावत्सरिक एव सख्यापूर्वसख्यापि सुपञ्चालादौ यथा द्वे षष्टी व्याप्याधीष्टो भृतो भावी वा द्विषाष्टिक, द्विसाप्ततिक द्विषष्ठ्यादिशब्दा सख्यासु वर्त्तमाना कालाधिकारीयत्यसुत्पादयन्ति । सख्यादिशानवर्जित परिमाणसज्ञायां सुपञ्चालादौ पठ्यते । यथा द्वो कुडवौ मानमस्य द्विकौडविक, द्वाभ्यां सुवर्णाभ्या क्रीत द्विसौवर्णिकम् । अनामनि इति किं पाञ्चलोहितिक: पाञ्चकपालिक । भविष्यति तु त्रीणि वर्षाणि व्याप्य भावी त्रैवार्षिक तथाच नक्षत्र ताभिर्युक्तकाल इत्यर्थे ण तस्याऽर्थशेषे लुप् प्रौष्ठपदा तत्र जात इत्यर्थे ऋतुनक्षत्रात् ण, प्रोष्ठपाद, ज इति किं प्रोष्ठपदासु भव' कुशलो वा इत्यर्थे ण प्रोष्ठपद प्रोष्ठपदा । इति निर्देशात तत् पर्यायभाद्रपदाशब्दस्यापि ग्रहण तेन भाद्रपाद अजि तु भाद्रपद इति । अथ प्रवाहण णेय इत्यादि प्रयोगा प्रदर्शिता' । केऽपीत्यादि आहुरिति शेष तेन अयाथातथ्यम् अयाथापूर्व्यं परमते अयथातथ्यम् अयथापूर्व्यमिति ॥४२१॥

क्षुद्राश्च गोधाच्च क्षुद्रागोधा ताभ्य एरश्च आरश्च एरारौ । क्षुद्रा शीलकुलहीना अङ्गहीनाश्च । गोधा गोधादि अत्र वाशब्दस्य व्यवस्थावाचित्वात् क्षुद्राभ्य, परस्य णेयस्य एर, स्याद्वा । गोधादे परस्य णेयस्य एरारौ स्याता वा इत्यर्थ । शीलहीना यथा नट्या अपत्य नाटेर नाटेय, एव कुलटाया अपत्य कौलटेर' कौलटेय पूर्वादिनेये कौलटिनेय एव' दास्या अपत्य दासेर दासेय । अङ्गहीना यथा । काणाया अपत्य काणेर, काणेय, गोधाया अपत्य गौधेर, गौधेय, गौधारः ।

चटकाया अपत्यं चाटकैर अत्र यर्योर्लोप इत्यत्र ययोरिति ज्ञापकादाकारलोपा-भाव: वाशब्दव्यवस्थयास्य नित्यम्। एवं स्त्र्यपत्ये णास्य लुकि चटका इत्येव निपात्यते। गर्गादिभ्यो। गर्गस्यापत्य गार्ग्य: इत्यादौ यर्योरित्यनेन अकारादे-र्लोप। स्त्र्यपत्ये गार्गी सूर्य्यागस्त्यस्येति यकारलोप, एव वात्स्य इत्यादि॥ ४२२॥

श्रीरा-टी—क्षुद्राश्च गोधाश्च ताभ्यश्च व्यनिर्देशनार्थ एयवाविधानसामर्थ्यात् नव्या अपत्य इति वाक्य पक्षे नाटेय एवं यदा कुलटाशब्दोऽसतीवाचकस्तदा कौलटेर कौलटेय शीलहीनत्वात्। अङ्गहीनायाम्न काणाया अपत्य काणेर काणेय, एव कौञ्जेर इत्यादि। गोधार इति गोधाया अपत्यम् इति वाक्य क्षुद्रा-दिपाठात् गौधेर अत्राद्यौ पृथक्ण पाठात् गौधेय इति जुष्टस्यापत्य जौष्टार, मृग्या अपत्य मार्गार षण्डस्यापत्यं षाण्डार, काक्या अपत्य काकार मूषिकाया अपत्य मौषिकार' वाह्वादित्वात् मौषिकि.। चटकाभ्यो मैरो लुण्ण तु स्त्रियाम्। चटकाच्च चटकायाश्च परस्य णारस्य ऐर स्यात्। स्त्र्यपत्ये णैरस्य लुक्। अतएव चटकात् ण्णेय चटकस्य चटकाया अपत्य चाटकैर, स्त्रियान्तु चटकस्य चटकाया अपत्य स्त्री चटका। गार्ग्य इत्यादि। ननु गर्गादिनडादिभ्यो गोत्र एव ण्यण्णायनौ तत् कथमपत्यसामान्ये विहित इति चेत सत्य जामदग्न्य पाराशर्य्य इत्युभाभ्याम् अन न्तरे ण्यस्य द्रौणायन इत्यत्र ण्णायनस्य दर्शनात् सामान्येनोक्त अन्यत्रान्तरे ण्यस्य द्रौणायन इत्यत्र ण्णायनस्य दर्शनात समान्येनोक्तम् अन्यत्रान्तर एवेति भाव। गर्गस्य गोत्रापत्य गार्ग्य अनन्तरे तु अत ञ्णि गार्गिरित्यादि। गर्गादिर्यथा। गर्गो-वत्साक्रतोरेभ्यो व्याघ्रपादवट: शठ। अजो त्रिलस्यग्निवेशौ जवमानो धनञ्जय। दृचो विश्वावसु शर्ङ्गो वर्म्मधूमपुलस्तय.। सस्कृतिर्वेदभृद्‌यागेन्द्रहुराजस्वसेमधु.। विप्रेऽश्म लोहितो मण्ड् जिगीषुर्गुह्मसुर्नत। कपि बोधवतण्डास्वाङ्गिरसेऽप्यय कौशिके। कट्रु शसितसूलिन्द्र मानाथो मनुकच्छपा। मड्सु शम्बु कतेस्तण्ड-स्तृचो रूच मड्चु च। तनु, ण्यरूकतश्चैव शकर्लभनर तथा। कण्वागस्तिविरो-हितौ वृषवह पूर्वोगण शिप्पलु कृष्णौ भिण्डिलशण्डिलौ च चिकितोदम्भस्तितिचा-भिषक्। गोकक्षारिव काचुलूकसुयनौ स्थूलासुनाश्मृत्तुकम्। ताता मन्तितभिणु-जोऽश्मरथ गोलुन्द तथा कुण्डलौ। अनडुद्‌यज्ञवल्कौ च पर्णवल्क पराशर.। जतुकर्ण शकराच पूतिमाषश्च पिण्डल.। मूढानो बृहदग्निश्च कुटीभुज्जमदग्नि च। लोहितादिश्च कर्णादिर्गर्गादौ परिकीर्त्तिता.। गर्गस्याऽन्तरापत्यम् इति वाक्य ण्यर्योर्लोप इति अकारलोपे त्रि स्त्रिया षित्वादीप् गार्गी वानायनपक्षे गार्ग्या-

## ४२३। ओदौतोऽज्वत्तक्रद्य-क्यङ्याः।

ओत् औतः ५।, अच्वत् ।१।, तक्रद्य क्य-ङ्या १॥।

**ओदौद्भ्या परस्तसंज्ञः क्रत्संज्ञकस्य यः क्यङौ च अज्वत् स्यात्। बाभ्रव्यः। नाड़ायनः गार्ग्यायण दाक्षायणी। पैतृष्वस्रीयः। मातृष्वस्रीयः। रैवतिकः। आश्वपालिकः। यादव. आङ्गिरस.।**

---

यणी एव सर्वत्रोहनीयम्। इह पुलस्तिशब्दपाठात् ञ्वे पुलस्त्य. पुलस्त्यशब्दस्य तु ञ्वे पौलस्त्या इति। यद्यपि वेदभृच्छब्दादृषिण्ये क्रते पश्चात् स्वार्थे ष्णेत्र वैदभृत्य इति सिद्ध्यति तथापि ञ्वे लुकि वैदभृत इति सिद्धार्थं पाठ. तत्र तु वैदभृत्या इति राजशब्दोऽसौ गर्गादि तेन राजस्यापत्य राज्य सौ तु सौराजि एतेनान्येषा सौऽपि सौगार्ग्य इत्यादि। माधव्यो विप्र अन्यत्र माधव शकलान्ताल्लौहितादि' ष्णास्य स्त्रिया नायन्नित्य तेन लौहितायनीत्यादि। कण्वस्तरापत्य काण्व. स्त्रिया काण्यायनी एव बोध्य. बौध्यायनी वातण्ड्य वातण्ड्यायनी। अनाङ्गिरसे तु कापेय वौधि. वातण्ड शिवादित्वात ष्ण. अनाङ्गिरसेऽपि गर्गादित्वाच्च वातण्ड्य स्त्रिया वातण्ड्यायनी वातण्डीति कश्चित्॥ ४२२॥

अच् इव अज्वत अच्तुल्या। तश्च क्रश्च तौ तक्रतौ च तौ यौ चेति तक्रद्यौ तक्रद्यौ च क्यश्च ङ्यश्च ते। बभ्रोरपत्य बाभव्य इत्यत्र ष्णेत्र क्रते ञ्वौर्णौपौताविति उकारस्यौकारे अनेन यकारस्याच्तुल्यत्वे औकारस्यावादेश। एव नावा तार्य्यं नाव्यम् अत ढघेकादिति णे क्रते अनेन यकारस्याच्तुल्यत्वे ओकारस्य आव्। एव लूयते य. स लव्य' तव्यानीयया इति यप्रत्यये उकारस्य गुणे यकारस्य अच् तुल्यत्वात् ओकारस्य अव्। एवञ्च भाव्यमित्यत्र व्यणि क्रते वृद्धौ यकारस्याच्तुल्यत्वे औकारस्य आव् ओकारस्य अव् ये। एवञ्च गामिच्छति गव्यति नावमिच्छति नाव्यति इत्युभयत्र क्योम्व्याद्यर्थेति क्ये क्रते यस्याच्तुल्यत्वादवावौ। एवञ्च गौरिवाचरति गव्यते नौरिवाचरति नाव्यते इत्युभयत्र घान्ङ्यक्लीति ङ्ये तस्याच् तुल्यत्वादवावौ। नचात्र अया य्वोरित्यनेन पक्षे वकारलोपोऽस्त्विति वाच्य न लोप' क्यङि इत्यनेन क्यङयोर्नकारलोपादन्यस्य विरामविहितकार्य्यस्य निषेधेन दात्व-त्वाभावात् अतएव वाचमिच्छति वाच्यति इत्यादि न कौडादि.। ननु त्यय इत्युक्तौ

प्रत्ययकारिवेवेष्टसिद्धौ तत्कद्वयकल्पना इति गौरव कथम् इति चेन्न। उङ्गृहे इत्यस्य प्रपूर्वस्य प्रोयते। केवलस्य ध्या भूयोऽसि ओयत इत्यादौ यकोऽपि ञ्ज्वस्त्वापत्ते। गर्गादिस्तु गर्ग वत्स आङ्गति सस्कृति ग्रज व्याघ्रपद वेदभृत् वीणायाम पुलस्ति विनस्ति रैभ अग्निवेश शङ्ख शट अवट धूम वर्म्मिव् धनञ्जय टच विश्वावसु जवमान लोहित सशित बभ्रु मण्डु मड्चु मङ्कु मनु बोध शम्बू नितु गुग्गुलु जिगीषु मन्यु तन्तु इन्द्र मनायी मनावी मनु कत्यक रूच तनुच तरुच तण्ड वतण्ड कपितक कुरुकत सकल देवहु काख गोकाच अगस्ति कुण्डली अनड्वाह यज्ञवल्क पर्णवल्क जात बिबोधित इष गणनावह गण शण्डिल सुद्गल मुषल पराशर जनूकर्ण मन्त्रित अश्मरथ शर्कराच पुतिमास स्थूला अवरका पिङ्गल कृष्ण गोलुन्द उलुक तितिच भिषज् विष्णुज भण्डिल दन्त किकत एकलू पिप्पलु वृहदग्नि जमदग्नि सुलोभिन् कुटीषु पाण्डु इत्यादि। ८७। नडादिमाह। नडस्यापत्यं नाडायन. ज्ञापित्रि एतदुभयप्रत्ययान्तेऽपि नडादि स्यादित्यत आह गार्गायण: दाचायणीति गर्गस्यापत्य गार्ग्य गार्ग्यस्यापत्य गार्ग्यायण अत्र क्यञ्चौ चेत्यव आकारवर्जनात् यस्य लोपो न स्यात्। एव दचस्यापत्य दाचि. दाचे. स्त्र्यपत्यं दाचायणी अत्र यस्योर्लोप इति इकारलोप षित्वाटीप्। नडादिस्तु। नड अश्व अश्मन् शङ्ख विद पुट रोहिण खर्ज्जूर स्वरूप भडिल भडित भण्डिल भण्डित प्रकृति वामदत्त अनुयोवा काश काण कोशल गोलाच अकंश्मन् वलसद चक्र कुल श्रविष्ठा ध्वविन् गोमिन् श्याम धूम धूम्र वाग्मिन् विश्वानर कूट जल वड ग्रीष्म अर्ह वच विशम्प विशाल गिरि चपल चुप दासक वैल्व वाप्य अनुडुह्य अर्जुन शूद्रक सुमनस् ओजस् हस आतप किर खिर खदिर चरमुञ्ज इतिक इतिस उदक नमक सप्तन् राजन्यतिक प्राण नव सायक दास मित्र द्वीप पिञ्जर पिङ्गल किङ्कर कातर काखल काश्य काव्य अज अमुष्य अमित्र लिग्न चित्र कुमार लोह मूर्द्ध स्तम्भ शिंशपा अग्र श्रण शकट तण शलभ मिमत ऋच् जल इन्ध जलन्धर युगन्धर हसक दण्डिन् हस्तिन् पञ्चाल चमसन सुकृत्य स्थिरक ब्राह्मण चरक वदर अश्मव स्वरूप कामुक ब्रह्मदण्ड उडुम्बर शोण आलोह मण्डप इत्यादि। कुञ्जादिस्त्रिकादिश्च नडाद्यन्तर्गणौ॥ ११६॥ पितृष्वस्रादिमाह। पितृष्वसुरपत्यं पैतृष्वस्रीय एव मातृष्वस्रीय स्त्रिया पैतृष्वस्रीया षित्वाभावादावेव। पितृष्वस्रादिस्तु। पितृष्वसा मातृष्वसा भ्राता चतुष्टयमिति। रैवत्यादिमाह। रेवत्या अपत्यं रैवतिक एवम् आश्वपालिक.। रैवत्यादिस्तु। रेवती अश्वपाल द्वारपाल मणिपाल

वृक वृष्णिक वृकग्राह कर्णग्राह कुक्कुटाच ॥ ९ ॥ शेषमाह। यदोरपत्यं यादवः अत न्वोर्लौपौताविति उकारस्य ओकारेऽव् अङ्गिरसोऽपत्य आङ्गिरस एव रघोः राघव उपगो, औपगव पशो पाशव: इत्यादि। न्वोर्लौपौतावित्यनेन प्राप्त नलोप निषेधयति ॥ २३ ॥

श्रीरा टी—श्रोच श्रौच तत्तस्मात् अजिव अज्वत् तश्च क्षच तौ तक्षतौ तक्षतोयं. तक्षद्य तक्षद्यश्च क्यश्च ध्यश्च ते। बाभव्य इति बभ्रोरन्तरापत्य ण न्वोर्लौपौताविति उवर्णस्यौकार, यस्याज्वद्भावात् यलायवायाव इत्यवादेश कौशिक एवाभिधानम् अन्यत्र बाभ्रव ननुस्थाने तन्तुरिति पठत्यपर। कतो मुनिविशेष तस्यानन्तरा-पत्य कात्य. स्त्रिया कात्यायनी। कस्वादि प्रयोजनमग्रे वक्ष्यति। गर्गादिराकृति-गणत्वात् रामरथशब्द कस्वादौ ज्ञातव्य रामरथस्यापत्य रामरथ्य व्वे तु रामरथा स्त्रिया रामरथ्यायनी रामरथी रामरथ्यस्यापत्य युवा रामरथ्यायन रामरथस्य छावा रामरथा सङ्घाङ्कघोषलक्ष ।नि रामरथानि रामरथशब्दादगोवे-ऽप्युपचारात्। कुर्वादिरषिङ्गोराजश्वशुरात्त्वनिन्मनोऽस्तु सश्च। कुर्वादेर्गोत्रेऽगोत्रे च ण्योऽपिन् स्यात् ख इत्यर्थ गोराजश्वशुरेभ्यस्तु अनित् इत्यन्यो य इत्यर्थ। मनोऽस्तु ययोगे सश्च न इत्। कुरोरपत्य कौरव्य कौरव्यौ कौरव्या इत्यादि स्त्रिया कौरव्या-यणी कौरव्या, केचित् कौरव्यायणीति नित्यमाहु.। एव लाच्चण्य लाच्चायण्यौ लाच्चायण्या स्त्रिया लाच्चण्या इत्यादि। कुर्वादिर्यथा। कुरु करि गर्ग गणेका-कूट शकल शलाका सत्यङ्कारम्। शाक शुम्भीमतिमञ्जुष तथा ग्डभीकारम्। एवकार केशोरि रथकारकश्च पट्टिका। पिण्डीमूलीन्द्रजाला शङ्कम्भुकविधा-रक। एकजित् स्यात् न मन्यायश्च पितृमत् पथिकारिणौ। हन्ता भर्त्ता शूर्प-नायो दामोष्णिषि विनस्तथा। भर्बु श्यावरथ श्यावपुत्र सेनान्तदा मता.। कारव' चत्रिये सम्राट् केशिन्या केशिनो भवेत्। न्येभातुर्कर्म तस्यैव वेन केनचिदीरित। यमादित्यावदितिश्चैवा पश्वाद्यादिपतिर्दिति। पत्रश्वकुलराष्ट्रार्थगणवास्तु धन वसु। विद्याशतनवचैव प्राणधान्य सभाजगत्। रथकारशब्दोऽत्र जातिवचन। शिल्पि-वचनस्तु कारुत्वेन एव प्राप्ते। शके भवतीति शक भूरिह पाठबलान्यकारागम। हारिषेण्य वैष्वक्सेन्य वाह्वादित्वात् हारिषेणि वैष्वक्सेनि. एव तान्त्ववाय्य तान्त्व-वायिरित्यादि। सम्राजोऽपत्य साम्राज्य चत्रिय अन्यत्र बाह्वादेराकृतिगणत्वात् साम्राजि: केशिन्या अपत्य केशिन्य णे केशिनादेश अन्यथा पुवद्भावे केश्य स्यात्। भ्रातुरपत्यं भ्रातृव्य. व्यस्य वम् पितृष्वस्रादित्वात् भ्रात्रीय. कस्यचिन्मते वेणशब्दस्य

कुर्वादित्वात्, वैण्य तथा च वैण्य पृथु हैहयमर्जुनञ्च इति। वेणाच्छान्दसीति पाणिनिसूत्राच्छान्दसमिदम्। यमस्यापत्य याम्य' आदित्यस्यापत्यम् आदित्य ण्ये ण्यलोप. अदितेरपत्यम् आदित्य प्राजापत्य एव वैश्वपत्य दितेरपत्य दैत्य. पश्वा-द्यादिपतेस्तु पाशुपत' जागत्पतम् इति कुर्वादि। गोरपत्य गव्य राज्ञोऽपत्य' राजन्य क्षत्रियेऽभिधानम् अन्यत्र राजन मनवर्जेत्यादिना नियमेन न नलोप हनषण इति नियमान्न उङ्लोप श्वशुरस्यापत्य श्वशुर्य्य संज्ञाया बाह्वादित्वात् श्वाशुरि मनोरपत्य मनुष्य ये सन् न इत। नाडायन इति नडस्यान्तरापत्यम् इति वाक्यम्। नडादि-र्यथा। नड भक्षित रोहिण शङ्खपुर्ट पद काण चर गिरि चक्र कुटम्। विद काश वनं कुल धूम जर्ल किर चित्र सुर खडलोह नरम्। भडिलो भडलो भक्षित' प्रक्लतेश्वपलो नमक खदिरो मिमत। चरक शकट सुलभो वटर स्थिरक खरपः सुमनोऽजजना। शायक दासक किङ्गर दुर्ग कातर काखल पिङ्गल धूसम्। भण्डिल कोशल सुपक्ष विशाल सातप चुपमश्वविशष्पम्। भ्रज खरूप खञ्जाल वामो दच्यी धरिविण। अश्मा गोलो च गोलाच्च जलन्धर युगन्धरा। ...मार शिंशपा काव्यो वीचाहाविति सैतिकौ आनडूह्याजुनौ दण्डीश्यामो वाग्मी च सप्तम। इन्द्रा-मुष्यो निगु' काश्यो राजव्यातीकपिञ्जरा। दीप प्राणी दास मित्री सुञ्जाप टण शूद्रका। अनुग्रीव श्रविष्ठा च विश्वानरश्च हसक। मण्डपा कश्मलस्तम्ब खर्जूर चमसश्च ऋक्। ग्रीष्मो हस्ती वैण्यवाप्यौ सुक्रत शीणकामुकौ। ब्राह्मणोडुम्बरा नोह द्रोणजीवन्त पर्वता। स्कभोऽश्वत्थोष्ट्रदण्ड' स्यात् शलङ्कुस्तु त्र्यकौशिकी। वाशिष्ठे तु वर्णविप्रे कृणाजातस्तु पूरुषे। दर्भ आग्रायणी भर्गस्त्रैगर्त्ते शुनकस्तथा। वत्स्ये ऋषावग्निशर्मा स्याच्छरद्वांस्तु भार्गवे। भारद्वाजे तु आत्रेयो भरद्वाज शपस्तथा। आत्रेयेऽथ षायणे च क्रौष्टोरुस्तुक् सदा मत'। षणान्ता षणन्ताश्च गोत्रार्था षणान्ताश्च हरितादय। शिंशपाया अपत्यमित्यर्थे। आद्यची णित्ते शिंशपादाश्रयो दीर्घसत्व-द्वेविकानाम्। शिंशपादीना णित्ते परे आद्यच स्थाने विप्रसङ्गे आत् स्यात् शांशपा-यन आनडुह्य इति गर्गादि षणान्त. अर्जुनस्यान्तरापत्यम् आर्जुनायन' बाह्वादित्वा-दार्जुनि। एव सात्नायन सात्नि. पञ्चानामपत्य पाञ्चायन बाह्वादित्वात् पाञ्चि। वैण्य इति वेणो नाम राजर्षिस्तस्यापत्य वृद्धेऽकौशलाजादेरिति ण्यङ् वैण्यस्तस्या-पत्य युवा वैण्यायन अतएव ण्यङ्. क्षत्रियार्षेभ्य इति न लुक्। द्रौणा-यणोऽश्वत्थामा इति तु पुत्रे पौत्रत्वोपचारात्। शलङ्कोरन्तरापत्यं शालङ्कायणः षायने उतो लोप.। इदमकौशिकी कौशिके तु बाह्वादि. वानायनो वाशिष्ठः

अन्यत्र वात्रि काण्र्यायनी विप्र अन्यत्र कार्णि: जातस्यान्तरापत्यं जातायन पुमान् पुरुष इति किं जाताया अन्तरापत्यं जातेयि प्रातिपदिक ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम्। दार्भायण आग्रायण अन्यत्र दार्भि भार्गायण त्रैगर्त्ते अन्यत्र भार्गि शौनकायनी वात्स्य अन्यत्र शौनक विदादित्वात् ट्र आग्निशर्मायण ऋषि: अन्यत्र बाह्वादित्वात् आग्निशर्मि शारद्वतायनी भार्गव अन्यत्र शारद्वत. विदादित्वात् ट्र आत्रेयायणी भरद्वाज अन्यत्रात्रेयि भारद्वाजायन. शापायनश्चात्रेय अन्यत्र भारद्वाज ऋषिणा शापि अत ष्णि क्रौष्टीरपत्यं क्रौष्टायन उती लुक् ष्णायने इदमकौशिक इति कश्चित्। गोत्रविहितणान्ताऽगोत्रविहितणान्ताश्च नडादौ पठ्यन्ते तस्मादेव नियमात् यूनि प्रत्यय। मूले गार्ग्यायण इति गर्गस्यान्तरापत्य गार्ग्य तस्यापत्य युवा इत्यर्थे ष्णायन आति न ष्णस्य लोप एव वात्स्यायन इत्यादि। मूले दाचायण इति दत्तस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्य युवा दाचायण एव प्राचायण इत्यादि स्त्रियां गर्गस्यापत्य यूनी गार्गी गार्ग्यायणी दाचीति स्त्रिया युवत्वनिषेधात् दाचायणी तु दत्तस्यापत्य दाचायण स्त्रियां षित्वादीप्। गोत्रार्थे इति किं सोमो देवता अस्य सौम्यस्तस्यापत्य सौमि। सुतङ्गमस्य निवास सौतङ्गमि-स्तस्यापत्य सौतङ्गम शेष ष्ण एव ट्रान्ता हरितादय हरितस्यान्तरापत्य हारित. विदाद्यन्तर्गणत्वात् गोत्रे ट्र तस्यापत्य युवा हारितायन परस्त्रिया अपत्य पार-शरस्तस्यापत्य युवा पाराशरायण इत्यादि। बाह्वादे. ष्णायनस्य लुक्। बाह्वादे. परस्य ष्णायनस्य यूनि विहितस्य लुक् स्यात्। बालस्यान्तरापत्य बालि तस्यापत्य युवा बालि। एवमुदीचोऽपत्यम् औदञ्चिस्तस्यापत्य युवा औदञ्चिरित्यादि। बाह्वादि-र्यथा। बालिरौदञ्चि भौलिङ्गि सात्यकामि च सात्यकि। औदङ्ग्यौद मधौद शुङ्गि शालङ्कयस्तथा। गौपासङ्गौदमयी च दैवस्थान्योद्दायनी। शाफल्को दक्षितौ-वाह चितिश्चैवौञ्जिहायनि। पैङ्गलायनि वाल्कायनि पैङ्गायनि वारुयवाणि। ष्णान्तानामेषां प्राचां ष्णेश्चावैङ्ग्यादेरित्यनेन लुकि सिद्धे प्राच्यार्थं पृथगुपादानम्। प्राचां ष्णेश्चाद्द वैङ्ग्यादे वैङ्ग्यादे। प्राचां गोत्रे य. ष्णिसदन्तात् यूनि विहितस्य ष्णायनस्य लुक् स्यात् न तु वैङ्ग्यादे। पन्नागारस्यापत्य पान्नागारिस्तस्यापत्यं युवा पान्नागारि। वैङ्ग्यादेस्तु विङ्गस्यान्तरापत्यं वैङ्गि. तस्यापत्य युवा वैङ्ग्यायन। धारणस्यान्तरापत्यं धारणि तस्यापत्यं युवा धारणायन इत्यादि। वैङ्गि धारणि वाल्मीकि दैवप्राणा-हतिस्तथा। तौल्वला सुविदैवौद्दि पौष्चिवैरकिवैकनि। कारेणुपादि वैकर्णी कालिङ्ग्या हंसकी तथा। चापेटक्यासिबान्धी पौष्करसादिश्च नैयमि:। दैवमत्यन्ति

श्रुतौ तथा दैवयज्ञिमतं। न भरतगोत्राच। प्राच्यात् भरतगोत्राच यूनि विहितस्य लुक् स्यात्। अर्जुनस्यान्तरापत्यम् आर्जुनिस्तस्यापत्य युवा आर्जुनायन. पूर्वस्य बाधकोऽयम्। पैतृष्वसीय इत्यादि पितृष्वसुरपत्यमिति वाक्यं णीय णित्वाद् ञिः स्त्रिया पैतृष्वसीया पैतृष्वसीया भार्य्या इत्यादि पितृष्वसा तथा मातृष्वसा भ्रातृरनित् भवेत्। कुत्साया णायणिश्चैव सौवीरगोत्रसम्भव। भ्रातृशब्दात् णीयो णित् तेन भ्रात्रीयभार्य्य इति सौवीरगोत्रसम्भवो णायनि. कुत्साया पितृष्वस्रादौ पठ्यते तस्मादपि अणिणीय। यमुन्दस्यापत्य यामुन्दायनि तस्यापत्य युवा नित्य यामुन्दायनीयो जाल्म रेवत्यादित्वात् यामुन्दायनिक एव सौयामायनीय. सौयामायनिकं वार्ष्यायनीय वार्ष्यायनिक। तथाच यमुन्दश्च सुयामा च वार्ष्यस्तेभ्य किञ. स्मृता। सौवीरेषु च कुत्सायात् द्वौ योगौ शब्दवित् स्वरित्। इति महावृत्ति. द्वौ णीयणिकौ। णित्वाभावे पूर्ववत् प्रयोजनम्। रैवतिक इति रेवत्या अपत्यम् इति वाक्य ययोरित्यादिना ईकारलोप त्रिश्च स्त्रियाम्। रैवतिकी आश्वपालिक इति अश्व पालयतीति अश्वपाल: षण् तस्यापत्यमिति वाक्यम्। रेवत्याश्वमणिद्वारपूर्वपालोऽथ कुत्सने। गोत्रस्त्रियश्च बाहुल्याद् वृद्धा. सौवीरगोत्रजा.। कर्णभ्रातृवकग्राहौ कुक्कुटास्थ्यस्तथैव च। वृकवञ्चौ सवर्णा च परे शिष्टप्रयोगत.। अश्वमणिद्वारेभ्य: पालो रेवत्यादौ पठ्यते जयादित्यन्तु अश्वपाली मणिपाली। द्वारपालीति स्त्रीलिङ्गमङ्गीकरोति न्यासे तु द्वारपालादीनामदन्तनिर्देश.। अथानन्तर गोत्रविहितत्यान्तास्त्रिलिङ्गा कुत्साया पठ्यन्ते गार्ग्या अपत्यं युवा गार्गिक. ग्लुचुकायनेरपत्य युवा ग्लौचुकायनिको जाल्म: मिमतादित्वात् गार्ग्य. ग्लौचुकायनश्च जाल्म। गोत्र इति कि कारिकेयो जाल्म. स्त्रिय इति किम् औपगवि कुत्सायामिति कि गार्गेयो मानवक। कुत्सन इत्येव सौवीरगोत्रे ये वृद्धास्तेऽपि बाहुल्याद्रेवत्यादौ पठ्यन्ते भागवित्तस्यान्तरापत्य भागवित्तिस्तस्यान्तरापत्यं युवा भागवित्तिको जाल्म बाहुल्यात् पक्षे यथा प्राप्त भागवित्तायनो जाल्मं। तृणविन्दोरन्तरापत्य तार्णविन्दव तस्यापत्यं युवा तार्णविन्दविक। आकशायस्यान्तरापत्यम् अत्र्यादेराकृतिगणत्वात् आकशायेयं तस्यापत्य युवा आकशायेयिक अन्ये तु अत्र्यादिपठितत्वात् आकशायनशब्दस्यैव आकाशायनेयिको जाल्म इति वदन्ति तन्न तथाचाह. भागपूर्वपदो वित्तिर्द्वितीयस्तार्णविन्दव.। तृतीयस्त्वाकशायेयो गोत्रात् ठग्बहुल तत इति परे। ठक् णिक:। वृद्धिग्रहणमिह स्त्रीनिवृत्त्यर्थं सौवीरगोत्रज इति किम् औपगविर्जाल्म. कुत्सायामिति किं भागवित्तायनो मानवक:। शेषानुदाहरति यादव इति यदुर्नाम

**४२४। मन्वर्जान् वर्म्मोक्षश्येनोऽनोऽध्वात्मनोऽपत्यष्णोऽविकारण्याभावकर्म्मय ईने न नलोपः।**

मन्वर्जान् वर्म्मोक्षश्येन ६।, अन ६।, अध्वात्मन ६।, अपत्यष्णे ७, अविकारण्याभावकर्म्मये ७।, ईने ७।, न।१।, नलोप १।।

**मन्वर्जस्यानो वर्म्मण उक्ष्णः स्यात् परश्येनस्यापत्यार्थ-ष्णे अनो विकारार्थवर्ज्जे ष्णे भावकर्म्मार्थवर्ज्जे ये च, अध्वात्मनोरीने, नलोपो न स्यात्। याज्वनः भाद्रवर्म्मणः औक्ष्णः चाक्रिणः। शैवः वाशिष्ठः।**

---

कश्चित तस्यान्तरापत्यम् इत्यर्थे ष्णः आङ्गिरस इति अङ्गिरसोऽपत्यम् इति वाक्य मुनौ तु शिवादित्वात् एवम् औपगव माधव मारीच इत्यादि॥ ४२३॥

मन वर्जयतीति मन्वर्ज ढात् ष्ण मन्वर्जश्चासौ अन् चेति मन्वर्जान्। स्यः सयोग स्यादिन् स्येन् मन्वर्जान् च वर्मन् उक्षन् च स्येन् च मन्वर्जान्वर्म्मोक्षश्येन् तस्य। अध्वन् च आत्मन् च अध्वात्मन् तस्य। अपत्ये ण अपत्यणः तस्मिन्। न विकारोऽविकार अविकारे ण अविकारण भावश्च कर्म्म च भावकर्म्मणी न भावकर्म्मणी अभावकर्म्मणी अभावकर्म्मणोर्य अभावकर्म्मय। अविकारणश्च अभावकर्म्मयश्चेति अविकारणाभावकर्म्मय तस्मिन् विकारार्थवर्ज्जष्णेषु सर्वेषामनन्तानां नलोपनिषेधे अपत्यष्णे मनन्तस्य नलोपार्थमाह मन्वर्जानिति। अपत्यष्णे परे मन्वर्जस्यैव अनन्तस्य नलोपो न स्यात्। मनन्तस्य तु नलोप, स्यादेव। अपत्यार्थादन्यत्र मनन्तस्यापि नलोपो न स्यात्। मनन्तवर्जनात् वर्म्मणोऽपि नलोपे सिद्धे तस्य नलोपनिषेधार्थं पुनर्वर्म्मणो ग्रहणम्। उक्ष्णस्तु इह ग्रहणं नियमार्थमेव तेन उक्ष्णोऽपत्यार्थष्णे एव नलोपो न स्यात् अन्यार्थष्णे तु नलोप, स्यादेवेति। यथा उक्ष्णोऽपत्य औक्ष्णम्। अन्यत्र उक्ष्ण इदम् औक्षं चर्म्म। यज्वनोऽपत्य याज्वनः शैषत्वात् ष्णे कृते अनेन नलोपनिषेध.। मनन्तस्य तु सौपाम. भाद्रपामः। हितनाम्नस्तु नलोपो वा वक्तव्यः। हैतनाम्नः हैतनामः भद्रवर्म्मणोऽपत्य भाद्रवर्म्मणः उक्ष्णोऽपत्यम् औक्ष्णः इत्यत्र इन् यत् ध्रुत राज्ञामिति उङ्लोपः। चक्रिणोऽपत्यं चाक्रिणः एवं शाङ्गिनः दाण्डिन इत्यादि। अनन्त विकारार्थवर्ज्जे ष्णे यथा ब्रह्मणो

जात' ब्रह्म वेत्ति इत्यर्थे वा ढचेकादिति णे ब्राह्मण'। एवं साम्न इद सामनम् अत्र मनन्तस्यापि वर्जन नास्ति। शुन इद शौवन माधवन चर्म्मण इद चार्म्मणम्। शुन सङ्कोचे चर्म्मण कोषे वाच्ये ब्रह्मण इदमित्यर्थे न आ निर्दिष्टमनित्यमिति न्यायात नलोपनिषेधो न स्यात्। शौव सङ्कोच। चार्म्म' कोष'। ब्राह्मणोऽय ब्राह्मी मन्त्र। विकारार्थे णे तु हैम्नो विकार हैम अश्मनो विकार आश्म। अन्यत्र हैमनम् आश्मनम्। भावकर्म्मार्थवर्ज्जे णे मूर्द्धनि भवो मूर्द्धन्य सामनि साधु सामान्य ब्रह्मणि साधु ब्रह्मण्य। भावकर्म्मये तु राज्ञो भाव कर्म वा राज्यम् एव सौदाम्यम् अध्वात्मनोरीने यथा अध्वनि साधु अध्वनीन एवम् आत्मनीन एवम् अध्वन्य अत्र तु अनन्तत्वादभावकर्म्मये सामान्यान्नलोपनिषेध। शिवस्यापत्य शैव एव वाशिष्ठ। शिवादिस्तु। शिव तक्षन् गङ्गा विपाशा कुञ्चा कोकिला प्रोष्ठ वतण्ड पिष्ट मयूर कर्ण खर्जूरक भूरि सन्धि मुनि कुठार अनभिम्लान ककुत्स्थ सुपिष्ट ऋष्टिषेण यस्कभूमि तृणा सपत्नी जरत्कारु पैष्टिक चण्ड कुम्भ कहोड। ककुभ बोध पीवर तृण कर्ण चीरह्रद जलह्रद परिषिका गोभिल जटिलक बधिरक मुञ्जरिक वृष्णिक खञ्जारक खञ्जाल रेख लेख वर्त्तुल पिधाक इक्ष्वाकु नडाक ऊर्ण-नाभ उत्क्षेपा रोहितिका आर्य्यश्वेता लक्ष वशिष्ठ लच अश्वस्थूल किनन्दन विरूपाच इत्यादि ॥ ६२ ॥ यस्कादिर्विदादिश्च शिवाद्यन्तर्गणौ ॥ ४२४ ॥

श्रीरा-टी—मन वर्जयतीति मन्वर्ज स चासौ अन् चेति मन्वर्जान् स च वर्म्मा च उच्चा च सेन् च (स्यादिन् सेन्) तत् मन्वर्जान् वर्मोचसेन् तस्य अध्वा च आत्मा च तद्वस्य न विकारोऽविकारस्तस्मिन् णा अविकारण। भावश्च कर्म च ते भावकर्मणी न भाव कर्मणी अभावकर्मणी तयोर्य अभावकर्मय पश्चात् अवि-कारणश्च अभावकर्मयश्च तत्तस्मिन्। याज्वन इति यज्वनोऽपत्यम् इत्यर्थे ष्णः न्वोर्लोपौतौ तेऽच्ये इति प्राप्तलोपोऽनेन निषिध्यते मन्वर्ज इति कि भाद्रसाम: सौसाम अपत्यम इति कि चर्म्मणा परिवृतो रथ. चार्म्मणो रथ' मन्वर्जानित्युक्ते वर्म्मणो वर्जने प्राप्ते वर्म्मग्रहणादाह भाद्रवर्म्मण' इति भद्रवर्म्मणोऽपत्यम् इति वाक्य' एव शार्ववर्मण' इत्यादि औच्च इत्यादि। यद्यपि मन्वर्जेत्यनेन नलोप प्रतिषेधा-दुणोऽपि प्रतिषेध: सिध्यति तथाप्युच्चा पृथग्ग्रहणम् एव ज्ञापयति अपत्यणाति-रिक्ते णे नलोपनिषेधो न भवति तेन औच्चा पदमित्यत्रानो विकारणे निषेधो न स्यात् चाक्रिण इति चक्रिणोऽपत्यम् इति वाक्य' न्येनो न नलोप.। अस्य सूत्रस्य योगविभाग: कर्त्तव्य: तेन क्वचिदन्यत्रापि तथाहि। ब्रह्मणो जातापत्यार्थे।

ब्रह्मणोऽपत्यणे नलोपो न स्यात् जातौ । ब्रह्मण' अपत्य ब्राह्मणो जातिः अपत्यण इति किं ब्राह्मी नामौषधिजाति जातौ किं ब्रह्मणोऽपत्य ब्राह्म इति । पणि गणि गाथि केशि विदथिनो वा तु हितनाम्न' । एषामपत्यणे नलोपो न स्यात् हितनाम्नस्तु वा । पाणिनोऽपत्य पाणिन गाथिन कैशिन, वैदथिन । हितनाम्नोऽपत्य हैतनाम । इनोऽकलाप्यादेरनपत्ये । इनो नस्य लोप स्यात् न तु कलाप्यादे, अनपत्यणे परे स्रग्विण इदं स्राग्विण मैधाविन अपत्ये तु मैधाव इत्यादि । कलाप्यादेस्तु कलापिन इद कालापम् कलापी पीठसर्पि षु कुथुमी तैतिली तथा । जाजली लाङ्गली स्यात् स ब्रह्मचारिशिखण्डिनौ । कलाप्यादौ शिलाली च नवशब्दाः प्रकीर्त्तिता । कर्मचर्मणोरताच्छील्यकोषयो । ताच्छील्यभिन्ने कर्मण' कोषभिन्ने चर्मणो नलोपो न स्यात् । कार्मण चार्म्मण, अताच्छील्यकोषयोरिति किं कार्म कर्मशील चार्म्म कोष । दण्डिहस्तिन णायने जिह्माशिवासिनोऽस्तु णेयायन्यो । दण्डिनो हस्तिनश्च णायने नलोपो न स्यात् जिह्माशिवासिनोस्तु क्रमात् णेयायन्यो दण्डिनोऽपत्य दाण्डिनायन, एव हास्तिनायनः जैह्माशिनेय वासिनायनि । अथर्वण णिके । अथर्वणा कृतो ग्रन्थ अथर्वा णमधीते वेत्ति वा आथर्वणिक । शैवा इत्यादि । शिवस्यापत्यमिति वाक्यम् । शिव तक्ष गङ्गा ककुभो मयूरो वतण्ड भूमी मुनि सन्धि यस्का । पृथा विपाशा तृणकर्ण कुम्भा मण्डूक बौधान भिमान चण्डा । इक्ष्वाक खञ्जावक रेखकर्णो खञ्जाल कोलच सुपिष्ट पीला, । खदूरको भूलिलता कपिष्टा पिञ्जारको ऋषिक कोकिलेला । पटको वर्त्तन, शोफो विरूपाक्ष कलन्धन' । मञ्जीरको जरत्कारुकहोडा लेख पोवरा' । अयस्थूणो वधिरक उत्कैया प्रोष्ठवर्त्तुलो । कृञ्चा जटिलको गोभिलकौतूकुर्य्यो भनन्दन' । खजूरको नभिम्लानः ककुत्स्थ, पौष्ठिकस्तथा । ऋषिषेण कुठारार्य्य श्वेत लोहितिका अपि । ऊर्णनाभश्च पिठक सपत्नौ प्रौष्ठिकस्तथा । तक्षशाला जलह्रद कुब्र स्नभक ऋषाय । अङ्गद्रा मानुषी संज्ञा नदीसञ्ज्ञा मता इह । भारद्वाजे तु गङ्ग स्यादात्रेये कगलो मतः । वायस, विकर्णोऽथ चोरङ्गद, परिषकोऽपि च । दशरथोऽथ कुलीनश्च कन्याया, णो भवेत्तथा । त्रिवेण्यास्त्रिवणो विश्रवसस्तु वरणोऽपि च । विश्रवणो मनोर्वा सन् गणसूत्रप्रमाणतः । इहादन्तानां पाठ, णिवाधनार्थ इग्रजिकारान्ताना स्त्रीत्यान्तानां णेयबाधनार्थः तचन् शब्दस्य कारुवाचकत्वात् णिवाधनार्थः तक्ष्णोऽपत्यं ताक्ष्णः मनवन्नान् इति अनन्तत्वात् नलोपो न स्यात् कुर्वादित्वात् ताक्ष्ण्यः । गङ्गाया

अपत्यं गार्ग्यः। अत्र्यादित्वात् गार्ग्येयः तिकादित्वात् गार्ग्यायणिः। पीलाया अपत्यं पैलः अत्र्यादेराकृतिगणत्वात् पैलेयः परे तु क्वचित् अपवादविषये उत्सर्गोऽपि निविशत इति न्यायात् इत्याहुः एवं शालाया अप्यूहनीयम् जरत्कारुशब्दः उदन्तत्वादिपाठात्। ऋषिविशेषशब्दस्यानन्तत्वात् ष्णिबाधनार्थः। कुरुवंशोत्पन्ना ऋषिवाचका अन्धकवंशोत्पन्ना वृष्णिवंशोत्पन्नाश्च सर्वे शिवादौ पठ्यन्ते। कुरौ नाकुलः साहदेवः ऋषिः। मूले वाशिष्ठ इति वशिष्ठस्यापत्यम् इति वाक्यम् एवं वैश्वामित्रः। अन्धकस्य स्वाफल्कः तौरसः। वृष्णौ वासुदेवः आनिरुद्ध इत्यादि। ननु सर्वेषां व्याकरणानां माहेशमूलकत्वेनाधुनिककुर्वन्धकवृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्यं शिवस्य सर्वज्ञत्वात् तत्र तेषां सङ्कलनं यद्वा ऋषेरनादित्वात् कुर्वन्धकवृष्णिवंशा एवानादयः। अतएव तेभ्यस्त्यविधानमित्यदोषः। अङ्गानां मानुषीसञ्ज्ञानां तावत्, चिन्तिताया अपत्यं चैन्तितः शैचितः गौतमः। अङ्गानां नदीसञ्ज्ञकानां तावत्, यमुनाया अपत्यं यामुनः इरावत्या अपत्यम् ऐरावतः नार्म्मदः इत्यादि। अङ्गा इति किं वासवदत्तेयः चान्द्रभागेयः शुङ्गस्यापत्यं शौङ्गो भारद्वाजः अन्यत्र शौङ्गिः। छगलस्यापत्यं छागलः आत्रेयः अन्यत्र छागलायनिः विकर्णस्यापत्यं वैकर्णो वात्स्यः अन्यत्र वैकर्णिः कन्याया अपत्यं कानीनः कर्णः व्यासश्च। विवेण्या अपत्यं वैवेणः। विश्रवसोऽपत्यं वैश्रवणो रावणः वैश्रवणश्च मनोरपत्यं इत्यर्थे ण तस्मिन्नती. सन् वा न इत् मानुषः पक्षे मानवः इति। विदादेर्गोत्रेऽनृषेस्त्वानन्तर्य्ये ट्ठ। विदस्यान्तरापत्यं वैदः और्वः स्त्रियां षित्वादीप् वैदी इत्यादि। विदादिर्यथा। विद उर्वो भरद्वाज किलात कुशिकौ हरित्। विश्वानर काश्यपापस्तम्बौ हङ्करथौ भरौ। कुचवारशरद्वन्तौ रथन्तरगविष्ठिरौ। ऋषिषेणश्च किन्दर्भौ मठरोऽथ विविष्टपि। पुनर्भूर्दुहितापुत्र प्रतिबोधननान्दरौ। हर्य्यश्च प्रियकौ धेनुर्मध्योगशुनकावपि। ऋतभागश्च किन्दासौ व्ययस्कार्कावपि। महाकुल पृदाकुश्च निषादोऽथ परस्त्रिया। परशुष्टु स्याद्गोपवल शिशुभामजविन्दव। अश्वावतारश्यामाकसुपर्णा ससुदीरिता। अत्र ये शब्दा अनृषिवाचकास्तेभ्यो गोत्रवाचकेभ्योऽन्तरापत्य एव ट्ठ। अतएव पौत्रः पौनर्भवः दौहित्रः इत्यादि। ननु कथं, वा कुशिकस्यान्तरापत्यं कौशिको विश्वामित्रः कथं वा व्यवहितापत्ये इन्द्रहूर्नाम सप्तमः काश्यपानां स्वे लुगिति चेत् सत्यं क्वचिदपवादविषयेऽप्युत्सर्गो निविशत इति न्यायात् ऋषित्वेन भवितव्यम् अथवा तस्येदमित्यर्थे ण्येन। परस्त्रिया अपत्यं पारशवः ट्ठ परशमादेशः। अत्र परस्त्री-

# ४२५ । संख्यासंभद्रान्मातुर्ङुर्णो ।

संख्या स-भद्रात् ५।, मातु ६।, ङुर् ।१।, णो ७।।

द्वैमातुरः ।

---

शब्देन भिन्नजातीया स्त्री वाच्या अतएव पारशवो विदुर तथाच पारशव. पुमान् परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकार । अर्थान्तरे तु पारस्त्रे- णेय बाह्वादेराकृतिगणत्वात् विदस्यान्तरापत्य वैदिरित्यादौ णि न तु ऋषिणा । यद्यपि शिवादित्वात् णो कृते वैद इत्यादि सिद्धे विदादे पृथक् ट्नविधानं मवङ्बाध- नार्थम् । उत्सादे । उत्सादिष्व स्यात् पृथक्योगादपत्यसामान्ये । उत्सस्यान्तरापत्यम् औत्स जानपद इत्यादि उत्सादिर्यथा—उत्सो जनपदविनदौ धन्वा विकच महा- नट तरुण धेनु । भरत महानस पृथिवी टेव पङ्क्तिर्जगती कुरुपञ्चालम् । उद- प्राणो महापाण ककुभन्तनुनो महान् । इन्द्रावसान विकारविष्टबुष्णिगनुष्टभ' । उशीनर सुवर्णश्च भल्लकीयो रथन्तर । वृहन्मध्यन्दिनश्चाथ सत्वतो नुण् भवेदिह । उदस्थानन्तु देशे से वयस्कोऽशे वृषन्मत । ग्रीष्मोऽवृत्ते समाख्यात शेष त्वयं प्रयोगत । इह कुरुशब्दस्य पाठात् कुरोरपत्यम इत्यर्थे कौरव इति जयादित्य । सत्वतशब्दो वन्वन्तस्य ट्न नुण् सत्वतोऽपत्य सात्वन्त पाठबलात् उदस्थाने भव औदस्थानो देश । अदेशे तु उदस्थान' कश्चित् तस्यापत्यम् औदस्थानि' । वृषद- शब्दोऽशे वाच्ये ट्न वार्षद' अनशे त वार्षद ण । ननु णट्नयो को विशेष इति चेत सत्यं णान्तवार्षदश मङ्ग वार्षदक' । ट्नान्तस्य तु वार्षद इति विशेष' । अवृत्त इति वृत्तं छन्द तस्मिन ग्रैष्म अवृत्त इति कि ग्रैष्मी त्रिष्टविति ऋतनचवादिति ण तस्माद्विकारे मयट ग्रैष्ममय ट्नान्ताद्विकारे ग्रैष्ममिति विशेष ॥ ४२४ ॥

संख्यावाचकेभ्य समो भद्राच्च परस्य मातृशब्दस्य ङुर् स्यात णो ङित्वादन्त्यस्य स्थाने । ङुरो रेफस्य विसर्गाभाव. स्पष्टार्थ' द्वयोर्मात्रोरपत्य द्वैमातुर' । अत तद्धि- तार्थे विषये द्विगौ शेषत्वात णो कृते एकपदीभावात द्वेरिकारस्य वृद्धि' । एवं तिसृणा मातृणामपत्य त्रैमातुर', षणा मातृणामपत्य' षाण्मातुर' समातुरपत्य' सांमातुर' एव भाद्रमातुर' ॥ ४२५ ॥

दुर्गा-टी—संख्या च सम् च भद्रश्च ततस्मात् संख्यावाचकात् समो भद्राच्च मातृशब्दस्य ङुर् स्यात् णो । ङित्वादन्त्यस्य लोपत्वान्न त्रि' द्वैमातुर इति द्वयोर्मात्रो- रपत्यमिति वाक्यं शेषात् णः एवं षाण्मातुर' ॥ ४२५ ॥

## ४२६ । नन् पुंस्त्रियोः ।

नन् ।१।, पुंस्त्रियो ६॥ ।

**पौंस्नः स्त्रैणः ।**

## ४२७ । कुञ्जादेर्णायन्योऽस्त्रीव्व्येऽपत्ये ।

कुञ्जादे ५।, णायन्य १।, अस्त्रीव्व्ये ७।, अपत्ये ७। ।

**कुञ्जादेरपत्यार्थे णायन्यः स्यात् न तु स्त्रियां न च व्व्ये । कौञ्जायन्य आश्नायन्यः । स्त्रीव्व्ये तु । कौञ्जायनी कुञ्जायनाः ।**

---

अनयोर्नन् स्यात् णे निरवादन्ते । नकारोऽदन्त । पुंसोऽपत्य पौंस्न तत्र णे परे पुमस्शब्दस्य ननि कृते नकारस्य प्रकृत्यवयवत्वेन दान्तत्वाभावात् सकारस्य लोपो न स्यात् । यर्योर्लोप इति नकारस्य अकारलोप । स्त्रिया अपत्य स्त्रैणः एवम् इदमाद्यर्थे णे कृतेऽपि नन् स्यादेव । तेन पुंस इद पौंस्नम् कर्म । स्त्रिया इद स्त्रीणा समूहो वा स्त्रैणम् ॥ ४२६ ॥

श्रीरा-टी—पुमांश्च स्त्री च ते तयो ॥ ४२६ ॥

स्त्री च व्व्यश्च स्त्रीव्व्य न स्त्रीव्यम् अस्त्रीव्व्य तस्मिन् । कुञ्जादिर्नडाद्यन्तर्गण । कुञ्जस्यापत्य कौञ्जायन्य, णित्वाद् वृद्धि । ब्रध्नस्यापत्य ब्राध्नायन्य स्त्रीव्व्ये तु कुञ्जस्य स्त्र्यपत्य कौञ्जायनी कुञ्जस्यापत्यानि कौञ्जायना इत्युभयत्र नडादित्वात् णायन एव । केचित्तु कुञ्जादे प्रथमापत्ये णायन्य णायनोऽपि न स्यात् अदन्तत्वात् णिरेव तेन कुञ्जस्य प्रथमापत्य कौञ्जिरिति प्राहु । कुञ्जादिस्तु । कुञ्ज ब्रध्न शङ्ख भस्मन् लोमन् गण शट शाक शुण्डा शुभ्रा विपाश स्कन्द स्कम्भ इत्यादि ।१३। तिकादिर्नडाद्यन्तर्गणत्वात् अपत्यार्थे णायन तदन्तस्य प्रयोगाभावाद्यवद्दारीतिवत् णायनान्तात् स्वार्थे णि । यथा तिकस्यापत्य तैकायनि । तिकादिस्तु । तिक कितव सञ्ज्ञा वाल शिखा शाट्या कौशल्या सैन्धव मुञ्ज रूप्य ग्राम्य नीड कुरु देवरथ तण्डिल औरस लाङ्गट कौकत्व चत्रियार्थ कौरव्य गोकर्ण भौरिकि भौलिकि तैकयत चैकयत वैकयत सैकयत ध्वाजयत चन्द्रमस् उरस् अमित्र शुभ्र गङ्गा वारुणा बन्ध आवटी वद्यका खल्यका लोमका सुयामन उदन्य यज्ञवल्क गवेठ काकण्टा काक लङ्का चर्मिण इत्यादि । ४७। एत्र त्यदादेर्नडाद्यन्तर्गणत्वात् णायन, तदन्तस्य प्रयोगाभावात्

स्वार्थे ष्णि.। यथा तस्यापत्य ताद्रायणि एव याद्रायणि। कैमायनि एवञ्च त्यदादे ष्णिवायन्तर्गेणत्वात् ष्ण। यथा त्यस्यापत्य त्याद याद कैम ॥ ४२७ ॥

श्रीरा टी—स्त्री च ब्व च स्त्रीब्व न स्त्रीब्वम् अस्त्रीब्व तस्मिन्। अपत्यग्रहण पूर्वेव सामान्यविधानात् अय नडाद्यन्तर्गेण णायन्येन णायनो बाध्यते तेनानन्तरापत्ये कौञ्जि, कौञ्जायन्य इति कुञ्जस्यान्तरापत्यमिति वाक्यम् एव ब्राध्नायन्य। कुञ्जादि-र्यथा। कुञ्जो ब्रध्नो बुधो लोम भस्म शङ्खा शटो गण। शौक शुभ्रा विपाशा च शुण्डा स्कन्ध प्रकीर्त्तित। तिकादेर्नायनिर्वृषादेस्तु यम् च। तिकादेरपत्ये नायनि स्यात् वृषादेस्तु नायनेर्यम् च न इन्। तिकस्यापत्य तैकायनि कितवस्यापत्य कैतवायनि। तिकादिर्यथा। तिककितवौ वस तौतिल नील भौरिकि भौलिकि वस्तारव्य चौपयत कुरुसञ्ज्ञा यज्ञ गङ्गा लाङ्कट शूद्रय मुञ्जम्। खल्यका लोमका कण्य ग्राम्यध्वाजायता उर। शाव्या बालशिखा वैङ्कयत सैकयतस्तथा। चैकयत स्वग्रामोऽथ कौरव्य क्षत्रिये मत। गौकक्षश्चन्द्रमाश्चे जयती रक्षान्तदा मता। द्रच णान्ता दैवरथोऽमिता दन्य प्रकीर्त्तितम्। क्षत्रियार्थे कौरव्य पठ्यते तेन जनपदख्यान्तस्य न तु कुर्वादिख्यान्तस्य, स तु ब्राह्मणवचनस्तस्मात् ण्योर्लुगेव जनपद-स्यात्तु कुरोरपत्य युवा कौरव्यायणि क्षत्रिय। रक्षान्तात्तावत् गौरक्षस्यापत्य गौरक्षायणि कार्मार्य्यायणि कुर्वादित्वात् कार्मार्य्यः। कौशली शब्दो जनपदवचन। ननु कथ कौशल्यायनि वल्लभामिति भट्टि। उच्यते नृजातेरिति ईपि कौशल्या-यनी तस्यापत्य युवा इत्यर्थे आवादित्वात् ण्यस्तस्य लुक विधाय स्त्रीत्वस्य लुकि कौशल्यायनिरिति परे वस्तुतस्तु तिकादेराकृतिगणत्वात् नायनिरिति यथा च कौशल्यकार्मार्य्याभ्यश्चेति पाणिनिसूत्रम्। वृद्धादनपत्याद् वा पुत्रान्ताद् वा किलादे-स्तुकश्च अनपत्यान्ताद् वृद्धसञ्ज्ञकात् नायनिर्वा स्यात् पुत्रान्तात् वा किलादिभ्यश्च तेषा तुकन् च न इत्। आम्रगुप्तस्यापत्यम् आम्रगुप्तायनि नापितायनि एव त्यादायनि तवापत्य त्वादायनि युवयोर्युष्माक वा अपत्य यौष्मदायनि कथ भारतायनि वाशब्दस्य व्यवस्थावाचित्वात् पक्षे आम्रगुप्ति नापिति नापित्य त्याद-स्तस्यापत्य युवा त्यादायनि वृद्धादिति कि दैवदत्ति याज्ञदत्ति औपगव। अनपत्या-दिति किम् औपगविः पुत्रान्तात् गार्गी पुत्रकायणि, गार्गी पुत्रायणीति पूर्वेणैव सिद्धे कविधानार्थ, पाठ आयनाभावपक्षे गार्गीरिति पुत्रीरिति रूपत्रय वाकिलादि-स्तावत् वाकिलकायनि, वाकिलायनि वाकिलि। वाकिलादिर्यथा वाकिलशर्मि-ग्रावेठौ काकलङ्का तथैव च। कार्कव्यवर्मिणावत्र षड् बुधै. परिकीर्त्तिता.। परे

तु कन् विकल्पयन्ति तन्मते वाकिनादेरेवेदम्। अवृद्धादायनिर्वा। वाशब्दो बहुलार्थः वृद्धसंज्ञकभिन्नादायनिर्वा स्यात् अपत्ये। ग्लुचुकस्यापत्यं ग्लुचुकायनि पक्षे ग्लौचुकि। आहिचुम्बकायनि आहिचुम्बकि बाहुल्यात् क्वचिन्न भवति तेन दक्षस्यापत्यं दाक्षि प्लाक्षिरित्यादि। यूनि लुक् नायने षास्य। नायने परस्य यूनि विहितस्य षास्य लुक् स्यात्। तिकस्यापत्यं तैकायनि तस्यापत्यं युवा तैकायनिरित्यादि। कुलाददादिनौ येन येयकञ् दादेस्त्वीनः। दादिभिन्नात् कुलात् य इन येयक एते स्युः दपूर्वादीन एव। कुलस्यापत्यं कुल्य कुलीन कौलेयक बहुकुल्यः बहुकुलीन बाहुकुलेयक। बहुत्यस्याद्यवात् दादेस्तु आढ्यकुलीन श्रोत्रियकुलीन। दुर्महद्भ्यां येयकनीनौ वा। आभ्यां परात् कुलात् येयकनीनौ क्रमाद्वा स्याताम्। दौष्कुलेयक। अवृद्धादित्वात् दौष्कुलेय पक्षे दपूर्ववात् दुष्कुलीन महाकुलीन उत्सादित्वात् माहाकुल पक्षे महाकुलीन। क्षत्रादियो जातौ। क्षत्रशब्दाज्जातावपत्ये इय स्यात् क्षत्रिय जाति। जातावित्ति किं क्षात्रि। सौवीरगोत्रात् फाण्टाहृतिमिमतात् णणायनौ। सौवीरगोत्रात् फाण्टाहृतिमिमताच्च णणायनौ स्यातां फाण्टाहृतेरपत्यं फाण्टाहृत। सौवीरगोत्रत्वात् यून्यस्य विषय फाण्टाहृतायनि एव मिमतस्यापत्यं मैमत मैमतायनि। परे तु अल्पाच्छन्दस्य व्युत्क्रमनिर्देशात् यथासंख्यमिच्छन्ति तन्मते फाण्टाहृत मैमतायनि इत्येव सौवीरगोत्रादिति किं फाण्टाहृतायन। मैमतायन। देवपृथिवीभ्यां ष्यणौ वा। आभ्यां क्रमात् ष्यणौ वा स्यातामपत्ये। देवस्यापत्यं दैव्य पृथिव्या अपत्यं पार्थिव स्त्रियां दैव्या पार्थिवा उत्सादित्वात् दैव पार्थिव दैवी पार्थिवी। यामन्लादौ लोमान्तात्तु ष्वे। यामन् इत्यन्तात् स्यात् लोमन्नन्तात्तु ष्वे। अश्वत्थामा नाम कश्चित् तस्यापत्यम् अश्वत्थाम उडुलोम्नोऽपत्यानि बहूनि उडुलोमा। ष्वे किम् औडुलोमि औडुलोमी। रूढाद्राज्ञि च ट्र षान्त्वाङ् मगध कलिङ्ग शूरमसात्। अपत्ये राज्ञि च देशतुल्याख्यक्षत्रियात् ट्र स्यात् द्व्यञ् मगधादेस्तु ष पञ्चालानामपत्यं राजा वा इत्यर्थे पाञ्चाल वैदेह। द्व्यजादेस्तु आङ्ग वाङ्ग सौह्म मागध कालिङ्ग शौरमस। रूढादिति किं पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालि। वृद्धे कोशलाजादादमन्यारिशाल्वेयात् ष्यङ्। गान्धारिशाल्वेयभिन्नात् वृद्धादिकारात् कोशलादजादाच्चापत्ये राजनि च ष्यङ् स्यात् ट्रणयोरपवादः आम्बष्ठस्यापत्यं राजा वा आम्बष्ठ्य सौवीरस्यापत्यं राजा सौवीर्य। कुन्तेर्जनपदक्षत्रियस्यापत्यं राजा वा कौन्त्य अवन्तेरावन्त्य, कोशलस्य कौशल्य, आजाद्यः स्त्रियामजादित्वादाप् आजाद्या।

**४२८। गर्गयस्कविदादि-भृग्वत्रि-कुत्साङ्गिरो वशिष्ठ गोतम-रूढ़ाल्लुक् ञ्वेऽस्त्रियाम्।**

गर्ग—रूढात् ५।, लुक् ।१।, ञ्वे ७।, अस्त्रिया ७।।

**देशतुल्याख्यः क्षत्रियो रूढः। एभ्यः परेषामुक्ताना त्यानां ञ्वे विहिताना लुक् स्यात् न तु स्त्रियाम्।**

**गर्गाः वत्साः यस्काः लह्या. विदाः उर्व्वाः भृगव अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः अङ्गाः वङ्गाः कलिङ्गाः। स्त्रियान्तु भार्गव्यः।**

---

कौन्त्यावन्त्यर्योश्च कुन्ती अवन्ती कुरुकुन्त्यवन्तिभ्योऽपत्यस्य लुकि नृजातेरिति ईपि ङित्वात् पतिपुत्रादौ यङ् ई आम्बष्ठीपति. आम्बष्ठीपुत्र इत्यादि। गान्धारिशाल्वेयास्तु गान्धार., शाल्वेय पूर्वेण ट्न। कुरुन्यादिभ्यो ण्य पाण्डोर्डिश्च। कुरोर्निपूर्वशब्देभ्यो जनपदेभ्यो ण्य स्यात् डिश्च पाण्डो। कुरोर्जनपदस्यापत्य राजा वा कौरव्य कथ तर्हि कुकुरकौवरस्त्रिय तथा सरश्चन्तु कौरवा इति उच्यते जनपदाविवक्षाया विषयो देश इत्यर्थे ण्ण वा तस्येदमित्यर्थे वा। कथमक्षत्रियकौरव्या. परश इत्युपचारात्। न्यादि निषधस्यापत्य राजा नैषध्य नैपुण्य नैषध्य पाण्डोर्जनपदस्य क्षत्रियस्यापत्य राजा वा पाण्ड्य डिति टिलोप। रूढ इति कि महाभारते पाण्डोरपत्य पाण्डव। न हि तस्य पाण्डुर्देश उडुम्बरादि ण्णि। रूढाद्रान्नि चेति ट्नस्य बाधक उडुम्बरस्य जनपदस्य क्षत्रियस्यापत्य राजा वा। औडुम्बरि तैलखलि। उडुम्बरिस्तिलखली मद्रकारी युगन्धर। भूलिङ्ग. शरदण्डश्च कालकूटोऽश्मकस्तथा। प्रत्यग्रहे नव प्रोक्ता परे शिष्टप्रयोगत। कैकय प्रलय मित्र यूना ण्णिच्च्ये यादेरिय। एषां यादेर्भागस्य ण्णिच्च्ये इयादेश स्यात्। कैकयस्यापत्य कैकेय प्रलयादागत प्रालेय, हिम मित्रयोर्भाव मैत्रेयिका गोत्रचरणात् णक ॥ ४२७ ॥

गर्गश्च यस्कश्च विदश्च गर्गयस्कविदा ते आदयो येषा ते गर्गयस्कविदादय.। आदिशब्दस्य प्रत्येकेन सम्बन्धात्। गर्गादियस्कादिविदादय इत्यर्थ। गर्गयस्कविदादयश्च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिरस् च वशिष्ठश्च गोतमश्च रूढश्चेति तस्मात्। अत्र अपत्ये इत्यनुवर्त्तते इत्यत आह उक्ताना त्यानामिति। अपत्यार्थ प्रत्ययाना-

मित्यर्थे । लुक्करणात् त्यलोपे त्यलक्षणमिति न्यायात् वृद्धादिर्न स्यात् । गर्गस्यापत्यानि गर्गा एव वत्सा आध्या णस्य लुक् । यस्कस्यापत्यानि यस्का एवं लह्याः विदस्यापत्यानि विदा एवम् उर्वा भृगोरपत्यानि भृगव एभ्य णस्य लुक् । अत्रेरपत्यानि अत्रय अत्र णेयस्य लुक् । कुत्सस्यापत्यानि कुत्सा अङ्गिरसोऽपत्यानि अङ्गिरस वशिष्ठस्यापत्यानि वशिष्ठा गोतमस्यापत्यानि गोतमा एभ्योऽपि णस्य लुक् । र्व्व किं गार्ग्य गार्ग्यौ एव सर्वत्र । एकवचने द्विवचने च प्रत्ययस्थिति । देशतुल्याख्य इति । देशेन तुल्या आख्या नाम यस्य चवियस्य स देशतुल्याख्य चवियो रूढ इत्यर्थ । यथा वङ्गो देशविशेष वङ्ग पालयतीति ढघेकादिति अनित् णे वङ्गो राजा । वङ्गस्यापत्यानि वङ्गा एवम् अङ्गा कलिङ्गाः मत्स्या पञ्चाला विदेहा मगधा इत्यादय एभ्योऽपि णस्य लुक् । एषामपि एकत्वद्वित्वयो वाङ्ग वाङ्गौ इत्यादयो बोध्या । देशतुल्याख्य इत्युपलक्षणम् कदाचित् प्रसिद्धक्षवियोऽपि रूढो वा वक्तव्य । तथा च गलितवयसामिक्ष्वाकूणामिद हि कुलव्रतमिति । आचक्ष मर्त्ता वशिना रघूणा मन परस्त्रीविमुखप्रवृत्ति इति च रघु । पायादपायात् सतत भवन्त नाथो रघूणामथवा यदूनामित्युद्भट । स्त्रियान्तु भर्गो. स्त्र्यपत्यानि भार्गव्यं अत्र णस्य न लोप । अपत्यार्थप्रत्ययानामिति किं भृगोरिमे भार्गवा मन्त्रा इति अत्र इदमर्थे कृतस्य णस्य लोपो न स्यात् एव प्रिया गर्गा यस्य स प्रियगर्ग अत्र समुदायस्य एकत्वेऽपि गार्ग्यशब्दस्य बहुत्वे प्रयुक्तत्वात् णप्रस्य लोप स्यादेव । एवं प्रियो गार्ग्यो येषा ते प्रियगार्ग्या. अत्र समुदायस्य बहुत्वेऽपि गार्ग्यशब्दस्य एकत्वे प्रयुक्तत्वात् णप्रस्य लोपो न स्यात् । एव प्रिययस्कः प्रिययस्का इत्यादयो बोध्या । यस्कादिस्तु । यस्क लभ्य अय स्थूल तृण कर्णभ नन्दन बहिर्योग कर्णाटक पिण्डी जङ्घावक सूक्त वचस् अग्नर जङ्घारथ उत्कास कटक गन्तुक विष्णुपद उपरि मेखला क्रोष्टू काख क्रोष्टूपाद शीर्षमाण शीर्षमाय पदक कर्षक बिशिक्षुवि अजवस्ति भडिल भण्डिल भडित खरप पुष्करसद् इति । ३३ । विदादिस्तु । विद पुत्र उर्व कश्यप कुशिक भरद्वाज किलात किलदर्भ विश्वानर ऋष्टिषेण ऋतभाग हर्यश्व प्रियक अयस्तम्भ कुचराव शरद्वत् शुक्र धेनु इति । १९ । यस्कादिर्विदादिश्च द्वावेव शिवाद्यन्तर्गणौ । ततश्च द्वाभ्यामेकगणोक्त्यापि इष्टसिद्धौ गणद्वयकरणं प्राचामनुरोधात् ॥ ४२८ ॥

श्रीरा टी—गर्गश्च यस्कश्च विदश्च ते आदयो येषा ते गर्गयस्कविदादय ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च गोतमश्च रूढश्च तत्तस्मात् । रूढशब्दस्य

व्युत्पत्तिमाह देशतुल्याख्य इत्यादि तथाच गर्गादि ष्णर् यस्कादि ष्णा ष्णायनि ष्णि ष्णेया विदादिट्र अचि ष्णेय भृगुकुत्साङ्गिरो वशिष्ठगौतम ष्ण रूढ ष्णाट् ष्यड् ष्यष्णि इत्येषां व्वे लुगित्यर्थः। क्रमेणोदाहरति गर्गा इत्यादि। क्रदयोस्तु गार्ग्य, गार्ग्यौ यास्क, यास्कौ वैद वैदौ भार्गव भार्गवौ आत्रेय आत्रेयौ कौत्स कौत्सौ आङ्गिरस आङ्गिरसौ वाशिष्ठ वाशिष्ठौ गौतम गौतमौ आङ्ग आङ्गौ इत्यादि। एव व्वे लुगिति किं गर्गाणां धनं गर्गधनम्। अङ्गवनमित्यादि व्वे विहितानां त्यानामिति किं गार्ग्यश्च वात्स्यश्च आग्निवेश्यश्च ते गार्ग्यवात्स्याग्निवेश्या एव गार्ग्यौ च वात्स्यौ च आग्निवेश्यौ च ते गार्ग्यवात्स्याग्निवेश्या इत्यादौ लुग् न स्यात्। पारैकदेशिनस्तु एकवचनान्तानामपि द्वन्द्वसमासे वाक्ये समासे एकार्थाभावात् सहभावविवक्षाया बहुत्वे लुगित्याहु। तेन गर्गवत्साग्निवेशा इति उदाजह्रुः। प्रियवाङ्गा इत्युदाजह्रुरिति। गर्गविदादी उक्तौ। यस्कादिर्यथा। यस्को लह्यवचोयस्तृणकलन्दतृणकर्णा। भण्डितखरभाडा तथा रूपा भाङ्सदा मत्त। क्रोष्टु मायो वहिर्योग कण्ठलोहारकर्षको। क्रोष्टुमाला त्रिपुट परिमेखलपादका कर्णाटक क्रोष्टुपादस्तथा कटुकमन्थक। वकशल्क शीर्षमाय पिण्डीजङ्घस्तथैव च। जङ्घारथ शीर्षमालज्जारश्चाऽसुरास्तथा। उपकाशोऽज वस्तिश्च विशि चुदिरिमे तथ। यस्कादय षट् शिवादय भण्डितादय पञ्च नडादय अजवस्त्यादयस्त्रय अत्र्यादय। शेषाणामदन्तत्वात्। यस्कादेराकृतिगणत्वात् पुष्करसच्छब्दोऽपि तेन पौष्करसादि पौष्करसादो व्वे पुष्करसद। बह्वचो गोत्रस्य प्राच्यभरतेषु। बह्वच, शब्दात् प्राच्यभरतगोत्रविहितस्य त्यस्य लुक् स्यात् व्वे। पन्नगारस्यान्तरापत्य पान्नागारि पान्नागारी व्वे पान्नागारा। भरतगोत्रे यौधिष्ठिरि यौधिष्ठिरी युधिष्ठिरा। एवमार्जुनि आर्जुनी अर्जुना। बह्वच इति किं भैमि, भैमी भैमय। अगस्त्यकुण्डिन्योरगस्तिकुण्डिनौ च। आभ्यां गोत्रत्यस्य व्वे लुक् स्यात् लुकि सति अगस्तिकुण्डिन्योरगस्तिकुण्डिना वादेशौ क्रमात् स्त,। अगस्त्यस्यान्तरापत्यम् ऋषिष्ण आगस्त्य आगस्त्यौ व्वे अगस्तय। कुण्डिन्या अपत्य गर्गादित्वात् कौण्डिन्य कौण्डिन्यौ कुण्डिना। तिककितवादेश्च व्वे। गोत्रविहितस्य त्यस्य चे लुक् स्यात् व्वे। तैकायनश्च कैतवायनश्च ते तिककितवाः। उपलभका कुम्भकुभा उरोलङ्कटा अग्निवेषकशेरुका वङ्कुरभण्डीरथा, पापकनरका वररथा' श्वशुरपरियुङ्गा, लङ्काशान्तमुखा कृष्णाजिन कृष्णसुन्दराः भष्टकपिष्ठिला इत्यादि। चे किं तैकायनयः कैतवायनयश्च व्वे किं

तैकायनिश्च कैतवायनीश्च तैकायनी कैतवायनी। उपकादिभ्यो वाद्वे च। उपकादिभ्यो द्वन्द्वे विहितस्य गोत्रप्रत्ययस्य अद्वे चे च द्वन्द्वे लुक् स्यात् वा। उपका औपकायना नमका नमकायना, औपकायनाश्च नामकायनाश्च उपकनमका, औपकायननामकायना। उपकादिर्यथा। उपकनमकसुपिष्टमयूर जटिलकबधिरकक्षणिकककर्णम्। पिष्टकपिञ्छिलभावी जङ्घानुजकमलाखनकलसी कण्ठम्। कासकृत्स्नौ निदाघश्च मन्दक कृष्णसुन्दरं। कृष्णादिनावतारश्च सष्टक कृष्णपिङ्गल। उन्दुकग्राह्कण्ठौ चाकटावककुसीतकौ। अनुलोमा प्रतिहत प्रताली जपयस्तथा। उपकनमकौ नडादौ सुपिष्ठादय शिवादय। अनुलोमनग्राह्वादि शेषाणामदन्तत्वात् णिप्राप्ति। द्वन्द्वे किं औपकायनश्च नामकायनौ च औपकायननामकायना गर्गविदादय कुरयो ये। गर्गादेर्विदादेश्च ये वर्त्तमानस्य कुरयोर्विहितस्य गोत्रप्रत्ययस्य लुक् स्यात् वा। गार्गस्य गार्गयोर्वा धनम् गर्गधनं गार्गधनम् एव वैदस्य वैदयोर्वा धन विदधन वैदधनम्। रूढात् काम्बोजादेर्नित्यम्। काम्बोजादे रूढात् उत्पन्नराजापत्यप्रत्ययस्य लुक् नित्य स्यात्। काम्बोजजनपदस्यापत्य राजा वा काम्बोज काम्बोजौ काम्बोजा। काम्बोजं केवलचोलभोजनिन्दखशाः शव इत्यादि। स्त्रियाम् कुरुकुन्त्यवन्तिभ्य। एभ्यो राजापत्योत्पन्नप्रत्ययस्य स्त्रिया लुक् स्यात्। कुरोर्जनपदस्यापत्य स्त्री राज्ञी वा कुरू उत इत्यादिना ऊप् एव कुन्ती अवन्ती। ख्यडो लुकि नृजातेरित इति ईप्। अतश्चाप्राच्यभर्गयौधेयादेः। प्राग्गोत्रभर्गादियौधेयादिभिन्नाद्राजापत्योत्पन्नस्य अतस्यस्य स्त्रिया लुक् स्यात्। शूरसेनस्यापत्यं स्त्री राज्ञी वा शूरसेनी इडविडोऽपत्य स्त्री राज्ञी वा इडविडौ इत्यवं ट्रस्य मद्रस्यापत्यं स्त्री राज्ञी वा मद्री दरदोऽपत्य स्त्री राज्ञी वा दरद् ण्यस्य वा लुक् लुकि जातेरत इति ईप् मद्रशूरसेनाभ्याम्। अत इति किं कौशल्या आजाद्या। अप्राच्यभर्गयौधेयादेरिति किं पाञ्चाली वैदेही मागधी आङ्गी वाङ्गी सौङ्गीत्यादि। भर्गादे: भार्गी कैकेयी। कथ प्राक् कैकयीतो भरतस्ततोऽभूत् आद्यप्रकृतेर्ङ्ग नदादिपाठात् भागवृत्ति.। भर्गादिर्यथा भर्ग. करूष' कश्मीर. कौरव सुस्थकेकयौ। शाल्वोऽनुभवश्चैव भर्गादि: परिकीर्त्तित। यौधेयादे यौधेयी शौभ्रेयीत्यादि। स्त्रियामिति चकारेणानुकर्षणान्न व्यमव। नगोपरणादे.। गोपरणादेर्गोत्रप्रत्ययस्य लुङ् स्यात्। अय विदाद्यन्तर्गत। गोपरणो गोपरणा गोपरणस्य गोपरणयो कुलं गोपरणकुलमित्यादि। उक्तोऽपत्याधिकार.। णो वेत्त्यादौ यमादिभ्यस्त्व-प्रत्ययवत्। स्यायन्ताद्ले. णः स्यात् वेत्त्यादिष्वर्थेषु यमादिभ्यस्तु अपत्यवत् त्या: स्यु.। वेत्त्यादि-

४२८। ढघे कात् ष्णीककञ्खीनेयाश्चानितश्च।

ढ घे ७।, कात् ५।, ष्णीक कञ् खीन इया १।।।, च।१।, अनित १।।।, च।१।।

कात्परा एते पूर्वे च सेतोऽनितश्च स्युः ढे घे च वाच्ये।

तर्कं वेत्ति अधीते वा तार्किकः, पदकः, क्रमकः, वैयाकरणः। वाचा कृत वाचिकं, पाणिनीयम्। शक्त्या युध्यतेऽसौ शाक्तीकः, याष्टीकः, तिष्येण युक्ता रात्रिः तैषी, पौषी; क्षत्राय साधुः क्षत्रियः, यज्ञाय हित यज्ञियं, मथुराया आगतः माथुरः, इह भव ऐहिकं, कदाचिद्भव कादाचित्कं, ग्रामीणः, ग्राम्यः, मूर्द्धन्यः, नाटेयः, शालीयः, नागरः, अग्रः।

---

यथा। वेत्ति अधीते रक्त युक्त काल इष्ट मास परिहृतो रथ। उद्धृत संस्कृत भक्ष्य व्रतश्रायिता पौर्णमास्यस्मिन। अस्य देवसमूहविषयी देश। अस्य प्रागर्थस्य सग्राम। तदस्त्यस्मिन् देशे निवृत्त निवास। अदूरभव विकार अवयवभव व्याख्याना प्रायभव जात कृत क्रीतलब्ध कुशल दृश्यते सम्भूत साधु पुष्यते पच्यमानम् उप्त देयमृण कर्मी व्याहरति अस्य सोढम् आगत प्रभवति गच्छति अभिनिष्क्रामति। अधिकृत्य कृती ग्रन्थ अस्य निवास अस्याभिजन अस्य भक्ति गृह्यते श्रूयते उच्यते प्रोक्त उपज्ञात कृती ग्रन्थ इदम्। यमादिस्तावत्। यम आदित्य अग्नि कलि दिति अदिति पृथिवी देवम् अपथाद्यादिस्थानान्त उत्सादयश्च पश्चादिर्व्यक्त, कुर्वादौ। उदाहरणानि तत्र तत्र वक्ष्यामि। दित्यदितिभ्या न ष्णेय। आभ्या वेत्त्यादौ ष्णेयो न स्यात्। दितिं वेत्ति अधीते वा दैत्य आदित्य इत्यादौ ष्ण्य न दैतेय इति॥ ४२८॥

ढश्च घश्च ढघं तस्मिन्। ष्णीकश्च कञ् च खीनश्च इयश्च ते। न विद्यते इत् येषां तेऽनितः। ष्णीककञ्खीनेयाश्चेति प्रत्ययसम्बन्धचकारेण पूर्वोक्ता णिप्रभृतयः प्रत्ययाः समुच्चीयन्ते। अनितश्चेति प्रत्ययसम्बन्धचकारेण सेत इति विशेषणान्तरं समुच्चीयते। ततश्च इह चत्वारः पूर्वोक्ता, सप्त इत्येकादश प्रत्ययाः प्रयोगानुसारेण सर्वकारकेभ्य, कर्मणि कर्त्तरि च वाच्ये स्युरित्यर्थः। ते च प्रयोगानुसारेण सर्वकारकेभ्यः कर्मणि कर्त्तरि च वाच्ये स्युरित्यर्थ.। ते च प्रयोगानुसारेण क्वचित् इद्रहिता, स्युरित्यर्थः। ननु अन्येषां मते वेत्त्यधीते वा इत्यर्थे तर्कादि, णिकादि, क्रियते इह अर्थानुक्तौ तर्कं

यश्च वा स्यात्। दूतस्य भाव क्रिया वा दौत्यं दूत्य वाणिज्यं वणिज्यं पक्षे दूतत्वं वणिक्‌त्व प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। दूत्या भाव क्रिया वा दौत्य दूत्य दूतत्वमिति तथा चागतप्रियकथैव दौत्यमिति भारवि । अन्ये वणिक्‌-शब्दस्य स्त्रीत्वमिच्छन्ति वाणिज्या वणिज्येति। दूतवणिग्भ्याञ्च वक्तव्यमिति न्यास-कार । सखिस्तेनाभ्या नलोपश्च। योगविभागात् ष्णो नानुवर्त्तते ष्यन्ताभ्यामाभ्यां भावक्रिययोर्य. स्याद्वा स्तेनस्य नलोपश्च। सख्युर्भाव क्रिया वा सख्य स्तेनस्य भाव क्रिया वा स्तेय पक्षे सखित्व स्तेनत्व परे तु ब्राह्मणादित्वात् स्तैन्यमिति वदन्ति। घुपूर्वे गन्तहायनान्तयुवादिभ्य ष्णः । ष्यन्तात् घुपूर्वेगन्तात् हायनान्तात् युवादेश्च तयो ष्णः स्याद्वा। मूले गौरवमिति घपूर्वेगन्तत्वात् ष्णः एव पाटवमिति। पक्षे गुरुता गुरुत्वमिति पटुता पटुत्वं घुपूर्वेति किं शवुता शवुत्व द्विहायनस्य भाव क्रिया वा द्वैहायन स्त्रैहायन युवादित्वावत् मूले यौवनम् अविकारणे न नलोप'। साम्य वैरूप्य सौभाग्य सुभगादित्वात् द्वयोर्द्वयोर्वृद्धिं ब्राह्मणादित्वात् सिद्ध वाणिज्यमिति राज-स्वदन्ताच्चेति ष्णः सौहृद्यमिति युवादित्वात्। युवाचपलवृषलस्वस्त्रीकुशलपिशुनय-जमानम्…दयानि। होता त्राता द्र स्त्रीकुस्त्रीकुगड्‌कवर्णकनिपुणाश्च। सब्रह्मचारि…भानमहत् दु…त कुतहला। चिवश्रयानृशसश्च दुर्हृदय कमण्डल। दुर्भोह स्थवि… मैत्री परिव्राजक इत्यपि। अवगम्य युवादौ सुस्थाविंशतिरीरिता'। युव-मिति सनोज्ञादिसमावेशार्थं सुहृदयदुर्हृदयशब्दौ मित्रामित्रवाचकौ ब्राह्मणादि-…ग्रासमावेशार्थौ। तत्र सुहृदयस्य भाव क्रिया वा ष्णे कृते नित्य हृदादेश सुभगा-दित्वात् द्वयोर्द्वयोर्वृद्धि सौहार्द्दं ष्णः तु हृदयस्य हृल्लास इत्यादिना वा हृदादेश। …गार्द्द सौहृद्यम् एव दुर्हृदयस्य हृदादेशाभावपक्षे दौर्हृदय्यमिति वस्तुतस्तु …दयपर्यायहृच्छब्दस्य सौहार्द्द सुहृदयदुर्हृदयशब्दयोस्तु सौहृद सौहृदय्य दौर्हृद दौर्हृदयमिति। होत्रत्यविशदर्या ट्रसमावेशार्थ तेन सघार्थेषु ट्र कृते षा …त्व षो कृते वृद्धादीय. होत्रीयम् एव स्याविरीयम्। स्तपुरुषाभ्यासामे। ष्यन्ताभ्यामाभ्यां तयोरसे ष्णो वा स्यात। हार्द पौरुषम्। असे किं परमपुरुष-त्वम्। श्रोत्रियस्येयस्य लोपश्च। श्रोत्रियस्य भाव' क्रिया वा श्रौत्रं ष्णे इयस्य लोप.। होत्रादिप्राणिजातिवयोभ्य ट्र। ष्यन्तात् होत्रादे. प्राणिजाते. वयोवचनाच्च भावक्रियया. ट्रः स्याद्वा। होतुर्भाव. क्रिया वा होत्रम्। होता भर्त्ता प्रशास्ता च उद्गातृगणकौ तथ। उन्नेता प्रतिहर्त्ता च अध्वर्युः सुष्ठु दुष्ठु च। होतृ उद्गातृ उन्नेतृ अध्वर्यु इत्येषा पाठः होत्रादिभ्य. य इति बाधनार्थ.। प्राणिजातेस्तावत्।

शुनो भाव, क्रिया वा शौवं रुरो रौरवं वयोवचनात्तावत् कौमारं स्थाविरम्।
कपिज्ञातिभ्यां ष्येय। ष्यन्ताभ्यां तयोः ष्येय स्याता। कपेर्भाव क्रिया वा
कापेयं ज्ञातेय पक्षे कपिता कपित्व ज्ञातिता ज्ञातित्व कपिशब्दस्य यपूर्वगन्त
त्वात् णो बाध्यते। मनोज्ञादेर्णक। ष्यन्तान्मनोज्ञादिभ्यर्योर्णक स्याता। मनो-
ज्ञस्य भाव क्रिया वा मनोज्ञकम्। मनोज्ञकल्याणकुरूपपुत्रा युवा सहाय कुल
पुत्रच्छन्दा। अमुष्यपुत्र परपुत्रधूर्त्तौ मेधाव्यवश्य बहुलश्च चौर। आढ्यकुलाभि-
रूपेन्द्रकान्दसश्रोत्रिया अपि विश्वोदरस्तथा ग्राम्यपुत्रामुष्यकुलावपि। ग्रामात्
षण्ड कुमारी च परे च स्यु प्रयोगत। सहायचौरधूर्त्तानां ब्राह्मणादिष्वसमा-
वेशार्थं तेन साहाय्य साहायकमिति अमुष्यपुत्रामुष्यकुलशब्दयोर्णकान्तकुलपुत्रयो-
रिति ष्या न लुक् आमुष्य पुत्रिका आमुष्यकुलिका स्वभावात् स्त्रीत्वम् एव यौव-
निका इति कश्चित्। बहुलशब्दस्य र्ण्ये मन्समावेशार्थे तेन बाहुलक बाहुल्य
बह्निमा इत्यादि। युड् रूपोत्तमादसुप्रख्याच्च। य उड् यस्य स युड् उत्तमशब्द
स्वभावात् त्रिप्रभृतीनामन्त्यमाह उत्तमस्य समीपम् उपोत्तम रु उपोत्तम यस्य स
रूपोत्तम युड् चासौ रूपोत्तमश्चेति स तस्मात् ष्यन्तात् भावक्रिययोर्णक स्यात् न तु
सुप्रख्यात् रमणीयस्य भाव क्रिया वा रामणीयक रमणीयकम् युड् इति कि
विमानता विमानत्वम्। रूपोत्तमादिति कि चवियत्व चवियता। असुप्रख्या-
दिति कि सौप्रख्य सुप्रख्यत्व सुप्रख्यता। चात् स्त्रियाम्। ष्यन्तान् क्तचसाङ्गाव-
क्रिययोर्णक स्यात् स च स्त्रियाम्। गोपालपशुपालाना भाव क्रिया वा गोपाल-
पशुपालिका। शौर्य्योपाध्यायिका कौत्सकुशिकिका दैवासुरिका। गोत्रचरणाच्च
श्लाघादौ। ष्यन्ताद्गोत्रवाचिनश्चरणवाचिनश्च भावविक्रययोर्णक स्यात् श्लाघादि-
विषये। स च स्त्रियाम्। या आख्या अपत्यनिमित्ता सा गोत्रपदवाच्या अथवा
ये पठ्यन्ते ते गोत्रपदवाच्या इति या आख्या वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा
चरणपदवाच्या। गार्गिकया काठिकया च श्लाघते अधिक्षिपति तामवगतवान्
प्राप्तवान् वा गार्गत्वेन श्लाघत आत्मनि कत्थन करोति अधिक्षिपति परान्निन्दति
तामवगतवान् तच्छब्देन गोत्रचरणसम्बन्धिन्यौ भावक्रिये उच्येते ते ज्ञातवान् प्राप्त-
वान् लब्धवान् इत्यर्थ। एव कठत्वेन श्लाघते इत्यर्थ श्लाघादेरन्यत्र गार्गत्वम्
कठत्वम्। ऋत्विग्भ्य ईय। ष्यन्तेभ्य ऋत्विग्विशेषवाचिभ्यो भावक्रिययोरीय-
स्यात्। मित्रावरुणीय प्रस्तोत्रीय। मित्रावरुणप्रस्तोटब्राह्मणाच्छसि पोट च।
ग्रावस्तुतार्द्रभावौ च प्रतिप्रस्तोटहोट च। छायाग्नेष्टा सुब्रह्मण्योऽच्छावागऽग्नीध्रमेव

च। अध्वर्य्युः प्रतिहर्त्ता च ब्रह्मोद्गाता च कीर्त्तितः। एते पञ्चदशशब्दा ऋत्विग्विशेषवाचिन इति कात्यायनः। ऋत्विगर्थाद् ब्रह्मणस्त्वः। ष्यन्तादृत्विग्वाचिनो ब्रह्मशब्दाद्भावक्रिययोस्त्वः स्यात् ब्रह्मणो भावः क्रिया वा ब्रह्मणो भावः क्रिया वा ब्रह्मत्व नेति वक्तव्ये त्ववचनान्तबाधनार्थम्। ब्राह्मणार्थात् तु ब्रह्मत्वं ब्रह्मता। न नञो यादचतुरादेः। नञ्पूर्वात् भूतात् भावे क्रियायाञ्च उक्तास्त्या न स्युः न चतुरादेः। न शुक्लः अशुक्लस्य भावः क्रिया वा अशुक्लत्वम् अशुक्लता अदृढत्वम् अदृढता अमधुरत्वम् अमधुरता अब्राह्मणत्वम् अब्राह्मणतेत्यादि यादिति किं नास्ति पट्वर्थस्यापटुत्वस्य भावः अपाटवम्। अचतुरादेरिति किम् अचातुर्य्यम् अचतुरत्वम् अचतुरता न चतुरोऽचतुरस्तस्य भावः क्रिया वेति वाच्ये एवम् आसङ्गत्यम् आनन्तर्य्यम् आवद्यम् आसत्यम् आबुध्यम् आवश्यम् आलस्यम्। धान्यवाचिनस्तत्क्षेत्रे खीनः। ष्यन्तेभ्यो धान्यवाचिभ्यो खीनः स्यात् तत्क्षेत्रे वाच्ये। मुद्गानां भवनं क्षेत्रं मौद्गीनं कौलत्थीनं कौद्रवीणं धान्यीनमिति भागवृत्तिः। शालिव्रीहिभ्यां खेयः। ष्यन्ताभ्यामाभ्यां क्षेत्रे वाच्ये खेयः स्यात् खीनस्यापवादः। शालीनां भवनं क्षेत्रं शालेयं व्रैहेयं क्षेत्रं स्त्रियां शालेयी भूः। यव यवक षष्टिकाभ्यो वा तु तिल भङ्गा माषाऽणुमाभ्यः। ष्यन्तेभ्य एभ्यस्तत्क्षेत्रे यः स्यात् तिलादेस्तु वा। यवानां भवनं क्षेत्रं यव्यं यवक्यं षष्टिक्यम्। यवकशब्दो वोरोधान्ये रूढः तिलादेस्तु तिल्यं भङ्ग्यं माष्यम् आणव्यम् उम्यं पक्षे तैलीनमित्यादि। भङ्गाशब्दः कार्पासे वर्त्तते इति धातुप्रदीपः। रक्षितस्तु भङ्गासमाख्यशस्येऽपीति विश्व इति। अश्वादेकाहगमे खीनः। एकाहेन गम्यते एकाहगमः तस्मिन् वाच्ये अश्वशब्दात् खीनः स्यात्। अश्वस्य एकाहगमः पन्था आश्वीनः पन्थाः। इदमर्थे। ष्यन्तादिदमर्थे वेत्त्यादित्वात् ष्णः स्यात् मूले विष्णोरिदमिति वाक्यं भवादित्वात् ब्रह्मादीयः एवं त्वदीयं गार्गीयं नादेयं राष्ट्रीयमित्यादि। माघवनमिति मघोन इदमिति वाक्यं तेन उः अविकारणे न नलोपः तुङ्पक्षे माघवतमिति यौवनमिति यून इदमिति वाक्यं द्वारादित्वात् वस्योम् पूर्ववन्न नलोपः। यमादेस्तु याम्यं प्राजापत्य पाशुपतम् आग्नेयम् कालेयम् औत्समित्यादि अत्र लिङ्गवचनमतन्त्रं तेन विष्णोरियं वैष्णवी विष्णोरिमौ वैष्णवावित्यादि। इदमिति सम्बन्धमात्रं विवक्षितं तथाच शैवं शिवसम्बन्धीत्यर्थः। रथरथान्तात् यो रथाङ्गे। ष्यन्तात् रथात् रथान्ताच्च इदमर्थे रथाङ्गे वाच्ये यः स्यात् ष्णस्यापवादः। रथस्येदं रथ्यं चक्रं परमरथ्यं चक्रं रथाङ्गम् इति किं रथस्येदं स्थानमिति। वाहनवाहनादिपरिषदध्वर्य्युभ्यः ट्नः। वाहनवाचकात्

वाहनवाचिपूर्वशब्दात् परिषच्छब्दादध्वर्युशब्दाच्च इदमर्थे ट्रः स्यात्। हस्तिन इदं हास्तं आश्वं आश्वम्। वाहनपूर्वात् हस्तिनः चर्म हस्तिचर्म तस्येदं हास्तिचर्म आश्वशकटम्। पारिषदं आध्वर्यवम्। जयादित्यस्तु वाहनाद्वाह्य एवार्थे वाहनपूर्वरथशब्दाच्च त्यमुक्त्वा अश्वस्येदं वहनीयं आश्वं यानं अश्वरथस्येदम् आश्वरथमित्याह तद्भाष्यादिविरुद्धमिति। हलसीराभ्यां ष्णिक। हलस्येदं हालिकं सैरिकम्। अपत्यात्वको शिष्यदक्षमानवयोः। ष्यन्तादपत्यान्तादिदमर्थे वकः स्यात् न तु शिष्ये दक्षमानवे च। ग्लुचुकायनेरिदं ग्लौचुकायनं औपगवकम्। अशिष्यदक्षमानवयोरिति किं दाक्षेरयमन्तेवासी दाक्षः गौकक्षदक्षमानवः दक्षप्रधानो मानवः शाकपार्थिवादित्वाल्लोपः। चरणाद्धर्मास्नाययोः। ष्यन्ताच्चरणवाचिन इदमर्थे धर्मास्नाययोर्वाच्ययोर्वकः स्यात्। कठस्याय धर्म आम्नायो वा काठकं कालापकं चरणा वेदनिमित्तेन पुरुषे वर्त्तमाना. कठादयश्चरणवाचका आम्नाय पाठपरम्परा। नटौक्थिकबह्वृच्छन्दोगयाज्ञिकाञ्ञ्ञ। अन्तेभ्य एभ्य इदमर्थे धर्मास्नाययोर्वाच्ययोर्ञ्यः स्यात्। नटस्याय धर्म आम्नायो वा नाट्यं औक्थिक्यं बाह्वृच्यं छान्दोग्यं याज्ञिक्यं। औक्थिकः सामव्याख्यानाऽध्येता बह्वृचः ऋग्वेदी छन्दोगः सामवेदी याज्ञिको यज्ञविद्याध्येता। चाददेवासुरादेरको वैरविवाहयोः। ष्यन्ताद्देवासुरादिभिन्नात् क्षतचसादिदमर्थे वैरविवाहयोर्वाच्ययोरकः स्यात्। वैरं विरोधः. काकस्य उलूकस्य तयोरिदं वैरं काकोलूकिका अश्वमहिषिका। अवियस्य भरद्वाजस्य तेषां विवाहः अविभरद्वाजिका कुत्सकुशिकिका गर्गेयस्केत्यादिना ब्वेऽपत्यस्य लुक् स्वभावादस्य स्त्रीत्वम्। देवासुरादेस्तु देवासुरं रक्षोगन्धर्वं यचोशीरमित्यादि देवासुरादेर्वैरम् एव निषेध इत्येके। अग्नीधो रण् गेहे नदञ्च। ष्यन्तादग्नीध्शब्दादिदमर्थे रण् स्यात् गेहे वाच्ये तस्मिन् पूर्वं दसञ्च न स्यात्। अग्नीध इदं गृहम् आग्नीध्रम् अग्निमिन्धे इत्यग्नीध् होता अन्तर्भावितण्यन्तादिन्धधो क्विप्। समिध आधाने ष्यञ् एनम् च। समिध् शब्दादाधाने वाच्ये इदमर्थे ष्यञ् स्यात् ष्यञस्य एनम् च, म इत्। समिध इदमाधानं सामिधेन्यो मन्त्रः सामिधेनी ऋक् ईपि ष्यञस्य लोपः। रैवतिकादेरीयः। ष्यन्ताद्रैवतिकादेरिदमर्थे ईयः स्यात्। रैवतिकस्येदं रैवतिकीयं वैजवापीयम्। रैवतिको वैजवापिगौरग्रीवौदमेघि च। चौनश्चल्योदवापी च स्वापिशिः सप्त कीर्त्तिता। सर्वेभ्योऽपत्यान्तत्वात् वको बाध्यते। हास्तिपादकौपिञ्जलात् ष्णः। ष्यन्ताभ्यामाभ्यामिदमर्थे ष्णः स्यात्। हास्तिपादस्येदं हास्तिपादं कौपिञ्जलस्येदं कौपिञ्जलम्।

## ४३४ । ऋटो रो ये ।

ऋत् ।१।, र १।, ये ७। ।

पित्र्यम् ।

## ४३५ । हन्षन् धृतराज्ञामुङ्लोपः णे ।

हन् षन् धृतराज्ञा ६॥, उङ्लोप १।, णे ७। ।

वार्त्रघ्न पौष्ण धार्त्तराज्ञम् । एषा किं सामनम् ।

---

अपत्यत्यान्ताभ्यां णको बाध्यते । आथर्वणिकादयर्वणाः । एभ्यादाथर्वणिकादिदं-मथ णा स्यात् णे अथर्वणादेशश्च । अथर्वणा प्रोक्तम् आथर्वण तदधीते तद्वेत्ति वा आथर्वणिक पाठमन्नात् अध्येतृवेदित्रोर्न लुक् आयवणिकस्याय धर्म्म आम्नायो वा आथर्वण धर्म्माम्नाययोरेवाभिधानात् आथर्वणिक गृहमित्यादौ न स्यात् । वीटु ओहित्वम् । एभ्यो वोदृशब्दादिदमर्थे णा स्यात् तस्मिन् वहित्रादेशश्च । वोढुरिदं वाहित्र सपूर्वादपि सावाहित्रम् । णिणगट्टात् सङ्घाङ्कघोषलक्षणे । एभ्यश्च णान्तणगान्तट्टान्तेभ्य इदमर्थे सङ्घादिषु वाच्येषु णा स्यात् । टाचे सङ्घोऽङ्को घोषो लक्षण वा दाक्ष प्राक्ष णगान्तात् गार्ग्य वात्स्य ट्टान्तात् वैद भौत्स इत्यादि एभ्योऽपत्यत्यान्तेभ्यो णको बाध्यते गौबलीवर्दवदिहाङ्कलक्षणयोर्भेद । शाकला-णकश । एभ्यश्शाकलशब्दादिदमर्थे सङ्घादिषु वाच्येषु णक स्यात् णस्यापवाद । शाकलेन प्रोक्तमधीते शाकल, तस्य सङ्घोऽङ्को घोषो लक्षण वा शाकलक चका-रात् णश्च शाकल । नानन्तरादिषु । एभ्यादिदमर्थेऽनन्तरादिषु वाच्येषु इदमर्थे विहिताभ्या न स्यु । समुद्रस्येदम अनन्तर दूर समीपमुपर्य्यधो वा इत्यादि ॥४३३॥

ऋकारो र. स्यात्तद्धितये । पितुरिद पित्र्यम् अणित् णय । ये कि णित् कर्त्त-पत्कम् ॥ ४३४ ॥

श्रीरा टो—ऋत् लुप्तषीक दम् । पित्र्यमिति पितुरिदमिति वाक्यम् अत ये रेफविधानात् य एव ॥ ४३४ ॥

हन् च षन् च धृतराजन् च ते तेषा उङो लोप । षन्निति मूर्द्धन्यषादि नकारोड् दन्त्यनान्तोभाग, तस्य केवलस्य असम्भवात् उक्षन् पूषन् प्रभृतीना ग्रह-णम् । अधिकन्तु प्रविष्ट न तु तद्धानिरिति न्यायात् सदानोऽल्लोप इत्यनेनैवाल्लोपे

## ४३६। युष्मदस्मद्त्वन्मदां युष्माकास्माकतवकममकाः ष्णीने।

युष्मद्-मदां ६।।।, युष्माक ममका १।।।, ष्णीने ७।।

यौष्माक यौष्माकीणं, आस्माकम् आस्माकीनं, तावक तावकीन, मामक मामकीनम्। सूर्य्याय हित सौरीयम् आगस्तीयम् आत्मनीनम्। चोर एव चौर. त्रैलोक्य रामकः।

---

सिद्धे इद नियमार्थ तेन ष्णे परे एवासेव उङ् लोप स्यान्नान्यस्य इत्यर्थ। ह्वनस्न इद वार्हनम् अत ष्णे परे वृद्धौ अनेन अल्लोपे हनोऽघ्न एव पूष्ण पौष्ण धृतराज्ञ धार्त्तराज्ञम् उभयत्र ष्णे वृद्धौ उङ्लोप। उच्णन्तु अपत्यार्थे ष्णे औच्ण इति पूर्वमुदाहृतम् इदमर्थे ष्णे तु मनववर्जेत्यनेन अपत्यार्थभिन्ने ष्णे नकारलोपादुङ्लोपाभावे औच्च चर्म्म। एषा किं साम्न इद सामनम् अत ष्णे पूर्व्वेणापि उङ् लोपो न स्यात्॥ ४३५॥

औरा टी—हस्व पूषस्य धृतराजस्य ते तेषा उङो लोप उङ् लोप। ह्वनन्त षनन्त धृतराजन् इत्येषां ष्णे परे उङो लोप स्यात्। वार्हनम् इति ह्वनस्न इदमित्यर्थे ष्ण अनेन उङो लोपे हनोऽघ्न इति घ्न। पौष्णमिति पूष्ण इद ष्णे उङो लोपे णत्वञ्च एवमौच्णम्। धार्त्तराज्ञमिति धृतो राजा येन धृतराजा तस्येद ष्णे उङो लोपे चुत्व सर्व्वत्राविकारणे नलोपाभाव। सदानोऽल्लोप इत्यनेन उङो लोपे प्राप्ते नियमार्थ वचन तेन साम्न इद सामनमित्यादौ न स्यात्॥ ४३५॥

युष्मद् अस्मद् त्वद् मद् एषा स्थाने क्रमात् युष्माक अस्माक तवक ममक एते आदेशा स्यु ष्णे णीने च परे। युष्माकमिदमित्यर्थे ष्णे णीने च विभक्तेर्लुकि युष्मद् स्थाने युष्माकादेशे वृद्धौ यौष्माक यौष्माकीणम् एवम् आस्माकम् आस्माकीनमिति एव तव इदम् इत्यर्थे ष्णे णीने च क्तेर्लुकि युष्मद एकत्वात् त्वदादेशे तस्य च तवकादेशे वृद्धौ तावक तावकीनम् एव मामक मामकीनमिति। सूर्य्याय हित सौरीयम अत णीये वृद्धौ सूर्य्यागस्त्येति यलोप। एवम् आगस्तीयम् आत्मने हितम् आत्मनीनम् अत णीने अध्वात्मनोरीने इति नलोपनिषेध। स्वार्थमुदाहरति। चौर एव चौर. अत ष्णे वृद्धि त्रिलोकी एव त्रैलोक्यम् अत ष्णे वृद्धौ ययोर्लोप इत्यकारलोप.।

स्वार्थप्रत्ययान्तास्तल्लिङ्गा एव इति नियमेऽपि अस्य क्लीवत्वमभिधानात्। राम एव रामक अब कम्। कप्रत्ययस्य स्वार्थादतिरिक्तोऽप्यर्थः यथा अज्ञाने कुत्सिते चैव सञ्ज्ञायामनुकम्पने। तद्युक्तनीतावल्पे वाच्ये कृत्से च क स्मृत इति प्राञ्च। यथा अश्वक कस्यायमश्व कुत्सितो वा इत्यर्थ। इत्यादौ कणोऽपि स्यात्र वृद्धि। विप्रक कुत्सितो विप्र इत्यर्थ। सञ्ज्ञायां देवदत्तक यज्ञदत्तक अनुकम्पाया वत्सक दुर्बलक बुभुक्षितक पुत्रक अनुकम्पायुक्तनीतौ आयुर्वित्त गृहच्छिद्र यत्नात कुर्वीत गुप्तकम्। अल्पे तैलक कृत्से वृत्तकम् ॥ ४३६ ॥

गोरा टी—युष्मच्च अस्मच्च त्वच्च मच्च ते तेषां युष्माकश्च अस्माकश्च तवकश्च ममकश्च ते। खश्च णीनश्च तत्तस्मिन्। एवममेते क्रमात् स्यु खणीनयो परयो। यौष्माकमित्यादि युवयोर्युष्माकमित्यर्थे युष्मदो युष्माकादेश खणीनयो। यौष्माकीणमित्यत्र णत्वम् एवमास्माकमिति आस्माकीनमिति आवयोरस्माक वा इदमिति वाक्यम्। तावकमित्यादि तवेदमिति वाक्यम्। खणीनयोरिति किं युष्मदीयम् अस्मदीय त्वदीय मदीय यचे वृद्धादीय। च्या ईयो हितेऽराजादे। चन्ताद्धितेऽर्थे ईय स्यात न तु राजादे। मूले सूर्य्याय हितमिति सूर्य्यस्याय धर्म्म, सौर्य्य तस्मै हितमित्यर्थे ईये कृते सूर्य्यागस्त्ययोरिति यलोप। एवमागस्तीयमिति एव सूर्य्याय हित सूरीयम् एवमागस्तीय वत्सीयमित्यादि। राजादेस्तु राज्ञे हितम्। राजा व्राह्मण आचार्य्यो वृषलोऽन्ये प्रयोगत। यद्यपि चन्तस्य ष्यन्तभिन्नत्व तथापि ष्यन्ताहितायाश्च कत्वाभावात् पूर्वेन नोदाहृत्य इहोदाहृतम्। च्या इत्यधिकार प्राक्। सर्वात्खश्च। चन्तात् सर्वशब्दात् हितेऽर्थे ईयो नश्च स्यात्। सर्वेभ्यो हित सर्वीय सार्व, स्त्रिया सर्वीया सार्वा। प्राण्यङ्गतदन्तब्रह्मादेर्य.। चन्तात् प्राण्यङ्गवाचकात् प्राण्यङ्गवाचकान्तात् ब्रह्मादेश्च हितेऽर्थे य स्यात् ईयस्यापवाद। दन्तेभ्यो हित दन्त्यम् औष्ठ्य राजदन्त्य राजोष्ठ्य शीर्षण्या केशा ब्रह्मणे हित ब्रह्मण्यम् अभावकर्म्मये न नलोप। ब्रह्मातिलवणो माषरथो खलवृषे इति शिरसे हित शीर्षण्यम्। अव्यजाभ्या थ्य। चन्ताभ्यामाभ्या हितेऽर्थे थ्य स्यात्। अवये हिता अविथ्या शाला अजाय हिता अजथ्या भूमि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् अजायै हिता अजथ्या इत्यपि च। आत्मभोगोत्तरदाभ्यासीन। चन्तादात्मन्शब्दात् भोगोत्तरदाच्च हितेऽर्थे ईन स्यात्। मूल आत्मनीनमिति आत्मने हितमिति वाक्यम् अध्वात्मनोरीन इति न लोप। भोगशब्द शरीरवाची राज्ञां भोग राजभोग तस्मै हित राजभोगीनं मातृभोगीनं

क्षुभ्नादित्वान्नत्वं । चरकमानवाभ्यां खञ् । आभ्यामाभ्यां हितेऽर्थे ईनो खञ् स्यात् । चरकाय हितं चारकीणं मानवीनम् । विश्वजनादेर्ये । अन्तात् विश्वजनादेर्हितेऽर्थे ईनः स्यात् यसे सति । विश्वजनाय हितं विश्वजनीनं य इति किं विश्वे जना यस्य तस्मै हितं विश्वजनीयम् । भाष्ये तु सामानाधिकरण्यमात्रेऽभिधानं तन्मते विश्वस्य जनो विश्वजनस्तस्मै हितं विश्वजनीयं सर्वंजनीयमिति प्रत्युदाहरणं पूर्ववत् विश्वजनीनमिति । सर्वजनमहाजनाभ्यां ष्णिक । आभ्यामाभ्यां हितेऽर्थे ष्णिक स्यात् यसे सति । सर्वजनाय हितं सार्वजनिकं विश्वजनादिपाठात्तु सर्वजनीन इति पूर्वेण महाजनिकं । य इति किं सर्वेषां जनः तस्मै हितं सर्वजनीयं महान् जनो यस्य तस्मै हितं महाजनीयमिति । पुरुषात् ष्णेयस्तद्वधतत्कृतयोः । अन्तात् पुरुषशब्दात् हितेऽर्थे तद्वधे तत्कृते च वाच्ये ष्णेय स्यात् । पुरुषाय हितं पौरुषेयी वधः पुरुषकार्य्य । कंसपरशुभ्यां लुक् विकारार्थे । आभ्यां हितार्थे लुक् स्यात् विकारार्थे त्रे परे । कंसीयस्य विकारः कांसं परशव्यस्य विकारः पारशवम् । परशोर्हितादौ यो वक्ष्यते । ईयो विकारादुपादानकारणे तादर्थ्ये । प्रकृतेरवस्थान्तरं विकारः तदर्थात् उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ईयः स्यात् । अङ्गारेभ्य एतानि काष्ठानि अङ्गारीयाणि काष्ठानि अङ्गारशब्दो विकारार्थस्तस्योपदानं काष्ठं तस्य तादर्थ्यं गम्यते । एवं प्राकारीया इष्टका इत्यादि । तादर्थ्य इति किं धान्यानां यवा विकारादिति किम् उदकाय कूपः । छदिर्वलिभ्यां ष्णेय । अन्ताभ्यामाभ्यां विकारार्थाभ्यामुपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ष्णेय स्यात् । छदिषे तृणानि छादिषेयाणि तृणानि बालेयास्तण्डुलाः । ऋषभोपानह्भ्यां ष्ण्य । अन्ताभ्यामाभ्यां विकारवाचकाभ्याम् उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ष्ण्य स्यात् ऋषभाय वत्स आर्षभ्यो वत्सः औपानह्यं काष्ठम् । चर्मणि ट्रोऽनुपानहः । अन्तादुपानच्छब्दभिन्नात् विकारार्थादुपादानकारणे चर्मणि वाच्ये तादर्थ्ये गम्यमाने ट्र स्यात् । वरत्रायै चर्म वारत्रं चर्म व्याघ्रं चर्म । अनुपानह इति किम् औपानह्यं चर्म । ब्रह्माद्यादेरित्यत सर्वत्र तदन्तविधिरिष्यत इति न्यासकारस्तेन परमब्रह्मण्यं परमादित्यं परमाजन्यं परमात्मनीनः परमविश्वजनीयं पारममहाजनिकं पारमचारकीणं परमाङ्गारीयं काष्ठं परमवरत्रायै चर्म पारमवरत्रं चर्मेत्यादि । [illegible]रार्थादुपादानकरणे ये त्वा उक्तास्ते हितार्थं भवन्तीत्यन्ये तेषां मतेऽङ्गाराय [illegible] अङ्गाराय छादि[illegible]यमित्यादि । हितादावुवर्णादेर्योऽपूपादिहविर्वाचिभ्य । [illegible] अन्तादुवर्णान्तादिवर्णादेश्च हितादावर्थे य.

स्यात् अपूपादेर्हविर्वाचिभ्यस्तु वा। धेनवे हितं धेनव्यं बध्वै हितं बधव्यं शल-ङ्कुश्चर्म्मविकारार्थः तस्मात् द्वं बाधित्वाऽनेन यः शलङ्कवे चर्म्म शलङ्कव्यं चर्म्म। गवादिस्तावत् गवे हितं गव्यं हविष्यम्। गोहविर्युगमेधाविषिस्वदसादकपस्तु चाः। इत्येकादशकं प्रोक्तमचरं बहिरष्टका। अपूपादिस्तावत् अपूपाय हितम् अपूप्यम् अपूपीयं पृथुक्यं पृथुकीयम्। अपूपः पृथुकोऽभूषो धूमार्योरिचुणा सह। स्पूना-कटकक्लिन्नानि प्रदीपो दीपतण्डुलौ। अन्नपादाऽथ सर्वेऽन्नविकारा इह कीर्त्तिताः। सर्वेऽन्ने विकारवाचका अपूपादयः यथा पिष्टाय हितं पिष्ट्यं पिष्टीयं शक्तुशब्दा-दुवर्णान्तत्वात् पूर्व्वेण नित्यम्। शक्तव्यम्। हविर्वाचिनस्तावत् आमिक्षायै हितं आमिक्षीयं पुरोडाशेभ्यस्तण्डुलाः पुरोडाश्याः पुरोडाशीयाः तण्डुलाः। चरुशब्दा-दुवर्णान्तत्वात् हविःशब्दात् गवादित्वात् पूर्व्वेण नित्यं चरव्यं हविष्यमिति। उधसो नङ् च। चन्तादुधःशब्दाद् यः स्यात् हितादौ तस्मिन् नङ् च अङ्गावितौ। उधसे हितम् उधन्यम्। शुनः शुनशूनौ च। चन्तात् श्वन्शब्दात् हितादौ यः स्यात् तस्मिन् शुनशूनौ इत्येतौ स्याताम्। शुने हितं शुन्यं शून्यम्। नाम्नि कम्बलात्। चन्तात् कम्बलशब्दात् हितादौ यः स्यात् नाम्नि गम्यमाने। कम्बलाय हितम् उपादानकारणं वा कम्बल्य ऊर्णा पलशतम्। नाम्नीति किं कम्बलीया ऊर्णा। अप्राण्यङ्गे नाभेर्नभश्च। चन्तान्नाभिशब्दात् हितादौ यः स्यात् अप्राण्यङ्गे तस्मिन्ना-भेर्नभादेशः। रथैकदेशो नाभिः नाभये हितम् उपादानकारणं वा नभ्यं काष्ठम्। अप्राण्यङ्ग इति किं नाभये हितं नाभ्यं तैलं प्राण्यङ्गवाचित्वाद् यः पूर्व्वस्यैव। गवादितः सर्व्वत्र तदन्तविधिरिति जयादित्यः। तेन परमगव्यं यवापूप्य यवापूपीयं परमामिक्ष्यं परमामिक्षीय परमोदन्यं परमशून्य परमनभ्यम् इत्यादि। हितादि-रिह हितं तादर्थ्ये उपादानकारणम् उपादानकारणं चर्म्म इति। सन्तापादेः णिकः प्रभवति। चन्तात् सन्तापादेः प्रभवत्यर्थे णिकः स्यात्। सन्तापाय प्रभवति सान्तापिकः। सन्तापमासप्रवेशशक्तुसङ्घातमोदनः। उपवासप्रवासोपसर्ग-सम्पादनन्तथा। मासौदनञ्च सन्नाहः संयोगश्च प्रकीर्त्तितः। पारायग्रामापवास्तु सर्गो निष्पेय इत्यपि। निसर्गश्च विसर्गश्च धीरैरेकोनविंशतिः। योगादयश्च। योगाय प्रभवति यौग्यः यौगिकश्च। कर्म्मणो णुकः। चन्तात् कर्म्मशब्दात् प्रभवत्यर्थे णुकः स्यात् ण इत्। कर्म्मणे प्रभवति कार्म्मुकं धनुः। अतिथेर्ण्यस्तादर्थ्येऽग्न्यिस्त्वदेवतान्त पादार्घेभ्यः। चन्तादतिथेर्ण्यः स्यात् तादर्थ्ये देवतान्तादेस्त्वणित्। अतिथये जलम् आतिथ्यम् अतिथ्यर्थमित्यर्थः। पितृदेवतायै इदं पितृदेवत्यम् अग्निर्देवत्यम्

पादाय इदं पाद्यम् अर्घाय इदम् अर्घ्यम्। प्रज्ञा'। प्रज्ञा इत्यधिक्रियते चातुरर्थिकात् प्राक्। ण प्रज्ञादेः स्वार्थे वा। प्रज्ञन्तात् प्रज्ञादेः स्वार्थे ण' स्याद्वा। प्रजानातीति प्रज्ञः प्रज्ञ एव प्राज्ञः पचे प्रज्ञः मूर्खे चौर एवेति। प्रज्ञ चौर वणिक् विद्या देवता वसुवन्धव। उष्णिक् साधारणकुञ्च पिशाचासुरशत्रव। सत्वदाश्रयणाऽग्नीध्रवयो वर्चोमललोहित'। मरुत् प्रत्यच चचूंषि विपति व्याहृतौ विदन्। चिकीर्षद् योध जुह्वन्तचण्डाल विखरोऽपि च। अग्रहायण इत्येते विशञ्च दृधिका इह। साधारणशब्दोऽनत्यान्तः स्त्रिया साधारणैव साधारणी। सत्वच्छब्दोऽसधौ शब्दः सत् तस्मात वतु' सत्वन् स एव सात्वतः विददिति शवन्त क्षणान्तगार्थे जुह्वदिति शवन्त क्षणान्तगार्थे जुह्वन्नेव जौह्वतः क्षणान्तग'। आकृतिगणोऽयम्। छन्दोभ्य। प्रज्ञन्तेभ्य छन्दोवाचिभ्य स्वार्थे ण स्याद्वा। त्रिष्टुवेव त्रैष्टुभः जागतः गायत्रः स्वभावात् क्लीवत्व पचे त्रिष्टुवित्यादि। सन्देशवाग्युक्तात् कर्म्मण। प्रज्ञन्तात् सन्देशवाचा युक्तेऽर्थे वर्त्तमानात् कर्म्मशब्दात् स्वार्थे ण स्याद्वा। कर्म्मैव कार्म्मणं यद्वाचिक श्रुत्वा वशीकरणादिकर्म्मानुष्ठीयते तदेवोच्यते। क्षणविसारिभ्या मृगमत्स्ययो। प्रज्ञन्ताभ्यामाभ्या क्रमादनयोर्वर्त्तमानाभ्या णो वा स्यात्। क्षण एव कार्ष्णो मृग विसार्य्येव वैसारिणो मत्स्य' इनोऽकलापादेरिति न नलोप पचे क्षण विसारी श्रोत्रौषधिभ्या शरीराजात्यो। प्रज्ञन्ताभ्यामाभ्याम् अनयो क्रमाद्वर्त्तमानाभ्या स्वार्थे णो वा स्यात्। श्रोत्रमेव श्रौत्रं शरीर मणिबन्धवाचके तु न भवति ओषधिरेवौषधम् ओषधिभिरवकन्दादिजातौ तु ओषधि फलपाकान्ता जाति। विनयादे ष्णिक उपायस्य ह्रस्व। प्रज्ञन्ताद्विनयादे स्वार्थे ष्णिक स्याद्वा उपायशब्दस्य ष्णिके ह्रस्व। विनय एव वैनयिक विनयव्यवहारोपचाराऽत्यन्ताऽनुगामिन। सम्प्रदाय समुत्कर्ष विशेष विषयात्यया। समाहारसमूहौ चाकस्मात् समयमङ्गति व्यासादेशौ च सम्प्रोक्ता सप्तभिर्दश कोविदै। अकस्मादेव आकस्मिक टेर्लोप। व्यास एव वैयासिक तेन निर्वृत्ता वैयासिकी संहिता इति आदिश्यतेऽसौ आदेश आदेश एव आदेशिक। उपाय एव औपयिक ष्णिके ह्रस्व'। अस्याकृतिगणत्वात् चातुर्थिक इत्यादि। वाच सन्देशे। प्रज्ञन्तात सन्देशे वर्त्तमानात् वाच्शब्दात् स्वार्थे ष्णिक स्यात् ष्णिक विनैव शब्दवृत्त्यभावात् विकल्पप्रकरणे नित्योऽय विधि। वाचिक सन्देश। सन्देश इति किं वागस्य मधुरा। चतुर्वर्णादे ष्य। प्रज्ञन्ता चतुर्वर्णादे स्वार्थे ष्य स्याद्वा चतुर्वर्णा एव चातुर्वर्ण्य चतुर्वर्णमुखाऽनन्तचतुराश्रमषड्गुणा। त्रिलोकी सर्वदेवश्च सेना भेषजसन्निधि। त्रिकालावसथौ चैव समीप-

मणिकोपमा। विषष्टिरितिह प्रोक्ता कोविदैर्दंशसप्तति'। मूले त्रैलोक्यमिति इतिह एव ऐतिह्यम्। यावादे क। प्रग्न्लाद् यावादे क स्याद्। याव एव यावक। यावमानसमुद्भाढञ्ज्ञाताऽज्ञाताश्चिभिश्चव'। चन्द्रौ रामगडुस्वस्तिपृष्टदत्ताश्चतुर्दश। मूले रामक इति। आकृतिगणोऽय तेन पोतक इति। बृहत्यण् पत्रतनुभ्य आच्छादन निपुण इविम सूत्रेषु। प्रग्न्तेभ्य एभ्य एष्वर्थेषु क्रमाद्वर्त्तमानेभ्य एभ्य स्वार्थे क' स्याद्। बृहत्येव बृहतिका आच्छादनविशेष अन्यत्र बृहती औषधि अणुरेव अणुक निपुण अन्यत्र अणु सूक्ष्म'। पुत्र एव पुत्रक क्रत्रिम अन्यत्र पुत्र'। तनु एव तनुक सूत्रम् अन्यत्र तनुरेव। शीतोष्णाभ्यामृतौ। प्रग्न्लाभ्यामाभ्याम् ऋतौ वाच्ये क स्याद् स्वार्थे। शीत एव शीतक उष्णक ऋतु' अन्यत्र शीतो वायु उष्ण कम्बल.। लूनविपाताभ्या पशौ। प्रग्न्लाभ्यामाभ्या पशौ वर्त्तमानाभ्या स्वार्थे क स्याद्। लून एव लूनक पशु विपातक पशु' अन्यत्र लून' विपात। कुमारखेलनेभ्य। कुमारै खेल्यते येन तद्वाचिभ्य स्वार्थे क स्याद् कन्दुरेव कन्दुक' भ्रमक गिरिक ग्रड्गक पत्ते कन्दुरित्यादि। स्नातशून्यलोहितेभ्यो वेदसमाप्तिरिक्तमणिषु। प्रग्न्लेभ्य एभ्य एष्वर्थेषु क्रमात् स्वार्थे क स्याद्। वेद समाप्य स्नात स एव स्नातक अन्यत्र स्नात। शून्य एव शून्यक धनादिहीन इत्यर्थ। लोहित एव लोहितको मणि अन्यत्र लोहित। प्रियादेर्जातौ। प्रग्न्लाज्जातौ प्रियादे स्वार्थे क स्याद्। प्रिय एव प्रियक' चित्रक मृगजाति गुह्य एव गुह्यको देवयोनिजाति शौन एव शौनक कुत्राह्मणजाति। कुञ्ज एव कुञ्जक तरु जाति इत्यादय प्रयोगदर्शनात् ज्ञातव्या'। काललोहिताभ्यामनित्यवर्णे। प्रग्न्लाभ्यामाभ्यामनित्यवर्णे वर्त्तमानाभ्या स्वार्थे क स्याद्। काल एव कालको वैलक्षण्येन लोहित एव लोहितक. पीडनेन तदनित्य' यत् कदाचित् भवति कदाचिन्न भवति गुणवृत्तेरस्य द्रव्यवाचित्वे ष्यो विधीयते न तु गुणवृत्तेरिति। अनित्य इति किं काला लोहिता गौ। यावत् द्रव्यभावितान्नित्यो वर्ण। वर्ण इति किम् असति वर्णग्रहणे नित्य इति द्रव्यस्यापि विशेषण स्यात् तर्हि लोहितिका समुद्रा पार्थिवा परमाणव इत्यत्र को न स्यात् तेषा नित्यत्वात् सति वर्णग्रहणे नित्येऽपि द्रव्येऽनित्ये वर्णे न्य सिद्धाति। रक्ताश्च। रक्तार्थे विहितात् स्वार्थे को वा स्यात्। कालेन रक्त. काल' काल एव कालक' वा लोहितक' काललोहिताभ्यामेव विधि: यदा ऽनयोर्यावत् द्रव्यभाविता तदैवोदाहरणमनित्यतायान्तु पूर्वेणैव। लोहिनीशब्दादपि के स्वे लोहिनिकेति भवति अन्यत्र लोहितेति। अनात्यन्तिके क्तात्। प्रग्न्लाद-

नात्यन्तिकविशिष्टे वर्त्तमानात् क्तान्तात् स्वार्थे को वा स्यादनात्यन्तिकं भिन्न भिन्नकम् अनात्यन्तिक इति किं भिन्नम् अत्यन्तमेव भिन्नमित्यर्थः। सामिकृतम् अर्द्धभुक्तमित्यत्र न भवति अनात्यन्तिकस्य साम्यादिभिरुक्तत्वात् स्वयं साम्योक्तेनेति वस। अर्द्धभुक्तमित्यत्र साम्यार्थे स इत्येके। अथवा विशेषण स. हसी वा। बहुभिन्नोपपन्नसुकरादेस्तरात्। प्रग्न्तात् बह्लादिपूर्वतरात् स्वार्थे क' स्याद्वा। बहुतरकम् अभिन्नतरकम् उपपन्नतरकं सुकरतरकं तरादिति किं बहुतरमित्यादि। ईयसो। प्रग्न्तादीयसुत्यान्तात् स्वार्थे क स्याद्वा। श्रेयानेव श्रेयस्कः। पूरणान्ताद्ग्रहणे तस्य लुक् वा। गृह्यतेऽनेनेति ग्रहणं रूपादि प्रग्न्तात् पूरणत्यान्ताद्ग्रहणे वर्त्तमानात् स्वार्थे को वा स्यात्तस्य पूरणत्यस्य लुक् वा स्यात्। द्वितीयमेव द्वितीयकं द्विकं रूपं द्वितीयेन रूपेण गृह्यते इत्यर्थ एवं तृतीयकं त्रिकं चतुर्थकं चतुष्कम्। उपधिचतुष्पाद्भ्यां ण्येय। प्रग्न्तादुपधेश्चतुष्पाद्वाचिनश्च स्वार्थे ण्येय स्याद्वा। उपधीयत इत्युपधि रथाङ्गम्। उपधिरेव औपधेयम्। शरण एव शारणेयं धारणेय.। अहमादिवर्णेभ्य कारो रात्त्वेफ। प्रग्न्तादहमादेर्वर्णविशेषवाचकाच्च कार स्याद्वा स्वार्थे रवर्णात्तु एफश्च। अहमेव अहङ्कार. एव एव एवकार ओमेव ओङ्कार सत्यमेव सत्यङ्कार तुरेव तुकार टुरेव टुकार. इत्यादि। वर्णात्तु अतएव अकार औकार ककार. हकार इत्यादि। र एव रेफ। उत्सर्गापवादयो क्वचिदुत्सर्गोऽपि निविशते इति न्यायात् रकार इत्यपि तथाच रकारादीनि नामानि शृखती मम पार्वतीति। मृदस्तिक प्रशंसायान्तु सस्नौ। प्रग्न्तात् मृच्छब्दात्तिक स्याद्वा स्वार्थे प्रशंसायान्तु स स्नश्च। मृदेव मृत्तिका प्रशस्ता मृत् मृत्सा मृत्स्ना च। रूपनामभ्यां धेयो भागात्तु यश्च। प्रग्न्ताभ्यामाभ्यां स्वार्थे धेय स्याद्वा भागशब्दात् तु धेयो यश्च। रूपधेयं नामधेयं भागधेयं भाग्यम्। देवात्तः। देव एव देवता स्वभावात् स्त्रीत्वम्। नवाद् यडीन तना नूश्च तेषु। प्रग्न्तात् यवशब्दात् य व ईन तन एते स्यु स्वार्थे। तेषु नवशब्दस्य नूरादिश्यते। नवमेव नव्यं नूवं नवीनं नूतनम्। प्रान्नडीनतना.। प्रग्न्तात् प्रशब्दात् न व ईन तन इत्येते स्यु स्वार्थे। प्र एव प्रणं प्रवं प्रीणं प्रतनम्। तीयादविद्यार्थात् ष्णीक। प्रग्न्ताद्विद्याव्यतिरिक्तार्थात् तीयान्तात् स्वार्थे ष्णिक स्याद्वा। द्वितीयैव द्वैतीयीकी तार्त्तीयीकी अविद्यार्थादिति किं द्वितीया विद्या। अध्यध्यन्ता षष्ठ्याश्रितङ्गुत कर्म्म पुरुषादीन। प्रग्न्तेभ्य एभ्य. स्वार्थे ईन स्यात् वा। अधिशब्द आयत्तपर्य्याय:। अध्येव अधीनं तथाच अस्मास्वधीनं किमु निस्पृहाणामिति भारवि.। अधिशब्द. शौण्डादि. गुरुषु अधि

गुर्व्वधि गुर्व्वध्ये व गुर्व्वधीन' एव' ब्राह्मणाधीन। भाष्यकारमते तु केवलादधिशब्दात् य तन्मतेऽधीन इति च। षड् अक्षीणि यस्मिन् षडक्ष न षडक्ष अषडक्ष एव अषडक्षीण द्वाभ्यामेव कृतो मन्त्र। आशिताः तृप्ता गावो यस्मिन् वने तत् आशितङ्गु सूत्रनिर्देशादाशितस्य मन् आशितङ्गु व आशितङ्गवीनम्। अल कर्म्मणि अल कर्म्म तदेव अलकर्म्मीणम् अल पुरुषाय अलपुरुष स एव अलपुरुषीण भावप्रधानोऽत्र पुरुषशब्द अलपुरुषभावाय इत्यर्थ गोष्ठाद्भूतपूर्व्वे खीन। प्रत्ताद्भूतपूर्व्वे वर्त्तमानाद्गोष्ठशब्दात् स्वार्थे खीणो वा स्यात्। भूतपूर्व्व गोष्ठ गोष्ठीन भूतपूर्व्व इति किं गोष्ठो वर्त्तते। वस्तुनि जात्यन्तादीय:। प्रत्ताद्वस्तुनि द्रव्ये वर्त्तमानाज्जातिशब्दान्तात् स्वार्थे ईय स्यात् वा। ब्राह्मणो जातिरस्य ब्राह्मणजाति ब्राह्मणजातिरेव ब्राह्मणजातीय: तज्जातीय' वस्तुनि किं ब्राह्मणजातिरदुष्टा। स्थानान्तात् तत्तुल्ये वा। प्रत्तात् तत्तुल्ये वर्त्तमानात् स्थानान्तात् स्वार्थे ईय स्यात् वा। पितृस्थानीय पितृस्थान, राजस्थानीय राजस्थान तत्तुल्य इत्यर्थ। मानार्थवत्वन्तान्मात्रद्वयसटौ। प्रत्तान्मानार्थे वत्वन्तात् स्वार्थे मात्रद्वयसटौ स्याता वा। कियदेव कियन्मात्र कियद्द्वयस तावन्मात्र तावद्द्वयस स्त्रिया कियन्मात्री कियद्द्वयसीत्यादि पक्षे कियदिति। विश्रोजातौ ण्य। प्रत्ताज्जातौ वर्त्तमानात् विशशब्दात् स्वार्थे ण्य स्यात् वा विडेव वैश्य, विट्च जाताविति किं विशावम्। सुरचेममर्त्त्यविष्टात् य। प्रत्तेभ्य एभ्यो य स्यात् वा स्वार्थे। सूर एव सूर्य्य चेम्य मर्त्त्य यविष्ठ्र. पक्षे सूर इत्यादि। पूगादमुख्यपूर्व्वात्। पूगा सघा नानाजातीया अनियतवृत्तयो धर्म्मकामप्रधानास्तद्वाचिन, शब्दादमुख्यपूर्व्वास्त्र स्यात् अनिर्दिष्टार्थास्त्या. स्वार्थे भवन्ति इति न्यायास्त्र स्वार्थे लौहध्वजशब्द, सङ्घवाचक लौहध्वज्य शिविशब्दात् शैव्य समुख्यपूर्व्वात् तु देवदत्तो मुखोऽस्य देवदत्तको लोक: स एषां मुख्य इति क अत्र देवदत्तशब्दो मुख्यवाचकोऽस्य पूर्व्वावयव इति अस्मात् त्यो न स्यात्। वाहीकेष्वराजन्यादब्रह्मण्यादायुधजीविसङ्घात् ण्य। वाहीकेषु आयुधजीविना सङ्घवाचकात् राजन्यशब्दभिन्नात् ब्राह्मणजातिवर्ज्जात् ण्य' स्यात् नञ्द्वयेन ब्राह्मणराजन्ययोर्जातिस्वरूपे अवगन्तव्ये कौण्डीवृषशब्दात् कौण्डीवृष्य: चौद्रक्य मालव्य वाहीकेष्विति किं शवरपुलिन्द' अराजन्यादिति किं शालङ्कायन: आयुध जीविनामिति किं मन्द, सङ्घातादिति किं वक्रचोण.। वृकात् णेन्य। आयुधजीविसङ्घवाचकात् वृकशब्दात् णेन्य स्यात् स्वार्थे। वार्केन्य। जातिशब्दान्माभूत् कामक्रोधौ मनुष्याणां खादितारौ वृकाविव। दामन्यादेरीय.।

## ४३७। केऽकः स्त्रो हे तु वा।

के ७, अक' ६।, स्त्र १।, हे ७, तु ।१।, वा ।१। ।

कन्यका सुकन्यका: सुकन्याकः। शिवो देवता यस्यासौ शैवः शाक्तेयः।

---

आयुधजीवसङ्घाद्दामन्यादेरीय स्यात्। दामनीय। दामनी सौमपादिश्च सावित्री-पुत्र औदधि। काकन्दक्या वितस्ती च सार्वसेनिश्च वैदधि.। औदकिर्वैज-वापिश्च शाकुन्तकिस्तथौपनि। मौञ्जायन. समुद्दिष्टा दामन्यादौ त्रयोदश। क्रौष्टु-क्यादेस्त्रिगर्त्तेषु। आयुधजीविसङ्घात् क्रौष्टुक्यादे. स्वार्थे ईय. स्याद्। क्रौष्टुकीय। क्रौष्टुकिर्ब्रह्मगुप्तिश्च काआषि दाण्डकी तथा। जालमासिर्जालकिश्च कौण्डीपरथ इत्यपि। पर्श्वयौधेयादिभ्या षाट्ठावस्त्रियाञ्च आयुधजीविसङ्घात् पर्श्वादे षा. यौधेयादे ट्र स्याद्। स्वार्थे। पर्शुशब्द हलशब्दवत् व्युत्पन्न.। पार्श्व ब्वे पर्शू-स्त्रिगर्त्ता स्त्रिया पर्शू। पर्शूरचो मरुत् सत्वत् वाह्लीकस्सवोऽसुर। दाशार्हश्च पिशाचश्च वय कार्षापणोऽशनि। सन् यस्यास्ति वत्वन्त.। यौधेयादे' यौधेय ब्वे यौधेया अजादेराकृतिगणत्वात् स्त्रिया यौधेया इत्यादि। यौवेयौशीनरावेयशौभ्रेय-भरता अमी। यौक्तेयचारणेयौ च त्रिगर्त्तोऽत्र नव स्मृता.। आयुधजीविनिवृत्ते सङ्घ इति प्रवर्त्तते। व्रातवचनाषा.। ये नानाजातीया अनियतवृत्तय उत्सवजीविनस्त व्राता सङ्घास्तेभ्यो ष्ण स्याद्। स्वार्थे न तु स्त्रियाम्। व्रात्य ब्रैहसत्य कापोतपाक्य अस्त्रियामिति कि व्रातेति। अभिजिदादेरपत्यषान्तात् षा। सङ्घादिति निवृत्तम् अभिजिदादेरपत्यषान्तात् षा स्यात् स्वार्थे न तु स्त्रियाम्। अभिजितो-ऽपत्यम् आभिजित स एव आभिजित्य'। अभिजिद्वेदभृच्छालावद्दूर्णातत् अमता सह। शिखावञ्च शमीवञ्च शम्बदष्टाव कीर्त्तिता। अपत्यग्रहण किम् अभिजिद्देवता अस्य अभिजित स्थालीपाक इत्यादौ न स्यात्। अस्त्रियामिति किम् आभिजित्य: स्त्रिय। अस्यापत्यार्थत्वात् अभिजित्यस्यापत्य युवा अभिजित्यायन इति। पूगष्णादे-र्लुग् ब्वे। पूगाषा इत्यादि स्वार्थिकात्या ब्वे लुक् स्यात् न तु स्त्रियाम्। लोहध्वजा.। कपोतपाका कौण्डीवृषा हका दामनय. क्रौष्टुकय पर्श्व त्रिगर्त्ता. अभिजिता इत्यादि अस्त्रियामिति कि लौहध्वज्य. स्त्रिय. एव कौण्डीवृष्य' अजादित्वादाप् दामनीया. स्त्रिय. उक्ता. स्वार्था.॥ ४३६॥

अक स्व स्यात् कणि परे बहुव्रीहौ तु वा। कन्या एव कन्यका अत्र अणित् कणि कृते अनेन ह्रस्वे स्वार्थप्रत्ययान्तास्तल्लिङ्गा एवेति स्त्रियामत आप्। एव मृणालिका सेनानिक यवसूक वामोरुका इति। शोभना कन्या यस्य इति बहुव्रीहौ सुकन्यक सुकन्याक. अत्र वा ह्रस्व। अक इति किं नौरेव नौका। अत्र वाशब्दस्य व्यवस्थावाचित्वात् समासे क्वचिद्‌ह्रसे परेऽपि अक स्व. स्याद्वा इति बोध्यम्। तेन कालिदासकविता नव वय इति रघोद्धतायामुद्भट। वैदेहिबन्धोर्हृदय विदद्रे इति रघु। अश्लेषपितृग्रयमवङ्गिविशाखयुक्तामिति दीपिका। विबुधकृतिरभीष्टा नाडीनक्षत्रहीने इति च दीपिका। विरहिनिकृन्तन कुन्तमुखाकृतिकेतकिदन्तुरिताशे इति जयदेवश्च सङ्गच्छते। आदि पदस्य उदाहरणमाह शिवो देवता यस्यासौ शैव. अत्र ण एव शाक्तेय अत्र णेय एव शाक्त वैष्णव गाणपत्य इत्यादि। एव शाखा मुख अग्रजघन स्कन्ध तरस शरण चरण शृङ्ग मेघ विरस द्रुम्य साम्ये य.। शाखा इव शाख्य मुखमिव मुख्यम् इत्यादि एव कर्म्मणि अल कर्म्मीण कर्म्मसमर्थ अल पौरुषाय अलपौरुषीण.। अव्ययादधिशब्दादीने अधीन. आयत्त प्राञ्चतीति प्राचीन इत्यादि। एव तदस्या क्रीडाया प्रहरण इत्यर्थेऽपि दण्ड प्रहरणमस्या दण्डा क्रीडा मुष्टि प्रहरणमस्या मौष्टा क्रीडा इत्यादौ अणित ण.। एव घञन्तात् सोऽस्यामित्यर्थेऽपि अणिति णे दण्डपातोऽस्यामिति दाण्डपाता फाल्गुनी। श्येनपातोऽस्यामिति श्यैनम्पाता मृगया तिलपातोऽस्यामिति तैलपाता स्वधा। उभयत्र अणित् णे मकारागमो निपात्य। न विद्यन्ते षडक्षाणि यद सोऽषडक्षीणो मन्त्र। अत्र ईन। अन्यान्यप्युदाहरामि। भिक्षादे. समूहे ण.। भिक्षाणा समूहो भैक्षम्। भिक्षादिस्तु। भिक्षा अहन् गर्भिणी युवति सहस्र करीष अथर्वन् चित्र अङ्गार पद्धति दक्षिण खण्डिक श्वन् युग वरत्रा हरिद्रा वडवा हलबन्ध भिक्षुक शुक उलूक इत्यादि।२२। वाडवादे. समूहे अणित् ण्य। वाडवाना समूहो वाडव्यम्। वाडवादिस्तु। वाडव मानव ब्राह्मण पृष्ठ इत्यादि।४। राजन्यादे. समूहे कण्। राजन्याना समूह राजन्यकम्। राजन्यादिस्तु। राजन्य राजन् शैलूष शालङ्कायन जालन्धरायण अर्ज्जुनायन सम्प्रिय मानव त्रिगर्त्त मट विराट ऊर्णनाभ देवपात औदुम्बर बैल्वन बाभ्रव आप्नीत आर्थकामीय अम्बरीष पुत्र विल्वन वैकर्ण वत्स धेनु हस्तिन् लक्षण दाक्ष वसति इत्यादि।२७। दाक्षिवसत्योरिकारस्य च अकार.। दाक्षीणा समूहो दाक्षक एव वसतीना वासतकम्। वृद्धात् समूहभावयो. कण्। वृद्धानां समूहो भावो

वा वार्द्दकम्। पाशादेः समूहेऽपित् ण्यः स्त्री। पाशानां समूहः पाश्या। पाशा-दिस्तु। पाश तृण धूम हलवात वन अङ्गार नड पिटक पीट पेट गल खल गल गोरथ इत्यादि। १६। ब्राह्मणादेर्भावकर्म्मणोर्ण्यः। ब्राह्मणस्य भावः कर्म्म वा ब्राह्मण्यम्। ब्राह्मणादिस्तु। ब्राह्मण मानव वाडव चौर धूर्त्त आवाधय विवाधय उपवाधय अपवाधय एकभाव द्विभाव त्रिभाव अन्यभाव अचेतन संवादिन् संवेशिन् सभाषिन् बहुभाषिन् शीर्षघातिन् समस्थ विषमस्थ मध्यस्थ अनीश्वर कुशल चपल निपुण पिशुन बालिश अलस दुष्पुरुष कापुरुष गणपति अधिपति दायाद विशस्ति विशाय परमस्थ रविसहाय गडुल विज्ञात इत्यादि। ४१। मित्रादेर्भावकर्म्मणो ण्यः स्त्री वा। मित्रस्य भावः कर्म्म वा मैत्र्यम्। पित्रादीपि सूर्य्यागस्त्यस्य इति यलोपे मैत्री। मित्रादिस्तु। मित्र उचित चतुर अनुपूर्व यथाकाम समग्र रुद्र इत्यादि। वणिक्दूताभ्यां भावकर्म्मणोः ण्यौ यश्च। वणिजो भावः कर्म्म वा वाणिज्यं वणिज्यम् एवं दौत्यं दूत्यम्। सख्युर्यः। सख्युर्भावः कर्म्म वा सख्यम्। स्तेनाद् यो न लोपश्च। स्तेनस्य भावः कर्म्म वा स्तेयम्। कपिज्ञातिभ्यां ण्येयः। कपेर्भावः कर्म्म वा कापेयम् एवं ज्ञातेयम्। लघुपूर्वादुदन्ताद्भावे ष्णः। लाघवं गौरवं मार्दवं पाटवं लघुपूर्वात् किं शत्रुत्वम्। युवादिहायनान्ताभ्यां भावे ष्णः। यूनो भावः यौवनम्। युवादिस्तु। युवन् चपल कुशल निपुण पिशुन स्थविर सुहृद् कुतूहल सुभ्रात दुर्भ्रात यजमान धात्र कर्णक कुण्डक श्रवण कमण्डलु कुस्त्री दुस्त्री सुहृदय दुर्हृदय वृषण परिव्राजक सुब्रह्मचारिन् अनृशंस चैतन्य इत्यादि। २६। द्वैहायन वैहायनमित्यादि। अचतुरस्य भावः अचातुर्य्यम् एवम् असङ्गतस्य असा-ङ्गत्यम् अलवणस्य अलावण्यम् एभ्यः ण्यः अपटोर्भावः अपाटवम् अत्र ष्णः। एषु सुपञ्चालादित्वादन्तपदस्य वृद्धिः। दुर्गसिंहस्तु एषु पूर्वपदस्य वृद्धिं कृत्वा आचतुर्य्यम् आसङ्गत्यम् आलवण्यम् आपटव्यम् इत्याह। एवं कूपस्य कौपीनम् अकार्य्यं गुह्यं कौपीनमित्यमरात्। एवं शालायां शालीनोऽप्रगल्भः उभयत्र खीनः। वत्सेभ्यो हितो वत्सीयः गोभ्यो हितं गव्यं वनमित्यादि। मन एव मानसम् अत्र ष्णः तारा एव तारका अत्र कण्। इवशब्दात् तुल्यार्थेऽपि कः। अश्व इवायम् अश्वकः एवं देवदत्तक इत्यादि। एवं वङ्गस्य राजा वाङ्गः अत्र ष्णः एवं कौरव्यः कौशल्यः पाण्ड्यः एभ्यः ष्णः अत्र पाण्डोरुकारलोपो निपात्यः। कणीनेयाद्येति चकारोऽनुक्त-समुच्चयार्थोऽपि। तेन प्रयोगानुसारादन्येऽपि प्रत्ययाः स्युः। यथा प्रावृषि भवः प्रावृष्येण्यः ण्यः. वरेण्यः भ्रातुरपत्यं भ्रातृव्यः.। कर्म्मणि शूरः. कर्म्मठः.। सजातीय-

सहायाभावे एकादाकिन्कौ। एक एव एकाकी एकक'। मत् सन्नौ प्रशंसायाम्। प्रशस्ता मत् मत्सा मतल्ला एवम् अवेर्दुग्धम् इत्यर्थे अविटणम् अविसीढम् अविसम् अत्र षत्वाभावो निपात्य'। एवम् अवेर्विस्तरीऽविपट। देवात् स्वार्थे त। देव एव देवता स्त्रीत्वमभिधानात्। वर्णात् स्वार्थे कारतौ। अकारोऽत् आकार आत् औकार औत् हसात्तु कार। ककार चकार ओङ्कार, वषट्कार। रादिफ। र एव रेफ निष्फले तिले तिलपेज तिलपिञ्ज इत्यादि। अथ निपात्या वृक्षवाचिना फले वाच्ये इदमर्थे क्वतस्य तद्धितस्य लुकि क्लीवत्वम्। आम्रस्येद फलम् आम्रम् एव नारिकेल तालमित्यादि। हरीतक्यादेस्तु फले वाच्ये इदमर्थे क्वततद्धितलुकि तल्लिङ्गत्वम्। हरीतक्या इद फल हरीतकी हरितक्यादिस्तु। हरीतक्यक्लिकी पथ्यामद्बीकापिप्पलीकणा। चिञ्चा कोषातकी द्राक्षा कर्कटी कण्टकारिका। श्वेतपाकी च कर्कारु रेवा चैलादय स्मृता इति। कूपत्वय फले जम्बा जम्बू स्त्री जम्बु जाम्बवम्। मल्लिकादे पुष्पे वाच्ये तद्धितलुकि तल्लिङ्गत्वम्। मल्लिकाया पुष्प मल्लिका। मल्लिकादिस्तु। मल्लिका सुमती मुस्ता विदारी शालपर्ण्यपि। जाती हरिद्रा गम्भारी बृहती मल्लिकादय, इति। व्रीहिणामपि फले वाच्ये तद्धितलुकि तल्लिङ्गत्वम्। यथा यवस्य फल यव' एव मुद्ग' तिल इत्यादि। एव शुक्लादिकषायादिशीतादीना गुणवाचिनामत्वर्थप्रत्ययस्य लुकि विलिङ्गत्वम्। यथा शुक्ल पट शुक्ला धेनु शुक्ल पुष्पम् एव मधुरो गुड मधुरा सिता मधुर फलम्। एवञ्च शीतो वायु शीता नदी शीत जलमित्यादि॥ ४३७॥

श्रीरा-टी—अक् प्रत्याहार अक के परे स स्यात् हसे तु वा। कन्यकेति कन्या शब्दात् यवादित्वात् क अनेन स्व सुकन्याका इति शोभना कन्या यस्या इति वाक्य पक्षे सुकन्यका वा स। णिकोऽस्मै सदा दीयते। प्रान्तादस्मै इत्यर्थे णिक स्यात् य प्रान्तनिर्दिष्ट सदा दीयते चेद्भवति अग्रभोजन सदा दीयते अस्मै आग्रभोजनिक प्राथमकल्पिक इत्यादि। प्राणामासौदनमासौदनात् षिक। प्रान्तेभ्य एभ्योऽस्मै सदा दीयतेऽर्थे षिक। प्राणा सदा दीयतेऽस्मै प्राणिक मासिक औदनिक स्त्रिया प्राणिकीत्यादि प्राणिकभार्य्य इत्यादौ षिकविधानात्। पुवद्भाव इत्येके भक्तात णो वा। भक्त सदा दीयनेऽस्मै भाक्त' पक्षे पूर्वेण णिक भाक्तिक.। अस्य देवता। प्रान्तादस्येत्यर्थे वेत्त्यादित्वात् ण स्यात् यत् प्रान्तनिर्दिष्ट सा देवता चेद्भवति। मूले शिवो देवतास्येति शैव शाक्त इति शक्तिर्देवतास्य इति वाक्य देवताशब्देनेह देयस्य पुरोडाशादे. स्वामीष्यते यथा शैव हविरित्यादि कथ शैवो मन्त्र. शैव. स्तव इत्यादि

स्य' शिव प्रकाशकत्वेन मन्त्रस्तुत्यादि शिवो देवतेत्युपचार इति। यमादिस्तु याम्यम् आदित्य प्राजापत्य पाशुपत आग्नेय आग्नेयी ब्राह्मण इत्युपमानात् कालेय देव दैवम् औत्समित्यादि। कस्य णे काय। क प्रजापति को देवतास्य काय हवि। शुक्रादिय.। प्रथन्तात् शुक्रशब्दात् देवतास्येत्यर्थे इय स्यात् ण्यस्यापवाद। शुक्रो देवतास्य शुक्रियम्। शतरुद्रादेरीयश्च पते प्रश्च। प्रथन्ताच्छतरुद्रादेर्देवतास्येत्यर्थे इय ईयश्च स्यात् तयो पते प्रादेश। शतरुद्रो देवतास्य शतरुद्रिय शतरुद्रीयम्। अपोनपात् अपानपात् शब्दो देवताविशेषवाचकौ अपोनपाद्देवतास्य अपोनप्त्रियम् अपोनप्त्रीयम् अपानप्त्रीयम्। शतरुद्रा अपोनपात् अपानपात् इति त्रयम् ॥ ४३७ ॥ महेन्द्राद्वा तौ। प्रथन्तान्महेन्द्रशब्दात्तौ इय ईयौ वा स्याता देवतास्येत्यर्थे महेन्द्रो देवतास्य महेन्द्रीय महेन्द्रिय पक्षे माहेन्द्रमिति। वायुपैङ्गाक्षीपुत्रादिभ्या ईयौ। प्रथन्ताद्वायोरिय पैङ्गाक्षीपुत्रादेरीय स्यात् देवतास्येत्यर्थे। वायुर्देवतास्य वायव्य वायुरुक्तं तुरुष पिता चतुष्क परिकीर्त्तितम्। पैङ्गाक्षी पुत्रो देवतास्य पैङ्गाक्षी-पुत्रीय तृणविन्दवीय पैङ्गाक्षीपुत्रतृणविन्दू द्वौ। मरुत्वतादेश्च। प्रथन्तात् मरुत्वतादेर्देवतास्येत्यर्थे येयौ स्याता मरुत्वान् देवतास्य मरुत्वत्य मरुत्वतीय शुनो वायु. शीर आदित्य. शुनश्च शीरश्च ते देवते अस्य शुनाशीर्यं शुनाशीरीयम्। मरुत्वद्व-ह्मसेव्यग्नीषोम द्यावा पृथिव्यपि। वस्तोपाति शुनाशीर इह षट् परिकीर्त्तिता। सोमात् ण्य। अत्रार्थे ण्य स्यात् सोमो देवतास्य सौम्य हवि.। अपत्योपलक्षकत्वात् सौमी ऋक् ण्यस्य लोप। महाराजप्रोष्ठपदाभ्या ष्णिक.। प्रथन्ताभ्यामाभ्या देव-तास्येत्यर्थे ष्णिक स्यात् महाराजो देवतास्य माहाराजिक प्रौष्ठपदिक.। कथ महाराजिक इति महती राजिर्यस्येति इ क कालेभ्यो भववत्। येभ्य. काल-वाचिभ्यो भवार्थे ये त्या विहितास्तेभ्य प्रथन्तेभ्यस्तेभ्यो देवतास्येत्यर्थे स्यु। मासो देवतास्य मासिक सावत्सरिक वासन्त हैमन्त हैमन प्रावृषेण्यमिति छन्दोभ्यस्त-दादि प्रागर्थे प्रथन्तेभ्यश्छन्दोवाचिभ्यश्छन्द आदि प्रागर्थे वेत्यादित्वात् ण. स्यात्। पङ्क्तिरादिर्यस्य प्रागर्थस्य पाङ्क्त प्रगाथ आनुष्टुभ प्रगाथ यत्र प्रगन्थनात् प्रगाथ-त्वात् द्वे ऋचौ तिस्र क्रियेते सगस्सप्रगाथ। तदादीति किम् अनुष्टुप् मध्यमास्य प्रगायस्य प्रगाथ इति कि पङ्क्तिरादिरस्यानुवाकस्य छन्दोभ्य इति किम् उदयशब्द आदिरस्य प्रगाथस्य। योद्धृप्रयोजनेभ्यो युद्धस्य। प्रथन्तात् युद्धवाचिन प्रयोजन-वाचिनश्चास्येत्यर्थे वेत्यादित्वात् ण स्यात् यत् योनिर्दिष्ट तत् युद्ध चेद्भवति। अर्जुनो योद्धास्य सग्रामस्य आर्जुन. सग्राम. पञ्चालो योद्धास्य सग्रामस्य पाञ्चाल;

सग्राम सुभद्रा प्रयोजनमस्य सौभद्र सग्राम । सग्राम इति कि सुभद्रा प्रयोजनमस्य दानस्य यौङ्प्रयोजनेभ्य इति किं सुभद्रापेक्षितास्य सग्रामस्य। कालेभ्य सोढे। प्रान्तेभ्य कालवाचिभ्य सोढार्थे वर्त्तमानेभ्योऽस्येत्यर्थे भवादित्वात् यथाविहित त्या स्यु । सोढ जितमभ्यस्तमित्यथ । निशासहचरितमध्ययन निशा तत् सोढमस्य छात्रस्य नैशम्छात्र नैशिक प्रादोष प्रादोषिक निशासम्भ्यध्ययनमभ्यस्यतीत्यर्थ । निवासे। प्रान्तान्निवासेऽर्थे वर्त्तमानात् यथाविहित भवादित्या स्यु । निवसत्यस्मिन्निवास यत् प्रान्तनिर्दिष्ट स निवासश्चेद्भवति। स्रुघ्नो निवासोऽस्य स्रौघ्न पुरुष । अभिजने। अभिजना पूर्वबान्धवास्ते सन्ति यत्र सोऽभिजन अर्शोदित्वाद तथाच यत्र सम्प्रत्युष्यते स निवास यत्र बान्धवै पूर्वमुषित सोऽभिजन इत्यर्थ । प्रान्तादभिजनार्थे वर्त्तमानात् भवादित्वादस्येत्यर्थे यथाविहित त्या स्यु । स्रुघ्नोऽभिजनोऽस्य स्रौघ्न पुरुष माथुर राष्ट्रिय इत्यादि पृथग्ग्रहणमुत्तरार्थम् । सिन्धुतक्षशिलादिभ्य, ष्णट्ठौ । प्रान्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्याम् अस्येत्यर्थे क्रमात ष्णट्ठौ स्याताम् । सिन्धुरभिजनोऽस्य सैन्धव । सिन्ध्वादि यथा। सिन्धुकश्मीरकिष्किन्ध्य शवकच्छोऽथवर्णव । गन्धार दरदौ शाल्वशब्दिका मधुमत्तथा। चरता च त्रय प्रोक्ता शब्दा द्वादश कोविदै । सिन्धुवर्णमधुकश्मीरशाल्वाना पाठ कच्छादित्वात् न ततस्थयोर्लुक्बाधनार्थ । शेषाणा त्वविषयादिति णकबाधनाय । तक्षशिलादिस्तावत् तक्षशिलाभिजनोऽस्य ताक्षशिल.। इह तक्षशिलावत्सौ वत्सोद्धरणववटी। शवलग्रामणीकौत्सवरसङ्कुचिता अपि। कौमेदुवार्शायसिंहकोष्ठाश्च काण्डवारणम्। कसच्छिन्नौ च कौत्सश्च शब्दा षोडश कीर्त्तिता । कौत्स सवरणग्रामणी काण्डवारणाना जनपदत्वात णकबाधनाथ शेषाणा त्वविषयादिति णकबाधनाय । ढेयो गिरिभ्य शस्त्रजीविनि। प्रान्तेभ्योऽभिजनेऽर्थे वर्त्तमानेभ्यो गिरिवाचिभ्योऽस्येत्यर्थे शस्त्रजीविनि वाच्ये ढेय स्यात्। हृद्गोला गिरिरभिजनोऽस्य हृद्गोलीय शस्त्रजीवि कुद्दालीय शास्त्रजीवी। शस्त्रजीविनीति किम् ऋक्षोदो गिरिरभिजनोऽस्य विप्रस्य आर्क्षोदो ब्राह्मण गिरिभ्य इति कि साङ्काश्योऽभिजनोऽस्य साङ्काश्यक शास्त्रजीवी। शण्डिकादेर्ण्य । प्रान्तादभिजनेऽर्थे वर्त्तमानात् शण्डिकादेरस्येत्यर्थे ण्य स्यात्। शाण्डिकोऽभिजनोऽस्य शाण्डिक्य सार्वसेन्य । शाण्डिका सर्वसेनश्च सर्वकेशो बुधैर्हि षट्। शङ्काबाध शककक, ऋचवाच प्रकीर्त्तित । तुदीवर्म्मतीभ्या ष्णेय । प्रान्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्यामस्यार्थे ष्णेय. स्यात् । तुदी अभिजनोऽस्य तौदेय.

चार्म्मेतेय । शालातुरानीय । शालीतुरीऽभिजनोऽस्य शालातुरीयम् । सेव्ये । प्रान्तात् सेव्येऽर्थे वर्त्तमानादस्येत्यर्थे भवादिवात् यथाविहित त्या स्यु । सुघ्न सेव्योऽस्य स्रौघ्न माथुर राष्ट्रिय इत्यादि । अकालदेशादचित्तात् णिक । प्रान्तात् कालदेशभिन्नादचित्तवाचकात् सेव्येऽर्थे वर्त्तमानात् अस्येत्यर्थे णिक स्यात् । अपूप सेव्योऽस्य आपूपिक शाष्कुलिक पायसिक । अचित्तादिति किं दैवदत्त अकालदेशादिति किं ग्रैष्म स्रौघ्न । महाराजाच्च । महाराज सेव्योऽस्य महाराजिक स चित्तार्थोऽयमारम्भ । गोवच्चवियाख्येभ्यो णकौ वासुदेवार्जुनाभ्यान्त्वणित् । प्रान्तेभ्य सेव्येऽर्थे वर्त्तमानेभ्योऽपत्यान्तेभ्य चवियाख्येभ्यश्च अस्येत्यर्थे णक स्यात् । वासुदेवार्जुनाभ्यान्तु अक स्यात् । ग्लुचुकायनि सेव्योऽस्य ग्लौचुकायन औपगवक । चवियाख्येभ्यस्तावत् नकुल सेव्योऽस्य नाकुलक साहदेवक शाल्वक आभ्या ग्रहण प्रसिद्धचवियग्रहणार्थं तेन मूढचविय सेव्योऽस्य मौढ । वासुदेवशब्दोऽत्र देववाची वासुदेव सेव्योऽस्य वासुदेवक एवमर्जुनक । क्वचिदनभिधानान्न भवति पाणिनीय पौरवीय । ब्वे रूढाज्जनपदवत् । प्रान्तादभिजनेऽर्थे वर्त्तमानाद्वा विषयाद्देशतुल्याख्यचवियात् जनपदतद्वाचिभ्यामित्यादौ यस्मात् यौ विहितः तस्मा त् स त्य स्यात् अस्येत्यर्थे । अङ्गा चविया सेव्या अस्य अङ्गिक वङ्गिक मद्रक वृजिक । ब्व इति किं मद्रस्यापत्य माद्र वृजेरपत्य वार्ज्य वृद्धेत् कोशलेत्यादिना ञ्यङ् । माद्रौ सेव्यौ अस्य माद्रक वार्ज्यक । रूढादिति किं पञ्चाला विप्रा सेव्या अस्य पाञ्चाल. । णिक पण्ये किशरादेस्त्वणित् वा शलालुन । प्रान्तात् पण्येऽर्थे वर्त्तमानादस्येत्यर्थे णिक स्यात् विकल्पु किशरादे शलालुशब्दात्तु वा । मोदक पण्यमस्य मौदकिक आपूपिक लावणिक । किशरादेस्तावत् किशर पण्यमस्या किशरिकी नलदिकीत्यादि । किशर नलद पर्णी हरिद्रोशीरगुग्गुलु । हारिद्रभगवौ चैव स्थगरौ मदरो दश । किशरादयो दश शब्दा गन्धविशेषवाचका । शलालुपण्यमस्य शलालुक इकस्य क स्त्रिया शलालुकी पचे णिक शालालुकी । शिल्पे । णिक इत्यनुवर्त्तते प्रान्तात् शिल्पेऽर्थे वर्त्तमानात् अस्येत्यर्थे णिक स्यात् मृदङ्गवादन शिल्पमस्य मार्दङ्गिक । पाणविक शिल्प कौशल क्रियाभ्यासपूर्वकज्ञानविशेष इति न्यासकार । वस्तुतस्तु ज्ञानविशेषजन्याभिघातविशेष । ननु मृदङ्गवादन शिल्पमस्येत्यर्थोपादानात् मृदङ्गवादनशब्दात् त्यो भविष्यति कथ मृदङ्गशब्दादिति सत्य मञ्चा क्रोशन्तीति वत् मृदङ्गादिशब्दास्तत्तद्वादनेऽप्युपचारा वर्त्तन्त इति । मड्डुकझर्झराभ्या णो वा । प्रान्ताभ्यामाभ्या शिल्पेऽर्थे वर्त्तमानाभ्या अस्येऽर्थे

ण्या वा स्यात्। मड्डुकवादन शिल्पमस्य माड्डुक । झार्झर पचे माड्डुकिक: झार्झरिक । प्रहरणे। प्रग्न्तात् प्रहरणेऽर्थे वर्त्तमानादस्येत्यर्थे णिक स्यात् मण्डुकगत्या णिकोऽनुवर्त्तते। असि प्रहरणमस्य आसिक चाक्रिक प्रासिक धानुष्क उसन्तादिकस्य क। शक्तियष्टिभ्या णीक। प्रग्न्ताभ्या प्रहरणार्थे वर्त्तमानाभ्यामाभ्याम् अस्येत्यर्थे णीक स्यात् णिकस्य बाधक.। शक्ति प्रहरणमस्य शाक्तीक याष्टीक.। शीले। प्रग्न्ताच्छीले अर्थे वर्त्तमानादस्येत्यर्थे णिक, स्यात्। परुषवचन शीलमस्य पारुषिक' अपूपभक्षण शीलमस्य आपूपिक अत्रापि उपचारात् परुषादिशब्दा वचनादौ वर्त्तन्ते। छत्रादेर्ण। प्रग्न्ताच्छीलार्थे वर्त्तमानाच्छत्रादेर्ण स्यात् अस्येत्यर्थे। छत्र छादनमावरण शीलमस्य छात्र। छत्र शिक्षा क्षुधिर्भिक्षा चुधा सत्यानृतानि च। पुरोदाशोदकस्थानकर्म्माणि विशिखा तथा। आवन्तात् स्थ.। प्रग्न्तादावन्तात् स्थाधौर्निष्पन्नाच्छीलार्थे वर्त्तमानादस्येत्यर्थं न स्यात्। सस्था शीलमस्य सास्थ स्त्रिया सास्था। तपश्चुराभ्या णा। तप शीलमस्या तापसी चुरा शीलमस्या चौरी। अध्ययने कर्म्मवृत्तम्। अध्ययनविषये कर्म्मवृत्तमस्येत्यर्थे प्रग्न्ताच्छिक स्यात्। एकरूपम् कर्म्मवृत्त अध्ययनेऽस्य ऐकरूपिक' तार्थे गस। एकमन्यत् कर्म्मवृत्तमध्ययने अस्य ऐकान्यिक अध्ययने नियुक्तस्य परीक्षाकाले पाठितस्खलितरूपमेकम् अन्यत् कर्म्मजातमित्यर्थ। अध्ययने ह्यन्यत्वमपपाठरूपमेव सम्भवति। बह्वच्पूर्वादिक। प्रग्न्ताद्बह्वच्पूर्वदात कर्म्मवृत्ताध्ययनेऽस्येत्यर्थे इक. स्यात्। द्वादशरूपाणि कर्म्माणि वृत्तान्यध्ययनेऽस्य द्वादशरूपिक त्रयोदशान्यिक.। अपपाठ एव वृत्ते त्य इष्यते इति न्यासकार। आस्तिनास्तिभ्या मतौ। प्रग्न्ताभ्यामाभ्या मतौ वर्त्तमानाभ्याम् अस्येत्यर्थे णिक स्यात। विद्यमान. परलोकभावी यस्य स विद्यमानपरलोक स्वर्ग परलोकोऽस्ति इति ज्ञान यस्य स आस्तिक.। एव परलोको नास्ति इति ज्ञान यस्य स नास्तिक सदसत्परलोकत्वे अस्तिनास्तिशब्दौ त्यौ। परे तु त्याद्यन्तप्रतिरूपकौ निपातौ वदन्ति अन्य तु विधिबलात् त्याद्यन्तादेव त्य इत्याहु.। दिष्टात् प्रमाणिकदैवपरयो। प्रग्न्तान्मतौ वर्त्तमानाद्दिष्टशब्दादस्येत्यर्थे णिक स्यात् अनयोरर्थयो प्रमाणान्त:-पातिनी मतिरस्य स दैष्टिक. दैवपरे तु दैष्टिक:। तथाच माघ दैष्टिकता न निघ्नति पौरुष इति। प्रस्मिाणे। प्रग्न्तात् परिमाणे वर्त्तमानादस्येत्यर्थे बहुलदिग्वात् यथाविहित त्या स्यु। प्रस्य. परिमाणमस्य प्रास्थिक द्रौणिक. षष्टिर्जीवित परिमाणमस्य षाष्टीक वर्षशत परिमाणमस्य वार्षशतिक. द्विषष्टी

त्रौविंश परिमाणमस्य इति वाक्ये गादेलुग्विधानात् त्रिंशत्तिक इति जया-दित्य। शत परिमाणमस्य शत्य शतिकं पञ्चक बहुक गणक तातिकः यावत्क यावतिक विंशतिक वंशिक अर्द्धिक. कार्षापणिक प्रतिकः शौर्पः पौर्पिक. अध्यर्द्धशूर्पं अध्यर्द्धशौर्पं साहस्रः अध्यर्द्धसहस्रम् अध्यर्द्धसाहस्रम् अध्यर्द्ध-खारिक विंशतिकोनं अध्यर्द्धपण्यं द्विशाण द्वैशाण द्विनिष्क द्विनैष्किक खारीकं इत्यादि। संख्याया सूत्राध्ययनसङ्घेषु सज्ञायाम्। सूत्रादित्यार्थविशेषण प्रथमान्तात् सख्यावाचिनोऽस्येत्यर्थे अर्हादिवत् त्या स्युः सञ्ज्ञायाम्। अष्टाध्याया परिमाणमस्य सूत्रस्य अष्टक पाणिनीय दशक वैयाघ्रपदीय त्रिक काशकृत्स्नम् अध्ययने तावत् पञ्च परिमाणमस्याधीतस्य पञ्चकोऽधीत सप्तक अष्टक अधीतिरध्ययन स पाठ तस्य सख्या परिमाणं पञ्चावृत्तय पञ्चवारा पञ्चरूपाध्ययनमस्य पञ्चक-मध्ययनम्। स्तोमे डविधिरिति चान्द्रा। पञ्चदशमन्त्रा परिमाणमस्य पञ्चदश-स्तोम एकविंश स्तोम प्राणिसमूहे सङ्घशब्दो रूढ अतएव उक्त सूत्रमिति। पञ्च दशाख्या डत्‌वर्गे। प्रथमान्ताभ्यामाभ्या वर्गाभिधेये तदस्य परिमाणमित्यर्थे डत्‌ स्यात् कस्यापवादः। पञ्चपरिमाणमस्य वर्गस्य पञ्चत् वर्गः दशपरिमाणमस्य वर्गस्य दशत् वर्गः पक्षे पञ्चक दशक वर्ग। शतिर्विंशतिः शत तु वर्गादेर्दशतस्तथा। षडादेश्चिरिव स्यादेतेषु दशतो हि लुक्। द्वेर्विंर्मेक्षि चतुर्विं पञ्चाष्टोऽशीषष्ठसप्तस्याद्दशदशत-स्त्वेममेवदशदशत शतम्। दौदश तौ परिमाणमस्य विंशति। त्रयोदशत परि-माणस्य त्रिंशत्। चतुर्दशतः परिमाणमस्य चत्वारिंशत्। पञ्चदशत परिमाण-मस्य पञ्चाशत्। षड्‌दशत परिमाणमस्य षष्टि। सप्तदशत परिमाणमस्य सप्तति। अष्टादशत परिमाणमस्य अशीति। नवदशत परिमाणमस्य नवति। दशदशत परिमाणमस्य शतम्। त्रिंचत्वारिंशद्‌भ्या डन् ब्राह्मणाख्ये ग्रन्थनामनि। प्रथमान्ताभ्यामाभ्यां तदस्य परिमाणमित्यर्थे डन् स्यात् ब्राह्मणाख्यग्रन्थनामनि। डनावितौ। त्रिंशदध्याया परिमाणमेषां ब्राह्मणानां त्रिंशानि चत्वारिंशानि ब्राह्मणानि। पञ्चतस्तिर्डिच। प्रथमान्तात् पञ्चञ्छब्दात् ति स्यात् स च डित् डित्वात् टिलोप। पञ्चत् परिमाणमस्य पङ्क्तिश्छन्द टिलोपे कडि जस्य कुत्वे कङ। समयात् प्राप्ते। प्रथमान्तात् समयशब्दात् प्राप्तेऽर्थे अर्हत्यादित्वात् णिक स्यात् अस्येत्यर्थे। समयः प्राप्तोऽस्य सामयिक कार्य्यम्। कालात् य। प्रथमान्तात् कालशब्दात् प्राप्तेऽर्थे वर्त्तमानादस्येत्यर्थे यः स्यात्। काल प्राप्तोऽस्य काल्य शीतम्। त्रलादे णः। प्रथमान्ताद्दलादे. प्राप्तेऽर्थे वर्त्तमानादस्येत्यर्थे णः स्यात्।

ऋतु' प्राप्तोऽस्य आर्त्तव पुष्प चेत्यादि। ऋतुश्चोपरतस्यैव प्राप्तिसौऽपि वर्यो मता। प्रयोजने। प्रग्न्तात् प्रयोजनेऽर्थे वर्त्तमानात् लिरर्हत्यादित्वात् णिक स्यात् अस्येत्यर्थे। इन्द्रमह प्रयोजनमस्य ऐन्द्रमहिक गार्ग्यमहिक। एका गाराच्चौरे। प्रग्न्तादेकागारशब्दात् प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे णिक स्यात् चौरेऽभिधेये। एकागार प्रयोजनमस्य ऐकागारिकश्चौर। विशाखाषाढाभ्या णो मन्थदण्डयो। प्रग्न्तात् विशाखाशब्दान्मन्थे वाच्ये आषाढाशब्दाद् दण्डे वाच्ये प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे ण स्यात्। विशाखा प्रयोजनमस्य मन्थस्य वैशाखो मन्थ आषाढो दण्ड। चूडादेश्च। प्रग्न्ताच्चूडादे' प्रयोजनेऽर्थे वर्त्त-मानादस्येत्यर्थे ण स्यात्। चूडा प्रयोजनमस्य चौड। श्रद्धा प्रयोजनमस्य श्राद्ध मित्यादि आकृतिगणोऽयम्। अनुप्रवचनादेरीयो लुक् तु स्वस्तिवाचनादे। प्रग्न्तात् प्रयोजनार्थे वर्त्तमानादस्येत्यर्थे ईय स्यात् स्वस्तिवाचनादेस्तु ईयस्य लुक्। अनु प्रवचन प्रयोजनमस्य अनुप्रवचनीयम्। अनुप्रवचन दीर्घजीवितोत्थापने अपि। उपस्थान तथा सम्प्रेषणाभरणमित्यपि। अनुवासनसयुक्तमनुवादनमीरितम्। स्वस्तिवाचन प्रयोजनमस्य स्वस्तिवाचनम्। स्वस्तिवाचनपुण्याहवाचने शान्ति-वाचनम्। ऋद्धिवाचनमित्यादि बुधैरत्र प्रकीर्त्तितम्। सपूर्वदात् प्रवेशनादे। प्रग्न्तात् सहपूर्वदात् प्रवेशनादे प्रयोजनेऽर्थे वर्त्तमानात् अस्येत्यर्थे ईय स्यात्। गृहे प्रवेशन प्रयोजनमस्य गृहप्रवेशनीयम् अश्वप्रवेशनीय प्रपापूरणीय प्रासा दारोहणीयम्। प्रवेशन प्रपदन पूरणारोहणे अपि। समापन चेति पञ्च शब्दा इह समीरिता। धनादेर्य। प्रग्न्ताद्धनादे प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे य स्यात्। धन प्रयोजनमस्य धन्य। धनमायुर्यश स्वर्गधर्म्मा पञ्चाऽत्र कीर्त्तिता। कालात् प्रकृष्टे णिक। प्रग्न्तात् प्रकृष्टेऽर्थे वर्त्तमानात् कालशब्दादस्येत्यर्थे णिक स्यात्। प्रकृष्ट कालोऽस्य कालिकम् ऋणम् कालिक वैरम्। स्यादीयोऽस्मिंश्च परिखायास्तु णेय। प्रग्न्तादस्यास्मिन् वार्थे ईय स्यात् परिखाशब्दात्तु णेय स्यात्। प्रोनिर्दिष्ट तत् स्यात् चेत् भवति। प्राकार' स्यादासा प्राकारीया इष्टका प्राकार' स्यादस्मिन् प्राकारीया इष्टका प्राकार. स्यादस्मिन् प्राकारीयो देश। प्रासादीय दारु प्रासादीया भूमि क्वचिदनभिधानान्न स्यात् प्राकारो देवदत्त' स्यात्। परिखा स्यादस्यास्मिन् वा पारिखेय स्यादिति सम्भावने खौ। उग-वादिभ्यो हितवत्। प्रग्न्तादुवर्णान्तात् गवादेश्चास्याऽस्मिन् वा स्यादर्थे हितार्थे ये विहितास्ते स्यु। धेनुरस्यास्मिन् वा स्यात् धेनव्य गव्यम् अपूप्यम् अपूपीय तस्य

अष्टमित्यादि। पौर्णमास्यामस्मिन् सञ्ज्ञायाम्। प्रथमान्तात् पौर्णमास्यां वर्त्तमानात् अस्मिन्नित्यर्थे वेत्त्यादित्वात् ष्ण स्यात् सञ्ज्ञायां गम्यमानायाम्। पौषी पौर्णमासी अस्मिन् मासेऽर्द्धमासे सम्वत्सरे वा पौषो मासोऽर्द्धमासो वत्सरश्च। एवमभिधानान्नेह पौषी पौर्णमासी अस्मिन् दशरात्रे इति एवं भूतकमासेऽपि न स्यात्। अश्वत्थाग्रहायणीभ्यां ष्णिको वा तु चैत्री श्रावणी कार्त्तिकी फाल्गुनीभ्यः। प्रथमान्ताभ्यामाभ्यां पौर्णमास्यां वर्त्तमानाभ्यामस्मिन्नित्यर्थे ष्णिक स्यात्। चैत्रादेस्तु वा। अश्वत्थशब्दोऽश्विनीपर्य्याय अविशेषे लुप् अश्वत्थात्तु सञ्ज्ञायां वा तु चित्रेत्यादिना लुप्। अश्वत्था पौर्णमासी अस्मिन् मासे आश्वत्थिको मासः। आग्रहायणी पौर्णमासी अस्मिन्मासे आग्रहायणिको मासः आग्रहायणशब्दात् प्रज्ञादित्वात् स्वार्थे ष्ण पौर्णमासी विशेषणादाग्रहायणीसञ्ज्ञायां नी ण। चैत्रादेस्तु चैत्री पौर्णमासी अस्मिन् मासे चैत्रिकः चैत्रः, श्रावणिकः श्रावणः कार्त्तिकः फाल्गुनिकः फाल्गुनो मासः। पदात् दृश्ये यः। प्रथमान्तात् पदात् दृश्येऽर्थे वर्त्तमानादस्मिन्नित्यर्थे य. स्यात्। पदं दृश्यमस्मिन् पद्यः पद्या कर्दमः पदं पादचिह्नं दृश्यं दर्शनयोग्यमित्यर्थः। एतेन कर्दमस्यावस्था उच्यते नातिद्रवो नातिशुष्कामित्यर्थः। प्रहरणात् ष्ण क्रीडायाम्। अस्मिन्निति वर्त्तते इदमशब्दस्य क्रीडाविशेषणत्वात् लिङ्गव्यत्ययेनास्यामिति। प्रथमान्तात् प्रहरणवाचिनोऽस्यामित्यर्थे ष्ण स्यात् क्रीडाविषये। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा मौष्टी क्रीडा प्रहरणादिति किं मनो भूषणमस्यां क्रियायाम्। क्रीडायामिति किं खड्गः प्रहरणमस्यां सेनायाम्। भावघञन्तात् ञ्णौ स्त्रियाम्। प्रथमान्ताद्भावविहितघञन्तात् अस्यामित्यर्थे ण स्यात् तदन्तश्च स्त्रियाम्। श्येनपातोऽस्यां क्रियायां श्यैनम्पाता मृगया तैलं पाता स्विटक्रिया दाण्डपाता तिथिः मौषलपाता भूमिः। पूर्णमासात् ष्णो वर्त्तते। प्रथमान्तात् पूर्णमासशब्दादस्यां वर्त्तते ष्ण. स्यात् पूर्णमासो वर्त्ततेऽस्यां तिथौ पौर्णमासी तिथिः पूर्णमाश्चन्द्रः तस्येयं इदमर्थे ष्ण पौर्णमासीति व्युत्पत्त्यन्तरम्। अथ प्रकीर्णकम्। कालात् ब्रह्मचर्य्यमस्येति ष्णिक। कालवाचिनो ब्रह्मचर्य्यमस्येति ष्णिक स्यात्। मासं व्याप्य ब्रह्मचर्य्यमस्य मासिको विप्रः आर्द्धमासिकः सांवत्सरिकः। मासो ब्रह्मचर्य्यमस्य मासिक इति प्रथमान्तात् त्य इत्यपरे। एकदिशि। एकदिक्शब्दोऽयं भवादित्वात् यथाविहितं त्या स्युः। सुदाम्न एकदिक् सौदामनी विद्युत् हैमवती त्रैककुदी पैलुमूली। तस्। एकदिश्यर्थे तस् स्यात् सुदाम्न एकदिक् सुदामतः नीलुप्फोधाविति नस्य लुप् स्वरादिपाठादिति त्य एव हिमवत्तः पीलुमूलतः। उरसो यश्च। उर.

शब्दादेकदिश्यर्थे तस् यौ स्याताम्। उरसा एकदिक् उरस्त उरस्य। नौ वयो विष तुला धर्मेभ्यस्ताय्य तुल्य वध्य सम प्राप्ये। एभ्य क्रमादेष्वर्थेषु य स्यात्। नावा तार्य्यं नाव्य वयसा तुल्य वयस्य विषेण वध्य विष्य तुलया समं तुल्य धर्म्मेण प्राप्यं धर्म्यम्। हलसीताभ्यां क्रष्टसङ्गतयोस्तद्वताच। आभ्यामनयोरर्थयो क्रमात य स्यात् तद्वताच। हलेन क्रष्ट हल्य सीतया सङ्गत सीत्य विहल्य द्विसीत्यम्। सतजनाभ्यां साधनजल्पयो। सत्य जन्यम्। मूलात् समानास्ययो। मूलशब्दात् समे आनास्ये च य स्यात्। मूलेन समं मूल्य पट यावद्धन पटोत्पत्तौ लग्न तावदेव लभत इत्यर्थ। मूलेन आनास्य अनभिभवनीय मूल्यम् उत्पाटनव्यतिरेकेणालभ्यपलादीत्यर्थ। स मुख्य एषामिति क। से क स्यात् मुख्य एषामित्यर्थे। त्व मुख्य एषां त्वत्का मत्का देवदत्तका इत्यादि। अन्नमस्मिन् प्रायेण नाम्नि ट्न नौ तु कुल्मासवटकाभ्याम्। प्रायेणान्नमस्मिन्नित्यर्थे क स्यात् नाम्नि गम्यमाने कुल्मासात् ट्न वटकादिनश्च। गुडापूपा प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी स्त्रिया काप्यदि एव तिलापूपिका कौल्मासी वटकिनीतिथि स्वभावात् स्त्रीत्वम्। धातपारायणं कुल्मासी दत्यवान्। शस्यात् परिजाते। शस्यशब्दो गुणवचनस्तस्मात् क स्यात् परिजातेऽर्थे। शस्येन गुणेन परिजात सम्पन्न शस्यको माष शस्यको वत्सर शस्यक शालि सर्वप्रकारेण गुणसम्पन्न इत्यर्थ। अंशाद्धारिणि। अंशशब्दाद्धारिण्यर्थे क स्यात्। अंशको दायाद। अनो कमितर्य्यतेस्तु वार्थश्च। अनुशब्दात् कमितरि वाच्ये क स्यात्। अभेस्तु केवौं वा। अनुकामयते अनुक अभिकामयते अभिक अभीक। तन्त्रादचिरापङ्कवे। तन्त्रशब्दात् अचिरापङ्कवेऽर्थे क स्यात्। तन्त्रको नवकर्पट। शीघ्रशिथिलार्थाभ्यामुष्णशीताभ्यां कारिणि। उष्णशीताभ्यां शीघ्रशिथिलाभ्यां कारिण्यर्थे क स्यात्। उष्ण शीघ्रं कारी उष्णको दक्ष शीत शि[illegible]कारी शीतकोऽलस। ब्राह्मणोष्णाभ्यां देश यवागूविशेषयो। आभ्यामन[illegible] क्रमात् क स्यात्। ब्राह्मणको देशविशेष यत्र देशे आयुधजीविनो ब्राह्मणा [illegible] स देशश्च उच्यते उष्णिका यवागू। अध्यारूढादधिक। अध्यारूढशब्दात क स्यात् केऽधिरादेशश्च। अध्याङ् पूर्वरुहधोऽर्थे यदा क्तस्तदेव अधिको द्रोण खार्य्यां यदा तु ढे क्त तदा ढस्योक्तत्वात् अधिका खारी द्रोणेन। पार्श्वादन्विच्छति णिकस्त्वय शूलदण्डाजिनाभ्याम्। पार्श्वशब्दादन्विच्छतीत्यर्थे क स्यात् अयःशूलदण्डाजिनाभ्यां णिक। पार्श्वमनजूपायलक्षणम्। तेनान्विच्छति अनुसरति पार्श्वक शठ। आयः शूलिक तीक्ष्णकारी साहसिक

इत्यर्थः। दण्डाजिनेनान्विच्छति दण्डाजिनकः दाम्भिकस्तपस्वीत्यर्थः। उत्कण्ठाव त्युद। उद कः स्यात् उत्कण्ठावतीत्यर्थे। उत्कः प्रवासी। शृङ्खलादस्य करभस्य बन्धने। शृङ्खलशब्दादस्य करभस्य बन्धनमित्यर्थे कः स्यात्। शृङ्खलं बन्धनमस्य करभस्य शृङ्खलकः बन्धनमिति किं शृङ्खलं वाममस्य करभस्य करभ इति किं शृङ्खलं बन्धनमस्य गोः। धनहिरण्यात् कामे। आभ्यां कामे कः स्यात्। धनस्य कामः धनकः गेहीऽपि निस्पृहस्तस्य मुमुक्षोर्धनकः कुतः। इति शिष्टप्रयोगः। स्वाङ्गेभ्यः प्रसिते खिकमूदरादाद्यूने। स्वाङ्गवाचिभ्यः प्रसितेऽर्थे कः स्यात्। उदरात् ठिक आद्यूने वाच्ये। केशेषु प्रसितः केशकस्तत्पर इत्यर्थः दन्तकः नखकः इत्यादि बहुनिर्देशात् स्वाङ्गसमुदायादपि नखकेशकः इत्यादि उदरे प्रसितः औदरिकः आद्यूनः क्षुधया पीड्यमानः स्वस्यैवोदरपूरणमपेक्षत इत्यर्थः। अन्यत्र उदरकः। कालाद्रोगनाम्नि। कालवाचकाद्रोगनामनि वाच्ये कः स्यात्। द्वितीयको ज्वरः द्वितीयदिनोत्पन्नो ज्वरः इत्युच्यते तृतीयकः चतुर्थकः इत्यादि। कार्य्यकारणं अस्येति। ते कार्य्यमस्य कारणमस्येति चार्थे कः स्यात् रोगनामनि वाच्ये। शीतं कार्य्यमस्य ज्वरस्य शीतको ज्वरः विषपुष्पं कारणमस्य ज्वरस्य विषपुष्पको ज्वरः। अल्पह्रस्वकुत्सिताज्ञातावक्षेपणेषु। रोगनाम्नीति नानुवर्त्तते। के. कः स्यात् एष्वर्थेषु। अल्पं तैलं तैलकं ह्रस्वो वृक्षः वृक्षकः कुत्सितोऽश्वः अश्वकः इहाज्ञातशब्देन य स्वेन रूपेण ज्ञाते विशेषेणाज्ञातः स गृह्यते कस्यायमश्वकः अश्वकः। अवक्षिप्यते न्यक्क्रियते येन तदवक्षेपणं तस्मिन् वैयाकरणत्वकेन त्वं विकत्थसे व्याकरणत्वगर्वितः। कृपायाम्। कृपाकारुण्येनाभ्युपपत्तिः तस्यां गम्यमानायां ले कः स्यात्। पुत्रकः बुभुक्षितकः ज्वरितकः। तद्युक्तान्नीतौ। कृपायुक्तात् ले कः स्यात् नीतौ गम्यमानायाम्। हन्त ते गुडकाः। कृपायुक्तो दानेनाश्वासयति दानरूपा नीतिर्गम्यते पूर्वेण प्रत्यासत्तेरनुकम्प्यमानादेव त्य इह तु व्यवहितादपि यथा स्यादिति वचनम्। इलेयौ च जातेः नृनाम्नः। मनुष्यनामधेयजातिशब्दात् कृपायां नीतौ गम्यमानायां कः इलेयौ च स्युः। व्याघ्रनामा कश्चित् सोऽनुकम्पितः शिक्षितो वा व्याघ्रकः व्याघ्रिलः व्याघ्रियः इत्यादि। अजिनान्ताल्लोपश्चाजिनस्य। अजिनान्तान्नाम्नस्ते स्युः कृपायां नीतौ गम्यमानायां तेषु अजिनस्य लोपश्च। व्याघ्राजिननामा कश्चित् सोऽनुकम्पितः शिक्षितो वा व्याघ्रकः व्याघ्रिलः व्याघ्रियः. एवं कृष्णाजिनात् कृष्णिलः कृष्णिकः कृष्णियः. इत्यादि। इकस्य बह्वचोऽचि त्वादितीयाच्चतुर्थाची लोप्यः. पूर्वदस्य पर्य्यायेण उकः इनस्य नः। मनुष्यनाम्नो बह्वच.

क इन इय इकश्च एते स्युः कृपाया नीतौ च गम्यमानायाम् आदिद्वितीयाच्च आदि-चतुर्थाच्च परोभागो लोप्यश्च। पूर्वदस्य पर्य्यायेण लोप्यः उगन्तात् परस्य इनस्य नादेशश्च। देवदत्तोऽनुकम्पितः शिक्षितो वा देवदत्तक अचि तु देविक देविन देविय पचे दत्तक दत्तिक दत्तिय शोभनकर्म्मानुकम्पित शिक्षितो वा शोभन-कर्म्मक अचि तु शोभिक शोभिन शोभिय आदिद्वितीयाच्च परो लोप्य पूर्व-दस्य लोपे कर्म्मक कर्म्मिक कर्म्मिण कर्म्मिय इत्यादि। आदिचतुर्थात् तु वृह-स्पतिदत्तक वृहस्पतिक वृहस्पतिन वृहस्पतियः पूर्वस्य पर्य्यायेण लोपे दत्तिक दत्तिन दत्तिय इति मधुसूदनदत्तोऽनुकम्पित शिक्षितो वा मधुसूदनदत्तक मधु-सूदिक मधुसूदिन मधुसूदिय इत्यादि। पूर्वदस्य लोप दत्तिकेत्यादि। बह्वच इति किं दत्तक अचि किं देवदत्तक उकस्तु वायुदत्तोऽनुकम्पित शिक्षितो वा वायुदत्तक अचि द्वितीयाच्च परो लोप्यः न्वोर्लोपौ ताविति वायविक इनस्य नत्वे वायुन वायविय एव भानुदत्तक भानविक भानुन भानविय पितृदत्तक पित्रिक पितृण पित्रिय। एव भ्रातृदत्तक भ्रात्रिकः भ्रातृण भ्रात्रिय इति पचे दत्तक इत्यादि। परैकदेशिनस्तु इयस्य यादेश स्वीकुर्वन्ति तन्मते वायय पितृय इति। तदुक्तम्। चतुर्थादनजादौ च लोप पूर्वपदस्य च। अप्रत्यये तथवेष्ट उगन्तान्न इनस्य चेति। तन्मते अनजादौ के वृहस्पतिक। प्रत्ययाभावे-ऽपि देव पूर्वलोपे दत्त पचे देवदत्त इत्यादि। उपपूर्वात्तकौ च। मनुष्यनाम्न उपादे परौ तकौ चकारात् इक इन इय एते स्युः कृपाया नीतौ च गम्यमानायां द्वाच परभागो लोप्यश्च अचि। उपदत्तोऽनुकम्पित शिक्षितो वा उपतः उपक उपिक उपिन उपियः। अचि किम् उपदत्तक। परलोप्ये द्वितीयेच्च। बह्वचो मनुष्यनाम्न एषु परभागो लोप्य एच्च लोप्य अचि परे। कुवेरदत्तोऽनुकम्पितः शिक्षितो वा कुविक कुविन कुवियः एवम् उपेन्द्रदत्तोऽनुकम्पितः शिक्षितो वा उपिक उपिन उपियः कह्नोडदत्तोऽनुकम्पित शिक्षितो वा कह्निकः कह्निन कह्नियः अचि किं कुवेरदत्तक उपेन्द्रदत्तक कह्नोडदत्तक इत्यादि। एकाजद-परश्च। बह्वचो नृनाम्न एकाच्छब्दात् परभागो लोप्य स्यादचि कृपायां नीतौ च गम्यमानायाम्। वागाशीर्दत्तोऽनुकम्पितः शिक्षितो वा वाचिक वाचिन वाचिय। एवं षडङ्गुलिदत्तोऽनुकम्पितः शिक्षितो वा षडिकः षडिनः षडिय अन्नानिर्दिष्ट-त्वान्नत्वमिति भाष्यम् अचि किं वागाशीर्दत्तकः षडङ्गुलिदत्तक। आदिद्वतीया-द्वचोऽर्य्यमादेः। बह्वचो नृनाम्नोऽर्य्यमादेरादिद्वतीयाच्च परभागो लोप्यः स्यात्

अचि पर्वे कृपायां नीतौ गम्यमानायाम्। अर्य्यमदत्तोऽनुकम्पित शिक्षितो वा आर्य्यमिक आर्य्यमिण आर्य्यमिय। अचि किम् अर्य्यमदत्तक। अर्य्यमा शेवलश्चैव विशालवरुणौ तथा। विशाखशरणश्चापि अर्य्यमादि प्रकीर्त्तित.। अर्य्यमादेरिति किं शोभनकर्म्मानुकम्पित. शिक्षितो वा शोभिक इत्यादि। क प्रतिरूपनाम्नो-रिवे। प्रतिरूप प्रतिकृतिस्तस्या सञ्ज्ञाया च इवार्थे सादृश्ये क स्यात्। अश्वक गर्दभक चित्रक यथा तत्प्रकृतिरुच्यते अथवा तत्सदृशस्यैव सञ्ज्ञायाम्। प्रतिरूप इति किं गौरिव गवय। लुम्मनुष्यविक्रेयजीविकार्थचित्रध्वजार्चासु। मनुष्यवाच्ये विक्रेयवर्जंजीविकार्थेषु कस्य लुप् स्यात्। चञ्चेव नर चञ्चा चञ्चावर्द्धिका जीविकार्थेषु चित्रध्वजाऽर्चान्नित्याभिधानम्। राम कृष्णरामादिप्रतिकृति गृहीत्वा भ्रमतीत्यथ ध्वजेगरुड वृष अर्चाया वासुदेव देवनादीना जीविकार्था प्रतिकृतय उच्यन्ते। अविक्रेय इति किं वासुदेवकात् विक्रीणीते। अनर्चादिषु तु हस्तिकान् छायादर्शकी दर्शयति। देवपथादेश्च। देवपथादे प्रतिरूपे कस्य लुप् स्यात्। देवपथस्य प्रतिकृति देवपथ। देवाजशङ्कुहंसेभ्य पथिन् कङ्कमुख तथा। मत्स्येन्द्रवास रज्जुश्च काकतुण्डश्च कश्यप। सिद्धपथो दश प्रोक्ता बुधैर्वा विपथेन च। वस्ते ढञ् शिलायास्त्वणिद्वा। वस्तिशब्दादिवार्थे ढञ् स्यात् शिलाशब्दात् ढञोऽणिद्वा स्यात्। वस्तिरिव वास्तेय. शिलेव शिलेय अप्रतिरूपेऽपि वास्तेय इत्यपर। कुशाग्रादेरीय.। कुशाग्रादिशब्देभ्यो इवार्थे ईय. स्यात् कुशाग्रमिव कुशाग्रीया बुद्धि सूक्ष्मत्वादतितीक्ष्णत्वाच्च। अध्वजरतीव अध्वजरतीयम् अध्वजरती समाने वर्त्तते तद्वदिष्टानिष्टत्वात्। काकतालीय काकतालशब्द काकस्य गमन एव तालस्य पतनेन काकस्य मरणे वर्त्तते तद्वत् आकस्मिक सङ्गतम् एव घुणाक्षरीयम् अजापनीयम् अध्वगतीय खलतिबल्लीयमित्यादि। काकतालादिशब्दाना अर्थविशेषे स गणपाठबलात् अथवा मयूरव्यंसकादित्वात्। शर्करादे ष्ण सपत्न्यास्त्वणित्। शर्करादेरिवार्थे ष्ण स्यात् सपत्नीशब्दात्त्वणित् शर्करेव शार्कर। शर्करा पुण्डरीकश्च शतपत्रम् कपालिका। गोलोमापि च नाराच सिकता नकुल तथा। कृकाटिका च गोपुच्छ कृपा चैव प्रयोगत। सपत्नीव सपत्नश्च प्रतिपच्च स उच्यते। अङ्गुल्यादे. ष्णिक एकशालायास्त्वणित्। अङ्गुल्यादेरिवार्थे ष्णिक स्यात् एकशालायास्तु ष्णिक इदहितः। अङ्गुलीव अङ्गुलिक। अङ्गुलि कुलिश वल्गु रुदस्वित् बभ्रुमण्डलम्। घोनीचर्म्मणिर्वक्र कपिलो भरुजो हरि। खलवर्णौ च विज्ञेयौ शकुलिश्चोरसा सह। एकशालेव एकशालिक चकारात् ष्णिकश्च ऐकशालिक इत्यन्ये। कर्क-

लोहिताभ्या णीकं। आभ्यामिवार्थे णीक स्यात् कर्कं इव कार्कीकं लौहितीकं स्वयमलोहितं स्फटिकादि जवाद्याश्रयवशाल्लोहितं इवाभासते य स एवोच्यते। शाखादेर्यो द्रौस्तु भव्ये च। शाखादेरिवार्थे य स्यात् द्रुशब्दात्तु भव्य चेद् य'। शाखेव शाख्यम्। शाखामुखो रोजघानाग्र मेघा स्कन्धश्च शृङ्गं वचनञ्च तव। व्रातेन सार्द्धं शरणेन चाऽपि शाखादिरुक्तो बहुभिः प्रयोगात्। द्रुरिव द्रव्य स्वभावात् क्लीवलिङ्ग यथा द्रुमः फलादिभिरर्थिनः प्रीणाति तथायमपि स्वविभवे भवति आत्मगुणसम्पन्नोऽपि द्रव्यमुच्यते द्रव्यं हि क्रिया विनयति द्रव्यमिति हिरण्यादिकमपि द्रव्यं पुरुषार्थसाधकत्वात् णीककणीनेर्थांश्चेति त्वनिर्देशात् अन्ये त्याश्च यथा। एकात् काकिनौ संजातीयासहाये। इवेति निवृत्त सजातीय-द्वितीयरहिते एकशब्दात् क आकिन् एतौ स्याताम्। एकक एकाकी शतमेका-किनो यान्तीति चिन्त्यं अष्टमाञ्ञो भागे लुक् वा षष्ठात्तु माने कश्च अष्टमो भागं आष्टमं लुक् वा अष्टम। षष्ठो भाग षाष्ठ षष्ठ माने तु षष्ठक षाष्ठ षष्ठ। तन्न सहते हिमादेलु। हिमशब्दादेलु स्यात् तन्न सहते इत्यर्थे हिमं न सहते हिमेलु। शीतोष्णतृप्रादालु। एभ्यो न सहते इत्यर्थे आलु स्यात्। शीतं न सहते शीतालु उष्णालु तृप्रालु। बलवातादूल। आभ्यां न सहते इत्यर्थे ऊलं स्यात्। बलं न सहते बलूलः वातूलः। आभीक्ष्ण्ये सङ्ख्यादेरक पाद पाश्च। सङ्ख्यापूर्वात् पादशब्दादाभीक्ष्ण्येऽक स्यात् पादस्य पच्च। द्वौ द्वौ पादौ ददाति द्विपदिका ददाति तार्थेगसङ्ख्याऽकः कात्यदि त्ये आभीक्ष्ण्ये द्योतिते सति न हिं एव त्रिपदिका द्वे द्वे शते दिशतिका द्विमोदिका ददाति आभीक्ष्ण्य इति किं द्वौ पादौ ददाति ददात्यर्थोपयार्थो। दानार्थकत्वे तु परसूत्रविषय। दण्डव्यप-सर्गयोश्च। अवीप्सार्थोऽयमारम्भः व्यपसर्गो दानं द्वौ पादौ दण्डितः द्विपदिकां दण्डितः द्वौ पादौ व्यपसृजति द्विपदिकाम् एवं द्वितीयिकां द्विमोदिकामित्यादि। द्वौ द्वौ मासौ ददाति द्वौ मासौ व्यवसृजति इत्यत्र न स्यादनभिधानात्। वेश्च नानाशसङ्कटा। वेरिते सु'च इत् चित्वादेग्र विना विनाशः विसङ्कटः नञ आनाच्। नञ्शब्दादानाच् स्यात् चित्त्वाद्य नाना। नेर्विडविरीषौ। नेरिमौ स्याताम्। निविडं निविरीषम् किल कक पिटाश्चिश्चेषु। नेरित्यनुवर्त्तते नेरिते सु तस्य न्नियोगे निश्चिरादेशश्च। चिकिल चिकक चिपिट सार्थे के चिपिटकं एते गुणशब्दा यथा कथञ्चिदुन्नेयाः अतएव सूत्रकारैर्णोपेक्षिताः। क्लिन्नाल्लश्चक्षुषि ले चिल्पिश्च तः। क्लिन्नशब्दात् चक्षुषि वाच्ये लः स्यात् ले परे क्लिन्नशब्दस्य चित् पित्

लुत् एते आदेशाः स्युः। चिक्क पिक्क चुक्क तीर्लेल। अवात् कटकुठारौ वैरूप्ये भट टीटलाटास्तु नासिकानमनादौ। अवशब्दात् वैरूप्ये कटकुठारौ स्याता नासिकानमनादौ तु भट टीट लाटा स्युः। अवकट अवकुठार जवभट अव टीट अवलाट नतनासिक इत्यर्थः। पचात्तिर्मूले स्त्रियान्तु यून। पक्षशब्दात्ति स्यात् मूलेऽर्थे युवन्शब्दात्तु स्त्रियाम्। पक्षति युवति। तिलात् पिञ्जपेजौ निष्फले। तिलशब्दान्निष्फलेऽर्थे एतौ स्तः। तिलपिञ्ज तिलपेज निष्फल इत्यर्थः। पितृमातृभ्यां डामहस्तत्पितरि तद्भ्रातरि तु व्यड्डुलौ। सौवत्वात् नङ्गा। आभ्यां तयोः पितरि डामह स्यात् तयोर्भ्रातरि तु क्रमात् व्यड्डुलौ स्तः ड इत्। पितामह मातामह पितुर्भ्राता पितृव्य मातुर्भ्राता मातुल। अवेर्दुग्धे सोढदूसमरीसाः। अविशब्दो मेषवाचकः तस्मात् दुग्धेऽर्थे एते स्युः। अविसोढम् अविदूसम् अविमरीसं विधानसामर्थ्यान्नत्व इति जयादित्यः। भर्तृहरिस्तु मूर्द्धन्य एव विदध्यात्। विस्तारे पटः। विस्तारेऽर्थे पट स्यात्। अवीना विस्तार अविपट प्रातिपदिकादिति परे। अध्युपाभ्यां त्यकोऽद्रूरद्वासन्नभागयोः। आभ्यां क्रमादेतयोरर्थयोस्त्यक स्यात्। अधित्यका अद्रेरूर्द्ध्वभागः उपत्यका अद्रेरासन्ना भूः स्वभावादनयोः स्त्रीत्वम्। कथं समुद्रोपत्यका हैमी पर्वताधित्यका पुरीति चेत् सत्यं समुद्रोपत्यकेत्युपचारात्। ष्णिक उदरात्तदधीनालसे। उदरशब्दात् तदधीनालसे वाच्ये ष्णिक स्यात्। औदरिक। इन्द्रादियो लिङ्गादौ चेवात्तु परत्रैव चिकित्स्ये। इन्द्रशब्दादिय लिङ्गदृष्ट सृष्ट जुष्ट दत्तेषु। चेवशब्दात्तु परत्रैव चिकित्स्ये इत्यर्थः। इन्द्र आत्मा तस्य इदम् अनुमापक लिङ्गम् इन्द्रियम् आत्मा चक्षुरादिभिरनुमीयते न खलु कर्तृ करणमस्ति अथवा इन्द्रस्यात्मनो विषयोपभोगाय भवति तस्येदम्। परत्रैव जन्मान्तर शरीर तत्र चिकित्स्य इत्यर्थे चेवियो व्याधि स इह जन्मन्यसाध्य इत्यर्थः अथवा परत्रैवम् अन्यशरीरं तत्र सङ्क्रमय्य चिकित्स्य चेवियम्। अथवा श्वस्यैव तृणस्यैव वा परत्रैव तत्र चिकित्स्य विनाश्य तृण चेवियम् अथवा परदारा परत्रैव तत्राशुभहेतुत्वात् तत्र चिकित्स्यो नियाम्यः पारदारिक चेविय शालीनकौपीनसाप्तपदीनान्यऽधृष्टाकार्य्यसख्येषु। एतान्येतेषु अर्थेषु खीनान्तानि निपात्यन्ते। शालाप्रवेशमर्हति शालीना वधू अधृष्टेत्यर्थः। कूपप्रवेशमर्हति कौपीनमकार्य्यम्। सप्तभि पादै प्राप्य सख्य साप्तपदीन सख्यम्। यथा मुखीनसम्मुखीनौ दर्शने। दर्शनेऽर्थे एतौ निपात्येते दृश्यतेऽत्र दर्शन मुखस्य सदृश यथामुखं यथासादृश्ये इति वसः दर्पणादिस्थप्रतिबिम्ब उच्यते

नत्सादीनो निपात्यते तथाच यथामुखीन सीताया' पुप्लुवे बहुलोभयन्निति भट्टि: सम च तत् मुखञ्चेति सम्मुखीन निपातनात् समकारस्याकारलोप अथवा सम्य-गर्थेन समशब्देन प्रादिस द्राभ्या दर्पण उच्यते। सर्वचर्म्मणो खीनेनौ कृते। अस्मात् कृते खीनेनौ स । सर्वेण चर्म्मणा कृत सार्वचर्म्मीण सूत्रनिर्देशात् घस षीसे त् सर्वस्य चर्म्मणा कृतमिति वाक्यम् । साक्षात् द्रष्टरि सञ्ज्ञाया ञिन् । साक्षा-च्छब्दात् द्रष्टरि वाच्ये ञिन् स्यात् नाम्नि । साक्षी साक्षिणौ साक्षिण इति । अनु-पदादिन्नन्वेष्टरि । अनुपदशब्दादिन् अन्वेष्टरि वाच्ये । मृगस्यादनुपदी रामो जगाम गजविक्रम । सपूर्वपूर्वात् । सपूर्वदात् पूर्वशब्दात् इन् स्यात् । कृत पूर्वमनेन कृतपूर्वी कट भुक्तपूर्वी ओदन । इष्टादि । इष्टमनेन इष्टी यागे अधीती व्याकरणे निराकृती गृहीती कृतीश्रुतीत्यादि । इष्टसङ्कलिताऽधीत पूर्त्तव्याकुलिताऽटितम् । नियुक्तागदितायुक्त निगृहीतावकल्पितम् । निराकृत निपतित गदित परिरचितम् । आसेवितावकीर्णावधारितञ्च निसारितम् । श्रुतसरचिता स्नातोऽपाकृतोपकृतानि च । परिगदित परिकलितम् । निकथित-मुपसादिताऽनुगुणितञ्च । अनुपचित परिगणित तथा पचितमुद्गृहीतञ्च । पूर्वात् भुक्ते । केवलपूर्वशब्दात् भुक्तेऽर्थे इन् स्यात् । पूर्वमनेन आशित भुक्त पीत वा पूर्वी । श्राद्धादिकश्च । श्राद्धशब्दात् भुक्तेऽर्थे इक स्यात् चकारादिन् च । श्राद्ध वैदिककर्म्मविशेषस्तत्साधन द्रव्य श्राद्धम् उपचारात् तस्मिन्नहनि भुक्त येन स श्राद्धी दिवसान्तरे भुक्ते न श्राद्धीत्युच्यते । नवयज्ञादेर्णिकोऽत्र वर्त्तते । नवयज्ञादेरत्र वर्त्ततेऽर्थे णिक स्यात् । नवयज्ञो वर्त्ततेऽस्मिन् नावयज्ञिक पचे याज्ञिक इत्यादि-राकृतिगण । धैनी स्त्री दुग्धे ऋणदत्तायाम् । धेनुशब्दात् दुग्धरूपेण ऋणदत्ताया धैनी वाच्याया स्त्र स्यात् । धेनुष्या गौ । अथ चातुरर्थिक । अस्मिन् देशे ऽस्तीति नाम्नि । अस्मिन् देशे अस्तीति वेत्त्यादित्वात् ण स्यात् सञ्ज्ञायाम् । उडु-म्बरोऽस्मिन् देशेऽस्ति औडुम्बरो देश एव वाल्वज पार्वत इत्यादि मत्वर्थीयापवादो-ऽय योग । निर्वृत्ते । नास्तीति वर्त्तते लेखेन निर्वृत्ते अर्थे वेत्त्यादित्वात् ण नाम्नि । सहस्रेण निर्वृत्तो परिखा साहस्री परिखा कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । निवासादूरभनयो स्त्रे परोऽनयोरर्थयोर्वेत्त्यादित्वात् ण स्यात सञ्ज्ञायाम् । निवसत्यस्मिन् निवास शिबीनां निवासो देश शैबो देश एव ऋजुनावान निवासो देश आर्ज्जुनाव' आम्बष्ठ' विदिशाया अदूरे भव वैदिश । औरसुवाख्यादेष्ट्रस्तेषु । उवर्णादसुवान्वादशतुर्षु अर्थेषु ट्र स्यात् सञ्ज्ञायाम् । अवटङ सन्ति अस्मिन् देशे

आवटव ककतव: सन्त्यस्मिन् देशे काकतव.। सुवास्त्वादिसु सुवास्तव' सन्त्यस्मिन् देशे सौवास्तव ट्टणयो सङ्काङ्कयोपलक्षणेषु भेद:। सुवास्तु शौवलीवर्णं, शिखण्डी खण्डुकर्कशौ। कण्डु कठीलष्टकर्णौ विकर्वश भगीरथ । गर्भ्म कर्कन्धु मत्यऽवि-र्णाडकपूरिणौ तथा। बीषीवीखन्त कौञ्च तथा भीमरथौ मत.। अत्रीवर्णाति-रिक्ताना पाठो विपाशोत्तरकूपे चेति ट्णबाधनार्थ । बीषीवीखन्तरयो: पाठात् बौषाना सङ्घ. वौषीय आजकवीणीय इत्यादि। कौञ्चावत् कर्णच्छिद्रकेण निर्वृत्ता कार्णच्छिद्रका तेषा सङ्घ कार्णच्छिद्रकीय एव कार्कवाकवीय इत्यादि। बह्वजन्ताभ्यां मतुवतुभ्यां च। बह्वच परस्मान्मतोर्वतोश्च चतुर्ष्वर्थेषु ट्ण: स्यात्। सुरुचिमता निर्वृत्त सौरुचिमत इकक्कटशब्दात् मीञ्मभूपादतुरिति वतु मात्वर्थे इतिर्घ इककटवान् तेन निर्वृत्त ऐककटवत बह्वजन्ताभ्यामिति किं माला वता निर्वृत्त मालावत तस्य सङ्घ मालावतीय । कूपे बह्वच । बह्वच् ते कूपे वाच्ये चतुर्ष्वर्थेषु ट्ण स्यात्। दीघवरत्रेण निर्वृत्त दैर्घवरत्र कूप तस्य सङ्घ इत्यर्थे दैर्घवरत्र इत्यत्र ण इत्यादि। विपाशोत्तरे च। कूप इत्यनुवर्त्तते विपाशा नाम नदी तस्या उत्तरे य. कूप तस्मिन्नभिधेये ट्ण स्यात्। अबह्वजर्थ आरम्भ.। दत्तेन निर्वृत्त दात्त कूप गौप्त तत्सङ्घ दात्त गौप्त । उत्तर इति विपाशाया दक्षिणत' कूपे दात्त गौप्त ण तस्य सङ्घे दात्तीय गौप्तीय । सङ्कलादेश्च। सङ्कलादेश्चतु-र्ष्वर्थेषु ट्ण स्यात्। सङ्कलेन निर्वृत्त साङ्कल तस्य सङ्घ साङ्कल इयादि। सङ्कल कुष्कल कुम्भलोम गम्भीर मण्डपम्। निधानानीक वेसान सुभतीतृपुटमुद्गलम्। चतुपुलतर गोविन्द निवासाहात्मगोभृत.। अभिशक्तश्च सिकता भल्लपालसुमङ्गलौ। सुदत्तो वरुणौ राजभृतो बहुलमित्यपि। पुलोमश्च कृपासश्च सर्वा मदज्ञ एव च। सुदक्षश्च सुनेत्रश्च पलाशीऽन्ये प्रयोगत । स्त्रीषु सौवीर शाल्वप्राचु। शौवीरदेशे शाल्वदेशे प्राग्देशे च स्त्रीलिङ्गे वाच्ये चतुर्ष्वर्थेषु ट्ण स्यात्। दत्तामित्रेण निर्वृत्ता दात्तमित्री सौवीरनगरी विधूमाग्निना निर्वृत्ता वैधूमाग्नी शाल्वनगरी ककन्देन निर्वृत्ता काकन्दी प्राच्यनगरी। णकोऽरीहणादे । अरीहणादेश्चतुर्षु अर्थेषु णक स्यात्। अरीस्यात्। अरीहणेन निर्वृत्तम् आरीहणकम्। अरी-हणकाश कृतस्ना भगलो कुन्दवीरणम्। विशाख शिशपाविलौ विपाश' सात्र-रायण । किरणद्रवणौ चापि स्वास चान्द्रायणावपि। रैवतीदक्षनौ कुण्ड खदिरा वैसतायनम्। क्रौष्टायनश्च वधिर चेगर्त्तायन खाण्डवा । शिरीषो जाम्बवत् खाडायना शौसायनस्तथा। श्वैतायणश्च शण्डिल्यायन सौमायनोऽपि च।

सुयज्ञश्च वराहश्च शर्करान्ये प्रयोगतः। ऋष्यादेः कः। ऋष्यादेश्चतुर्षु अर्थेषु कः स्यात्। ऋष्येण निर्वृत्त ऋष्यकं। ऋष्यन्यग्रोधखदिरा, शर्करान्तरखञ्जव। परिवेश स्थूलबाहुर्वरण श्रमधूसरौ। उत्तराश्मा वितानश्च विहीनश्चापि कर्दमम्। विधानञ्च विलङ्गश्च परे शिष्टप्रयोगतः। सुतङ्गमादेः णि। सुतङ्गमादेश्चतुर्षु अर्थेषु णिः स्यात्। सुतङ्गमेन निर्वृत्त सौतङ्गमि स्त्रियां सौतङ्गमी सुतङ्गमी महाचित्ती विप्रचित्ताऽर्जुनाऽजिरः। शुन श्वेत महापुत्रास्तथा शुक्रोऽत्र सम्मतः। मुनिचित्ती विप्रचित्तौ गदिकोऽन्ये प्रयोगतः। सख्यादेः ष्णेय। सख्यादेश्चतुर्षु अर्थेषु ष्णेय स्यात्। सख्या निर्वृत्त सखेय। सखिशीकरचक्राणि चक्रपक्राश्च शीफिन। कुगलोऽशोक वाग्दत्ता सखिदत्तकरस्तथा। सोमवल्लभनामश्च शमन सुरसोऽस्परः। ख्य, सङ्काशादेर्बलादेस्त्वणित्। सङ्काशादेश्चतुर्षु अर्थेषु ण्यः स्यात् बलादेस्तु यः। सङ्काशेन निर्वृत्त साङ्काश्य। सङ्काश यूपकम्पील काश्मीराशील नासिका। सुगदीसगदीनाशो विवर्णोऽगस्तिरेव च। पुलिन गन्धकूटाश्च कोविदारस्तथैव च। अङ्गचूडारमञ्जारा कलिर खडिरस्तथा। मगदो मगधः शूरसेन कर्म्मार इत्यपि। विकारोऽथ सुपन्थश्च सुपथोऽन्यैर्विधीयत। सुपथा निर्वृत्त सौपन्थ्य खः सुपथ. सुपन्थादेश बलादेस्तावत् बलेन निर्वृत्त बल्यम्। बल पुल्मूलश्चैव कुल दुल नल बलम्। सुरी नदश्च सम्प्रोक्ता नव गण प्रकीर्त्तिताः। पक्षादेर्णायन। पक्षादेश्चतुर्षु अर्थेषु णायन स्यात्। पक्षेण निर्वृत्त पाक्षायण। पक्ष चैव तुषाराश्च कुम्भशीकर रोमकाः। सुवर्णसरलौ चत्र लोमकौ हसकोऽण्डक। अलिक सरकोहस्त विलञ्च समनी मतः। पथः पन्थो णायने स्यात् पक्षोत्तरदश स्मृता। पथा निर्वृत्त पान्थायन। कृशाश्वादेश्छीय। कृशाश्वादेश्चतुर्षु अर्थेषु छीयः स्यात्। कृशाश्वेन निर्वृत्त कार्शाश्वीय। कृशाश्वोऽरिष्टश्चयनाऽरण्यवेश्माऽजिर सुखम्। विशालो वामक कूटो लोमशो विनतस्तथा। वर्चोकपूरगा धूमा मौदान्यविनताबपि। सदृश वायसश्चैव सगरः मन्दरस्तथा। शर्करापत्र सा प्रोक्ता द्वाविंशतिर्मनीषिभिः। कुमुदादेः ष्णिको गर्त्तादेस्त्वणित्। कुमुदादेश्चतुर्षु अर्थेषु ष्णिक स्यात् गर्त्तादेरिकः। कुमुदेन निर्वृत्त कौमुदिकम्। कुमुद गोमट कर्णं रथकारो मुनिस्थलम्। अश्वत्थः शाल्मली दाम ग्रामश्चैव कुटन्नटम्। शर्करा च शिरीषोऽपि द्वादशैते स्मृता बुधैः। गर्त्तादेस्तावत् गर्त्तेन निर्वृत्तः गर्त्तिकः। गर्त्त न्यग्रोध कुमुदाश्वत्थकूपविकङ्कताः। नलाश्च शर्करा जीवं कण्टकट वल्वजाः। परिवापः शिरीषश्च सराश्च, पञ्चभिर्दश।

कर्णादेरायनिं। कर्णादिभ्यश्चतुर्ष्वर्थेषु आयनि स्यात्। कर्णेन निर्वृत्तं कार्णायनि। कर्णो वशिष्ठ अर्कः कुम्भीजीवीऽर्कवान् शपस्तथा। अर्को वसिष्ठ कुलिश पञ्चजन्यं तथैव च। द्रुपदश्च समाख्याता द्वादशैव मनीषिभिः। वीऽश्मादेः। अश्मादिभ्यश्चतुर्ष्वर्थेषु रं स्यात्। अश्मना निर्वृत्तः अश्मरः स्त्रियाम् अश्मरा ङीर्गी तु अश्मरी नदादित्वात् ङीप्। अश्मा यूथ भुषी मीनो दर्भवृन्दगुडौ शिखी। खण्ड काञ्चनखाश्चैकादशाऽश्मादौ समीरिताः। तृणादेः सः। तृणादिभ्यश्चतुर्ष्वर्थेषु स स्यात्। तृणेन निर्वृत्ता तृणसा अभिधानात् स्त्रीत्वम्। तृण जलनभौ पर्ण स्वर्ण वर्ण कुल वलम्। वरणस्य वराण सेऽस्त्वाष्टावाहुर्मनीषिणः। वरणादुद्भव वराणसः तत्र भवा पूःर्णा वाराणसीति। प्रेचादेरिन्। प्रेचादिभ्यश्चतुर्ष्वर्थेषु इन स्यात्। प्रेचया निर्वृत्तं प्रेची प्रेचिणौ प्रेचिणः। प्रेचा न्यग्रोध फलका बन्धका धुरकैकाटा। चिपका ध्रुवका चैव सङ्कटप्रङ्कटौ मतौ। काशादेरिन। काशादिभ्यश्चतुर्ष्वर्थेषु इन स्यात्। काशेन निर्वृत्तं काशिनः। काश वास गुहाऽश्वत्थ पीयूचा कर्करा तृणम्। कर्बुरकर्दमौ चैव पलाश विषकण्टका। नडी वनमपि प्रोक्ताश्चतुर्दश मनीषिभिः। मधुविसादिभ्यां मतुवतू। आभ्यां चतुर्ष्वर्थेषु क्रमात् मतुवतू स्याताम्। मधुना निर्वृत्तः मधुमान्। मधुरेण शमीख्यानुकर्कन्धुवर्म्मशताय। आहृतिर्नृष्टिवासन्दीचुरेकादश कीर्त्तिताः। विसेन निर्वृत्तं विसवान्। विसपाण्डुसवाश्चैव कवीरश्चकटिष्टका.। किशवाषार्य्यण्वैव हिमश्च वरण दश। यद्यपि चान्द्रेणेद नोच्यते मतुरस्त्यर्थे मोऽङ्मभ्पाद्दतुरित्याभ्यां सिद्धे तथापि देशनाम्नि णावाधनार्थ.। नद्यामस्त्यर्थे वदसुवास्त्वादेश्च। सुवास्त्वादिभिन्नात् चतुर्ष्वर्थेषु नद्यामभिधेयायाम् अस्त्यर्थवत् मतुवतू स्याताम्। इक्षुणा निर्वृत्ता इक्षुमती नदी। एव शरावती उडुम्बरावती वीरणावती पुष्करावती। सुवास्त्वादेस्तु सौवास्तवी भागीरथी नदी सुवास्त्वादि प्रागुक्त। नडकुमुदमहिषवेतसेभ्यो डित्। एभ्यश्चतुर्ष्वर्थेषु वतुश्च डित् स्यात् डिति टेर्लोपः। नडा अस्मिन् देशे सन्ति नड्वान् कुमुद्वान् महिष्मान् वेतस्वान्। नडशादाद्वलं। आभ्यां चतुर्ष्वर्थेषु वलं स्यात्। नडा अस्मिन् देशे सन्ति नड्वलं शाद्वलं डिति टेर्लोपः शष्पवाचिनः शादशब्दादेव त्यो न तु कर्दमवाचिनोऽनभिधानात् इति भागवृत्तिः। शिखाया वल.। शिखाशब्दात् चतुर्ष्वर्थेषु वल स्यात्। डिन्नानुवर्त्तते शिखा सन्त्यस्मिन् देशे शिखावल नगरं मत्वर्थीयो वल सम्बन्धमात्रे इह तु देशे नाम्न्येव। उत्करादेरीयो नडादेः कश्च। उत्करादिभ्यश्चतुर्ष्वर्थेषु ईय. स्यात् नडादेस्तु ईय. कन् च स्यात्। उत्करेण निर्वृत्तम् उत्करी-

## ४३८। त्वतौ भावे।

त्वतौ १॥, भावे ७।।

**साधुत्व जडता, पाचकत्व ब्राह्मणीत्वम्।**

---

यम्। उत्कर सङ्कर, पर्ण पिप्पली मूलपिप्पली। अश्मार्कसङ्कलाश्वत्थकुलका-शातपा ऋतु। भस्त्राग्निकितवा शाला विशालीतक्रौशशर्करा। खण्डाजिना ऽनेकतिका सुवर्णचिबुकावपि। पलाश खदिर श्वाव नायोनेरौचकस्तथा। आर्द्रह्रवेन्द्र व्रत्तान्य जनकर्म्म निचाकर। नितान्त व्रच कश्चित स्त्रियोर्णचिबुकौ मत। नडरेण कपोतेच्छु विल्ववेतस तच च। काष्ठवेतमपि प्रच क्रुञ्चाया खोऽत्र सम्मत। नडादि क्रुञ्चाद्यन्तर्गण ईय कनी न इत्। नडेन निर्वृत्त नडकीयम्। क्रुञ्चकाया निर्वृत्त क्रुञ्चकीय कनि स्व। जनपदे लुप्। देशे तन्नाम्नीति चतुर्ष्व-र्थेषु विहितस्य जनपदवाच्ये लुप् स्यात्। ग्रामसमुदायो जनपद पञ्चालाना जन पद पञ्चाला सन्त्यस्मिन् देशे पञ्चाला कुरव मत्स्या अङ्गा वङ्गा सुह्मा पुण्ड्रा इत्यादि। इह कस्मान्न भवति उडुम्बरा अस्मिन् देशे सन्ति औडुम्बरो जनपद, वैदिशो जनपद इति तन्नाम्नीति वर्त्तते न चेत् लुबन्त तन्नामाभिधेय भवति। वरणादेश्च। वरणादेश्चतुर्षु अर्थेषु उत्पन्नस्य लुप् स्यात्। अजनपदार्थोऽयमारम्भ वरणाया अदूरभवो ग्राम वरणा एव शङ्कीशाल्मल इत्यादिराकृतिगणोऽयम्। शर्क-राया वा षाश्च। शर्कराशब्दाच्चतुर्षु अर्थेषु उत्पन्नस्य लुप् स्यात् वा षाश्च वा स्यात्। शर्करा अस्मिन् देशे सन्ति शर्करा पक्षे षा शार्कर उभयत्यक्तपक्षे अबाधितत्वात् शार्करकम् ऋश्यादित्वात् शर्कराक कुमुदादित्वात् शार्करीय कुमुदादित्वात् शार्क-रिक गर्भादित्वात् शर्करिय काशादित्वात् शार्करियम् उत्करादित्वात् शार्करीय-मिति उक्तश्चातुरर्थिक इति प्रकीर्णकम्॥ ४३७॥

स्याद्यन्तात् त्वतौ स्याता भावेऽर्थे। भावस्तु प्रवृत्तिनिमित्त येन धर्म्मेण अय गौरिति प्रतीति स्यात स धर्म्मो गोशब्दस्य भाव इत्यर्थ साध्व्या भाव साधुत्व जडाया भावो जडता उभयत्र पुवत् स्युक्तेति पुवद्भाव। पाचिकाया भाव पाचकत्वम् अत्र नोत्ताकक्रीड इत्यनेन निषिद्धेऽपि कोङ्गादि पुवदिति विशेषविधानात् पुवद्भाव। एव षष्ठ्या भाव, षष्ठत्व मैथिल्या भावो मैथिलत्वम् इत्यादौ पुवद्भाव स्यादेव। ब्राह्मण्या भावो ब्राह्मणीत्व दत्ताया भावो दत्तात्वम् उभयत्र तत्वेत्जात्याख्य इत्युक्तेर्न

## ४३९। लीकोऽघात् सः ष-स्ति।

लि-इक ५।, अ घात् ५।, स ६।, ष १।, स्ति ७।

**अघाल्लीकः सः षः स्यात् तद्धिते ते। यजुष्टम्। घात्तु गीस्त्वम्।**

---

पुवद्भाव। अत्र त्वान्तस्य क्लीवत्व तान्तस्य च स्त्रीत्वमभिधानात्। अत्र उक्तस्य त्वत इत्युभयस्य पूर्वोक्तस्य भावविहितष्णादेश्च सामान्यविशेषत्वाभावात् बाध्यबाधकत्वाभावे जडस्य भावो जडत्व जडता। जाड्यम्। एवं गुरोर्भाव गौरव गुरुत्व गुरुता इत्यादि स्यादेव॥ ४३८॥

श्री रा-टी—त्वश्च तश्च तौ भावेऽर्थे ष्यन्तात तौ स्त। शब्दस्य प्रवृत्तिनिमित्तं भाव, स चानेकप्रकार क्वचिदनेकेषु एकप्रत्यभिज्ञाजनक यथा गोत्वाश्वत्वादिजाति क्वचित् स्वरूपमात्र यथा चैत्रत्व नभस्त्व क्वचित् सम्बन्धित्व यथा शुक्लस्य पटस्य शुक्लत्व जडता क्वचित् द्रव्यसम्बन्धित्व यथा दण्डित्व विशेषणत्व क्वचित् कर्म्मसम्बन्धित्व यथा पाचकत्व गन्तृत्वम्। साधुत्वमिति साधोर्भाव इति वाक्य येन कर्म्मणा साधुरय मिति बुद्धिर्जायते तत्कर्म्मसम्बन्धित्वमिह भाव। जडतेत्यत्र जाड्यगुणसम्बन्धित्व जडाया भाव इति वाक्यम् एव पाचिकाया भाव पाचकत्व तत्वे जात्याख्याभिन्नस्य पुवद्भाव.। ब्राह्मणीत्वमिति जाति. स्वाङ्गेयान्न पुवद्भाव एवं चन्द्रमुखीत्वमि त्यादि॥ ४३८॥

लेरिक् लीक् तस्मात् नास्ति घौ यत्र सोऽघं तस्मात्। दीर्घवर्जात् लीक परस्य सस्य ष स्यात् तकारे परे, तकारस्तु प्रकरणबलात् तद्धित एव। यजुषो भाव यजुष्टम् एवं हविष्ट गिरो भाव गीस्त्वम् अत्र व्यंनच्तयोति दीर्घे विरामे रेफस्य विसर्गे पुनर्विसर्गस्य सकारे षत्वप्राप्तौ दीर्घपरतान्निषेध। एव धूस्त्वम्। लीक. कि बभूस्तराम्। तद्धिते तकारे इति कि यजुस्तेन पठितम्॥ ४३९॥

श्री रा टी—लेरिक् लीक् तस्मात् न घं अघंस्तस्मात् तीति लीकान्त दन्त्य लेरिक परस्य सस्य य स्यात् तसन्नतकारे परे न तु परस्य यजुष्टमि यजुषो भाव इति वाक्यं घात् धूस्त्वं लेः कि कुर्य्युस्तरा कुर्य्युस्तमाम्॥ ४३९॥

## ४४० । चूत् साम्ये ।

चूत् ।१।, साम्ये ७। ।

उपमानार्थे चूत् स्यात्। कृष्ण इव कृष्णवत्।

## ४४१ । मतुरस्त्यर्थे ।

मतु ।१।, अस्ति अर्थे ७। ।

श्रीरस्ति यस्यासौ श्रीमान्, विदुष्मान् दोष्मान्।

---

समस्य भाव साम्य तस्मिन् स्याद्यन्तात् चूत् स्यात् उपमानेऽर्थे चकारोऽव्ययार्थ कृष्ण इव कृष्णवत् शिवो भाति एव कृष्णमिव शिव मन्ये कृष्णवत् एव सर्वविभक्त्य न्तात् चूत् प्रत्यये कृते विभक्तेर्लुक्। द्रव्यसाम्ये यथा कुबेर इव धनी कुबेरवत् गुण- साम्ये चन्द्र इव शुक्ल चन्द्रवत् गुणहीन अन्धवत् क्रियासाम्ये तपस्विवत ॥ ४४० ॥

श्री-रा टी—समस्य भाव साम्यम् उपमानम्। कृष्णवदिति अभिधानात उप- मान क्रिय.विशेषणीय तेन पुत्रेण तुल्य स्थ्' पुत्रेण तुल्य पिङ्गल इत्यादि गुणतुल्ये न स्यात्। एव शिवमिव विष्णु पश्यति शिववद्विष्णु पश्यति ब्राह्मणेन तुल्य वर्त्तते ब्राह्मणवत् वर्त्तते ब्राह्मणवत् क्षत्रियाय ददाति व्याघ्रवन्मार्जारादिर्भाति देवदत्तवत यज्ञदत्तस्य धन मथुरवत् सुघ्ने प्राकारा' पौष्यो क्रियाग्रहण नानुषज्यते। परे तु तपोतग्रन्तेभ्य. चूत् त्य कुर्वन्ति भाष्यविरोधात् तन्मन्त्री न मन्यते किन्तु स्यन्तादेव दानातरावलब्धा मन्यन्त् सूर्वामिति। अर्हे च। अर्हतीत्यर्हे पचादिन न्तर्हेऽर्थ चूत स्यात्। राजानमर्हति वृत्त राजवत् वृत्त मुनिवत् वृत्तम अनभिधानात् ब्राह्मणमर्हति वृत्तम् इत्यत्र न स्यात् ॥ ४४० ॥

तदस्यास्तीत्यर्थे स्याद्यन्तान्मतु स्यात् तेन प्रथमान्तादित्यर्थ। मतौ ककार स्त्रियोऽदुरिति नुमर्थ स्त्रियामीवर्थश्च। तेन श्रीमान् श्रीमती। विद्वान् अस्ति यस्य विदुष्मान् अत्र मतौ परे वसोर्वकारस्य उकार.विधानसामर्थ्यादेव अकारादत्वेन प्राप्तव्य वतु बाधित्वा मतु स्यात्। ततश्च मतौ परे वकारस्य उकारे नद नसावित्य- नेन दान्तत्वनिषेधात् विरामाभावे ससुध्वसिति दडोऽप्राप्तौ षत्वम्। एव दोरस्ति अस्य दोष्मान्। मत्वादीना स्थानमाह दुर्गसिंह। भूमनिन्दा प्रशंसासु नित्य- योगेऽतिशायने। संसर्गेऽस्ति विवक्षाया मत्वादयो भवन्त्यमी इति। एश्वर्यषु यदा-

## ४४२। सोऽन्-झपाद्वतुः।

म-अ-उङ्-म् झपात् ५।, वतु १।।

मकारोङोऽवर्णोङो मकारान्तादवर्णान्तात् झपान्ताच्च वतुः स्यादस्त्यर्थे। लक्ष्मीवान् यशस्वान् भास्वान् किंवान् ज्ञानवान् विद्यावान् विद्युत्वान्।

---

ऽस्तीति विवक्षा क्रियते तदा मत्वादयो भवन्तीत्यर्थः। क्रमेणोदाहरणानि। भूम्नि बहुत्वे गाव सन्त्यस्य गोमान्। निन्दाया पापी। प्रशसाया रूपवान्। नित्ययोगे चीरिणो वृक्षा अतिशायने उदरवती कन्या। ससर्गे दण्डी पान्थ। अत्र न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इति प्राञ्च। तेन शोभना बुद्धिरिति कर्म्मधारये सुबुद्धिमान् जन इति न स्यात्। शोभना बुद्धिर्यस्यासौ सबुद्धिरिति बहुव्रीहिणैव तदर्थप्रतिपादनात्। ननु वर्जयेत् द्विदल शूली कुष्ठी मास क्षयी स्त्रियम्। द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी। अत्र कर्म्मधारयात् कथमिन्निति चेत् सत्यम्। तरुणोज्वरो यस्येति बहुव्रीहिणा ज्वरस्यास्तित्वमात्र प्रतिपाद्यते न तु ज्वरस्यातिशयाद्य प्रतिपादयितु शक्यते तेनात्रातिशयार्थो मत्वर्थीय स्यादेव। एव मत्वर्थीयात् सरूपो मत्वर्थीयो न स्यात्। यथा धनमस्यास्तीति धनवान् पुनर्धनवानस्यास्तीत्यर्थे झभान्तादपि वतुर्न स्यात्। असरूपस्तु स्यादेव यदाज्ञानमस्त्यस्य ज्ञानी पुनर्ज्ञानिन सन्त्यस्य इत्यर्थे ज्ञानिमान् राजा इति॥ ४४१॥

श्री-रा-टी—अस्ति अर्थो यस्य यस्मिन् वा अस्त्यर्थस्तस्मिन् अस्त्यर्थो विद्यमानसम्बन्ध प्रथमान्तादस्यास्मिन्नित्यर्थे मतु स्यात् य प्रथमान्तनिर्दिष्ट सोऽस्ति चेद्भवति। श्रीमानिति उदित्त्वादत्वसोऽधोरिति घं. त्रिद च इति नुम् श्रीरस्यास्मिन्निति वाक्येऽपि श्रीमान् विदुष्मानिति वसोर्वस्योन्वात् नद तसौत्वस्त्यर्थ इति दान्तत्वनिषेधात् क्तिलादिति ष। एव दीप्मानिति। यवादेश्च। यवादेरस्त्यर्थे मतु स्यात्। यवोऽस्यास्मिन् वास्ति यवमान् एव तिमिमान्। यव तिमि क्रमि ... ... ञ्चा क्रुञ्चा हरित् गरुत्। ऊर्म्मि चामि ककुद्रश्मिद्रुम द्रम धुरन्धरा। कान्तान् यसुसानूनि भानुसिद्धप्रभुविन्दव। वस्तु चारु हनु प्रोक्त शेष शिष्टप्रयोगत। इह यवद्राक्षा क्रुञ्चाभ्योऽवर्णान्तात् तिमि क्रमि भूमि ऊर्म्मि चामि रश्मि द्रुमेभ्यो मुङन्तात् हरित्

शकृत् ककुद्मी भपान्तत्वात् इतरेष्वोऽसञ्ज्ञात्वात् प्राप्तो वतुर्बाध्यते द्विश्वात्
गोधुश्चादित्यादि स्थानिवत्त्वान्न वतु ॥ ४४१ ॥

मश्च अश्च मौ, मौ उङौ ययोस्तौ मोङौ, मोङौ च मश्च अश्च भपश्चेति तस्मात्।
लक्ष्मीरस्त्यस्य लक्ष्मीवान् एव यशस्वान् भास्वान् इत्युभयत्र दान्तलनिषेधात् सस्य
न विसर्गः। एवं विद्युत्वान् इत्यत्र तकारस्य न दः। अत्र कुमुदवेतसानामल्लोपो
वतौ नडस्य तु वतु वलयोरिति मनीषादित्वात् कुमुदानि सन्त्यस्य कुमुद्वान्। एवं
महिष्मान् नड्वान् नड्वल। अत्र रज श्चादित्वाद्दल एव वतौ राज्ञ' प्रश्नसायां
न लोपाभावो निपात्य। शोभनो राजा अस्त्यस्य राजन्वान् देश अन्यत्र
राजवानिति ॥ ४४२ ॥

श्री-रा-टी—म च अश्च मं ममुङ् मोङ् च म च अश्च भपश्च तत्तस्मात् भपूप्रत्या-
हार। लक्ष्मीवान् इति लक्ष्मीरस्ति अस्यास्मिन् वा इति वाक्यम्। पूर्ववत् घं,
नुण् स्यान्तलुप् च। अवर्णोङमुदाहरति यशस्वान् भास्वान् इति मान्तमुदाहरति
किं वान् इति अवर्णमुदाहरति ज्ञानवान् श्रद्धावानिति भपान्तमुदाहरति विद्यु-
त्वान् इति तान्तत्वान्न दस्। मतोरपवाद। सञ्ज्ञायाञ्च। सर्वस्मात् ले सञ्ज्ञाया
विषयेऽस्त्यर्थे वतु स्यात् अहिरस्त्यस्या अस्या वा अहीवती कपीवती अनीवती अग्नि
ञ्चीवान् ग्राम'। नाम्नःस्त्यर्थे चोर्घ इति र्घ। चक्राष्ठिकचासनाना चक्राऽष्टी-
कच्यसन्धी वतौ। एषामेते आदेशा स्यु सञ्ज्ञायां वतौ। चक्रमस्त्यस्यास्मिन् वा
चक्रीवान् असञ्ज्ञाया चक्रवान् अस्थ्यस्त्यस्यास्मिन् वा अष्टीवान् अन्यत्रास्थिमान्
कचाऽस्त्यस्यास्मिन् वा कचीवान् ऋषिभिद. अन्यत्र कचावान्। आसनमस्त्यस्यास्मिन्
वा असन्दीवान् ग्राम अन्यत्र आसनवान्। उदकस्योदन् वृर्घ्युदध्यो। उदकशब्दस्य
उदन्नादेश स्यात् अनयोरर्थयोर्वतौ। उदकमस्त्यस्यास्मिन् वा उदन्वान् ऋषि.
समुद्रश्च उदकम् आधीयते यस्मिन् स उदधिर्घटादिरपि तेन उदन्वान् घट
उदन्वन् मेघ उदकवान् घट इत्यत्र तु सम्बन्धमात्रविवक्षणात्। प्राण्यङ्गक्षुद्रजन्तु-
रोगाद्दादन्ताद्वा। प्राण्यङ्गवाचकात् क्षुद्रजन्तुवाचकात् रोगवाचकाच्चाकारान्तात्
वतुर्वा स्यात् अस्त्यर्थे। चूडास्त्यस्यास्मिन् वा चूडावान् पक्षे चूडादित्वात् ल. चूडाल.
कर्णिकाल' शिखाशब्दात्तु इना लो बाध्यते शिखावाम् शिखी यूकास्त्यस्यास्मिन्
वा यूकावाम् यूकाल'। विवर्चिकावान् विवर्चिकाल: मूर्च्छावान् मूर्च्छाल।
एभ्य किं भिक्षावान् आदन्तादिति किं हस्तवान् सङ्कुलवान् ज्वरवान्। चूडादि-
पाठात् विकल्पे सिद्धे वा ग्रहण नियमार्थं तेन लत्वभावपक्षे ल एव ॥ ४४२ ॥

## ४४३। स्रङ्मेधास्मायात् विन् वा।

स्रज् मेधा—अस् मायात् ५।, विन् ।१।, वा ।१।।

**स्रग्वी मेधावी तेजस्वी मायावी। पक्षे स्रग्वान् इत्यादि।**

## ४४४। नैकाजादिन् वा।

नैकाजात् ५।, इन् ।१।, वा ।१।।

**अनेकाचोऽवर्णान्तादिन् वा स्यात् अस्त्यर्थे। ज्ञानी शिखी।**

---

स्रज् च मेधा च अस् च माया चेति यस्मात्। एभ्यो विन् स्याद्वास्त्यर्थे। स्रक् अस्त्यस्य स्रग्वी अव दान्तत्वनिषेधाभावादिरामे चुडिति कुडादि॥ ४४३॥

श्रीरा-टी—स्रक् च मेधा च अस् च माया च तत्तस्मात्। एभ्योऽस्त्यर्थे विन् वा स्यात्। स्रग्वीति इनपूर्षेति र्घ नीलुप्फेधाविति न लुप्। एवं मेधावी मेधावान् तेजस्वीति असन्तत्वाद्विन् एव पयस्वीति ज्योत्स्नादित्वात्तापस पक्षे तपस्वान्। एव मायावी मायावान्। वाशब्दस्य व्यवस्थावाचित्वात् आमयावी आमयावान् नाम्नास्त्यर्थेऽचोर्घ इति आमयीति। ऊर्जोऽसश्च साहङ्कारे। ऊर्जशब्दात् विन स्यात् तस्मिन्नसंश्च साहङ्कारे। ऊर्क् अस्त्यस्यास्मिन् वा ऊर्जस्वी साहङ्कार अन्यत्र ऊर्ज्वान्॥ ४४३॥

न एको नैक नैकोऽच् यस्य स नैकाच् नैकाचासौ अश्चेति नैकाज तस्मात्। ज्ञानमस्त्यस्य ज्ञानी एव शिखी। एव माला अस्यास्तीति माली तत स्वार्थे कप्रत्यये मालिक एव दण्डिक इत्यादि। वाशब्दोऽत्र मत्वादीना विषयव्यवस्थापक। तेनेश्वं विद्वणीमि। यवादिरस्त्यर्थे वतुर्न स्यान्मतुरेव। यथा यवमान् इत्यादि। ते च यवी द्राक्षा ककुत्क्रुञ्चा गरुत् भूमि स्तिमि ऊर्मि। हरिदुर्मि टश्च भ्यस्तु वतु नेच्छन्ति पण्डिता इति। क्षुद्रागोवास्यामपीति कातन्त्रा। द्रुमकर्णवर्भेभ्योऽपीति जौमरा। एव पूरणप्रत्ययान्तात् वयसि इन्नेव। पञ्चानां पूरण पञ्चमो दिवसो मासो वत्सरो वा सोऽस्यास्तीति पञ्चमी पुत्र। वयस्तु गतपरमायु। परमायुस्तु प्राणधारणकाल। तेन पञ्चमवान् हृच। तथा अस्वाङ्गात् प्राणिस्थद्वन्द्वात् निन्दितरोगाच्च। कटकवलयी हारकुण्डली कुष्ठी। अस्वाङ्गात् किं स्तनकेशवती। प्राणिस्थात् किं धवखदिरवान् देश। द्वन्द्वात् किं हारवान्। निन्दितरोगात् किं

ज्वरवान्। सर्वपूर्वात्। सर्ववीजी सर्वकेशी। धर्म्मशीलवर्णान्तात्। विप्रस्य धर्म्मो विप्रधर्म्म सोऽस्यास्तीति विप्रधर्म्मी पण्डितशीली ब्रह्मवर्णी तदन्तात् किं धर्म्मवान् वर्णात् सञ्ज्ञायाम्। वर्णी ब्रह्मचारी। अन्यत्र वर्णवान्। हस्तदन्तकरान्नाम्नि। हस्ती दन्ती करी गज। नाम्नि किं हस्तवान् योध.। व्रीह्यादेः। व्रीहिरस्यास्तीति व्रीही कर्षक' एवं शाली। रूढदेशे पुष्करादेः। पुष्करिणी। पुष्करादिस्तु। पुष्कर उत्पल नड विस तमाल कपित्थ कुमुद मृणाल कर्दम शालूक करीष हिरण्यादि। रूढदेशे किं पुष्करवान् हस्ती। मनन्तमान्ताभ्यां नाम्नि। दामिनी सोमिनी। नाम्नि किं दामवान् सोमवान् मकारोऽवादन्त'। एवं सुखी दुःखी अलीकी च करुणी कृपणी हली। कृपी कुक्षी प्रतीती च इत्यादेरिन् विधीयते। अथ निपात्या। पार्ष्णिधमनिभ्यामीनो वास्त्यर्थे। पार्ष्णीन: पार्ष्णिमान् धमनीन' धमनिमान्। शाकसमूहो महाशाको वा शाकी पलालसमूहो महापलालो वा पलाली। तथाहि शाकी पलाली सरसी शाकाद्योघमहत्त्वयोरिति रत्नाकर'। कद्रुशाकी पलाशीभ्योऽस्त्यर्थे न तासां ह्रस्वश्च। कद्रुण' शाकिन पलाशिन। कद्रुर्नागमाता गोधा वा। लक्ष्मीशब्दादस्त्यर्थे वा डन। लक्ष्मण डित्वात् टिलोप.। पक्षे लक्ष्मीवान्। मलादीमसो वा। मलीमस। पक्षे फलादिलादिने मलिन. पक्षे मलवान् इति। आमयादाविन्। आमयावी॥ ४४४॥

श्रीरा-टी—नास्त्येकाच् यस्य नैकाच् नैकाच्चासावच्चेति नैकाजत्तस्मात् ज्ञानीति यथोर्लोप इत्यकारलोप.। अभिधानादादन्तात् शिखादावपि शिखीति। शिखादिर्यथा। शिखा वीणा घृणा संज्ञा पताका वडवाष्टका। मनीषा मेखला दंष्ट्रा शाखा केका गदा यवा। वीणा माला फला माया परे शिष्टप्रयोगत। पक्षे शिखावान् वीणावानित्यादि। नैकाजतोऽसुखादेरिक। सुखादिवर्जितादनेकाचोऽकारान्तादिक. स्यात्। ज्ञानमस्त्यस्मिन् वा ज्ञानिक. दण्डिक. पक्षे ज्ञानी ज्ञानवान्। असुखादेरिति किम्। सुखी सुखवान्। सुखादिर्यथा। सुख दु.ख हलानीक कृच्छ्वान प्रतीघमा:। मानोत्साहालकोद्दाम मुकुल' स्तवक' फलम्। परिणाहनयारोहाऽवरोह निचुला अपि। व्यायाम वर्म्मकर्म्माणि हस्त प्रतिप कर्म्म च। कच्चा प्रणयसोढाऽस्त्रोपयाम करुणापि। कृपयेम सह प्रोक्ता परे शिष्टप्रयोगत। धर्म्मशीलवर्णान्तादिन्। धर्म्मान्तात् शीलान्तात् वर्णान्तास्त्यर्थे इन् स्यात्। द्विजधर्म्मी भिक्षुशीली विप्रवर्णी। अन्तादिति धर्म्मवान् शीलवान्। करदन्तहस्तादिभ्य.। एभ्यो गजे वाच्येऽस्त्यर्थे इन् स्यात्। करी दन्ती हस्ती

अन्यत्र करवान् दन्तवान् हस्तवान्। मालाया' क्षेपे। मालाशब्दात् क्षेपे गम्यमाने-ऽस्त्यर्थे इन् स्यात्। माली अन्यत्र मालावान् शिखादिपाठात् माली च। पूरणान्तात् वयसि। पूरणप्रत्ययान्तात् वयसि गम्यमानेऽस्त्यर्थे इन् स्यात्। पञ्चमी मासो वर्षोऽस्य पञ्चमी उष्ट्र' दशमी वृद्ध अन्यत्र पञ्चमवान्। वर्णात् ब्रह्मचारिणि। वर्णशब्दात् ब्रह्मचारिण्यर्थे इन् स्यात्। वर्णी ब्रह्मचारी अन्यत्र वर्णवान्। अर्थतदन्तादाका-ङ्क्षिणि। अर्थशब्दात् अर्थशब्दान्ताच्चाकाङ्क्षिण्यर्थे इन् स्यात् अस्त्यर्थे। अर्थी याचक धान्येनार्थ धान्यार्थ सोऽस्यास्ति धान्यार्थी यवार्थी अन्यत्रार्थवान्। मन्मान्ता-न्नाम्नि। मनन्तात् मान्ताच्च सञ्ज्ञायामिन् स्यात् अस्त्यर्थे। प्रथिमिनी दामिनी मान्ता-त्सोमिनी यामिनी स्वभावात् स्त्रीत्वम्। पुष्करादेर्देशे। पुष्करादिभ्यो देशे वाच्येऽस्त्यर्थे इन् स्यात्। पुष्कराणि तीर्थानि अस्मिन् देशे सन्ति पुष्करिणी पद्मिनी उत्पलिनी। पुष्करोत्पल शालूक शिरीष पद्मकर्दमा। तमाल नलकाम्बील तरङ्गकुसुमानि च। यवस कैरव चापि प्रोक्तान्यत्र चतुर्दश। स्वभावादस्यापि स्त्रीत्वम् अन्यत्र पुष्करवान्। प्राणिस्थादतोऽस्वाङ्गाच्चसे। प्राणिनि तिष्ठतीति प्राणिष्ठस्तस्मादकारान्तात् स्वाङ्ग-वर्जितात् चसे इन् स्यात् अस्त्यर्थे। कटकवलयिनी शङ्खनूपुरिणी स्वाङ्गात्तु स्तनकेश-वती अत इत्येव चित्रकमलटिकावती च इति किं शङ्खवती नूपुरवती सिन्दूरवती। रोगगर्ह्याच्च। रोगवाचकात् निन्दावाचकाच्च प्राणिस्थाददन्तादस्त्यर्थे इन् स्यात्। कुष्ठी किलासी शूली गर्ह्यात् ककुदावर्त्ती इय प्राणिस्थादिति किं पुष्पफलवान् पुष्पवान्। अत इति किं मूर्च्छावान्। सर्वपूर्वाल्लेर्बाह्वरुपूर्वात्तु बलात्। सर्वशब्द-पूर्वाल्लेरत इन् स्यात् अस्त्यर्थे बलात्तु बाह्वरुपूर्वात्। सवधनी वार्धुषिक सर्वकेशी नट बाहुबली ऊरुबली सर्वबलीति पूर्वेण। नावादेरिको वा। नावादेरस्त्यर्थे इक स्याद्वा। नौरस्ति यस्यासौ नाविक। नौ कुमारी सभा माया यवखदा करणेन हि। पक्षे नौमान् यवखदावान् मायाशब्दस्य शिखादित्वात् मायी मायावांश्च। व्रीहेस्तौ। व्रीहिशब्दादस्त्यर्थे इनिकौ स्याताम्। व्रीहिरस्ति यस्यासौ व्रीही व्रीहिक ययोर्लोप इति इकारलोप पक्षे व्रीहिमान्। शिरसः शीर्षं च वतौ। शिरःशब्दादस्त्यर्थे इनिकौ स्याता तयो शीर्षादेशश्च वतौ च। शिरोऽस्यास्ति शीर्षी शीर्षिक पक्षे वतौ शीर्षवान्। स्वाङ्गात् वृद्धौ। स्वाङ्गवाच-कात् वृद्धौ वर्त्तमानादस्त्यर्थे तौ स्याताम्। कर्णी कर्णिक पक्षे कर्णवान् फलादि-त्वात् कर्णिन। न त्रर्थे। त्रा अर्थे तौ न स्याताम्। दण्डोऽस्यास्तित्यर्थे दण्ड वान् दण्डोऽस्त्यस्यासौ दण्डी दण्डिक दण्डवांश्च। अकार्य्यादिकत। कार्य्यादि-

**४४५। शं-कं-भ्यां य-यु-त-तु-ति-व-भाः।**

शकभ्या ५॥, य—भा १॥।

शय. शयुः शन्त' शन्तु' शन्तिः शंवः शम्भः।

**४४६। गो तृण मेधा दन्त काण्ड द्यु बल बलि पर्व चूड़ा फेन लोम पाम प्रज्ञा मधु केश रजः फलोर्णा शृङ्ग निद्राऽर्शो वातादेर्मिन् सेरो-रेरमोलिभ तलेल श न ण रवबलेनयारकाल्व-किन् वा।**

गो वातादेः ५।, मिन् किन् ।१।, वा ।१।।

एभ्य एते क्रमात् स्युरस्त्यर्थे वा। गोमी।

---

वर्जितात् क्वदन्तात् तौ न स्याताम्। दाचकवान कारकवान् स्नेहवान् कुम्भकार-वान ईश्वरवान् हिंसवान्। पर्काऽनधथ वरी वस्त्रा धान्यद्रव्यादय स्मृता। यथा धान्यवान् द्रव्यवान् पुष्पवान् माल्यवान् सत्यवान् भाग्यवान् अपत्यवान् इत्यादि प्रयोगानुसारेण ज्ञातव्या। कार्य्यादेस्तु कार्य्यी कार्य्यिक कार्य्यवान्। कार्य्यादिस्त्व गृहस्थान पीतभोगादयो मता। जातरतण्डुलादे। जातिवाचकात तण्डुलादि-वर्जितात्तौ न स्याताम्। व्याघ्रवान गजवान् अश्ववान् इत्यादि। तण्डुलादेस्तु तण्डुली तण्डुलिक. तण्डुलवान। कर्पटी कर्पटिक कर्पटवान् इत्यादि। यदुक्तम्। एकाक्षरात् क्वतो जाते' सप्तम्याञ्च न तौ स्मृताविति॥ ४४४॥

शम् कम् इति मान' याभ्याम् एते सप्तप्रत्यया स्युरस्त्यर्थे। शम् अस्त्यस्य शय अत्र टिलोपाभावबीज व्यटलोप इत्यत्र इष्टम्। एव नट तत्रावित्यत्र नञा निर्दिष्टमनित्यमिति न्यायात् दान्तत्वनिषेधाभावे मस्यानुस्वार। एव शयु-रित्यादि॥ ४४५॥

शौरा टो—शश्च कश्च तौ ताभ्याम्। यश्च युश्च तश्च तुश्च वश्च भश्च ते। शय इति यमस्टेर्लोपाभाव. युसमाभव्याहृतये॥ ४४५॥

उदाहरणं बोध्यम्॥ ४४६॥

## ५४७ । नाम्न्यस्त्यर्थेऽचो घँः ।

नाम्नि ७।, अस्त्यर्थे ७।, अच ६।, घँ १। ।

स्वामी, तृणसः, मेधिरः, रथिरः दन्तुरः, काण्डीरः, अण्डीरः, द्युमः द्रुमः वलूलः, वातूलः वलिभः तुन्दिभः पर्वतः, मरुत्तः, चूडालः, मांसलः, फेनिलः, पिच्छिलः, लोमशः, रोमशः, पामनः, अङ्गना, प्राज्ञः, आद्धः, मधुरः, कुञ्जरः, केशवः मानवः, रजस्वला, कृषीवलः, फलिनः, वर्हिणः, ऊर्णायुः, अहंयुः, शृङ्गारकः वृन्दारकः, निद्रालुः, दयालुः, अर्शसः, वैजयन्तः, वातकी, अतिसारकी ।

---

श्रीरा टी—गौश्च तृणञ्च मेधा च दन्तश्च काण्डश्च द्युश्च वलञ्च वलिश्च पर्व च चूडा च फेनश्च लोम च प्रज्ञा च मधु च केशश्च रजश्च फलञ्च ऊर्णा च शृङ्गञ्च निद्रा च अर्शश्च वातश्च ते आदयो यस्य तत्तस्मात् मिश्च सश्च इरश्च उरश्च ईरश्च मश्च ऊलश्च इभश्च तश्च लश्च इलश्च शश्च नश्च णश्च रश्च वश्च वलश्च इनश्च युश्च आरकश्च आलुश्च अश्च किश्च तत् । गोमीति छनपुषेति घँ पूज्य इत्यर्थ । यद्यपि सामान्येनोक्तं तथाप्यभिधानात् अर्थविशेषे ज्ञातव्यं । तेन गोस्वयी, पूज्येश्वर्येऽभिधानं पचे गोमान् ॥ ४४६ ॥

अचो दीर्घं स्यादस्त्यर्थप्रत्ययेषु नाम्नि वाच्ये । स्वोऽस्यास्तीति स्वामी ईश्वरः । गवादिलाम्मिनि अनेन दीर्घं । असंज्ञाया स्वशब्दस्य गवादित्वाभावे स्ववान् इति एवम् अष्ठीवान् । शरादेर्नाम्नि वतौ दीर्घं शरावती । शरादिस्तु । शर वंश पञ्च धूम अहि कपि मणि मुनि चन्द्र इत्यादि । अत येभ्यो वतुर्न सम्भवति तेभ्योऽपि नाम्नि वतु स्यात् शरादिगणपाठसामर्थ्यात् । नाम्नि किं शरवान् ग्रामः । अजिर खदिर खपुर पुलिन मलय कारण्डव चक्रवाक वर्जबह्वचो वतौ नाम्नि दीर्घं । उडुम्बरावती मशकावती नाम्नि किं मशकवान् ग्राम । तृणादेः स इत्य । तृणसः । तृणादिस्तु । तृण पर्ण नड वर्ण स्वर्ण ढल वल जन । ८ । मेधादेरिर । मेधिर रथिर इत्यादौ यथोर्लोप इति इवर्णावर्णयोर्लोप । दन्तादेरुर । दन्तुरः इति पाददन्तेत्यत्र पादशब्दस्य व्यवस्थावाचित्वात् नदादादेश । काण्डादेरीर,

दीर्घो काण्डीर' अण्डीर'। द्यु आदेर्मः। द्युम, द्रुम। बलादेरूल, दीर्घो। बलूल'। ...नादिस्तु। बल वात ललाट दन्त गल। बल्यादेरिभ। बलिभ। बल्या-दिस्तु। बलि तुन्दि वटि। ३। पर्वादेस्त। पर्वत मरुत्त। चूडादेर्ल। चूडाल। चूडादिस्तु। चूडा सिधन् गडु नाभि वीज प्रज्ञा निष्पाव पांशु हनु कर्ण मणि सक्थि लक्ष्मी मांस स्नेह जटा वत्स पक्ष श्याम उदश्वीत पुष्प पिङ्ग पक्ष्मन पृथु मञ्जु कण्डु कपि जटु चटु पत्र पर्ण स्फटु कृष्ण पेश फेन श्लेष्मन्। ३७। फेनादेरिल। फेनिल। फेनादिस्तु। फेन पिच्छा ध्रुवका भ्रुवका प्रज्ञा पूर्णा ...ल पादक व्रीहि पार्ष्णि धमनि। ११। लोमादेः श तालव्य। लोमश। लोमा-दिस्तु। लोम रोम रुरु बभ्रु हरि तरु कपि खर्ण कर्क। १०। पामादेर्न। पामन। पामादिस्तु। पाम श्याम श्लेष्म दद्रु कृमि वलि वाम अङ्ग। ८। प्रज्ञा-दण। ...। णित्वात् वृद्धी प्राज्ञ। प्रज्ञादिस्तु। प्रज्ञा श्रद्धा अर्चा वृत्ति शर्करा सिकता ...तृष्णा। ७। शर्करादिभ्य स्त्रियामीप् वक्तव्य। मध्वादेर। मधुर। मध्वादिस्तु। ... कुञ्ज शुषि उष पुष्प मुख नख पांशु पाण्डु बन्धु खलता सिन्धु कच्छु। कच्छा ...। कच्छुर। केशादेर्व। केशव। केशादिस्तु। केश मणि हिरण्य कुमार ... विषु राजी इष्टका गाण्डी अजक। १०। रज आदेर्वल। रजस्वला। रज आदिस्तु। रजस् कृषि दन्त पुत्र भ्रातृ उत्साह शिखा परिषत् पर्षत्। ९। कृषी-... दन्तावल इत्युभयत्र नामत्वार्थे दीर्घ। फलादेरिन। फलिन। फला-दिस्तु। फल बर्ह शृङ्ग मल। ४। ऊर्णादेर्यु। ऊर्णायु। ऊर्णादिस्तु। ऊर्णा ... शुभम्। ७। अहंयु शुभंयु इत्युभयत्र युवर्जनादृव्यटेर्लोपः। शृङ्गादेरारक। ...क एष वृन्दारक। निद्रादेरालु। निद्रालु। निद्रादिस्तु। निद्रा दया तन्द्रा श्रद्धा कृपा हृदय। ६। अर्श आदेर। अर्शस। अर्श आदिस्तु। अर्शस् ...यन्तो उरस् उदर चतुर पलित जटा घाटा अभ्र इत्यादि। वातादेः किन्। ...की। वातादिस्तु। वात अतिसार प्रतिसार। ७। अत्र वाशब्दस्यानुक्तसमु-...चयात् सर्वेभ्य, शालिन् वा स्यादस्त्यर्थे। श्रीशाली जनशाली तेजःशाली गोशाल्। ...त्यादि ॥ ४४७ ॥

गोरा-टी—सञ्ज्ञायाम् ...र्थे त्ये परेऽचो दीर्घः स्यात्। प्रायिकं च तत्। स्वामीश्वर, पक्षे स्ववान्। गोस्वी गवादी। तृणादि स। तृणस तृणादिग्रहणात्-...र्थिके उक्तः पक्षे तृणवान्। मेधादेरिर' मेधिर इति मेधास्ति यस्य यस्मिन् वा ...आदिशब्दात् रथिर' रथिकः रथवान्। दन्तादुर। आदिशब्दोऽत्र न प्रयुज्यते

प्रयोजनाभावात् दन्तुर इति उन्नतेऽभिधानात्। अन्यत्र दन्तवान्। काण्डादेरीर। काण्डीर इति पक्षे काण्डिक काण्डवान् आदिशब्दादण्डीर पक्षे अण्डवान्. द्यु आदेर्म द्युशब्द दिवसवाचक द्युम इति द्युमान् आदिशब्दात् द्रुम इति द्रुशब्द वृक्षावयववाचक' पक्षे द्रुमान्। वलादेरूल। वलूल इति पक्षे वलवान् वलवातौ गलदण्डौ ललाट पञ्चमी मत। वल्यादेरिभ. वलिभ इति ययोर्लोप इतीकार-लोप। पक्षे वलिमान्। वलितुण्डिवलयस्त्वय.। पर्वादेस्त। पर्वत इति पक्षे पर्ववान् आदिशब्दान्मरुत् नद तसाविति नदम्। चूडादेर्ल चूडाल इति पक्षे चूडा चूडावान्। चूडा मणी मास गडुश्च नाभि प्रज्ञा कपि पांशुपट् च कर्ण। सिध्मा च निष्पाव स्फुट क्षुध स्नेहश्च पेव पृथुपत्र पर्ण। वीजस्यामोदकं कर्त्तु बहु फेनेश्च सक्थि च। जङ्घा पर्शुर्हनु सूक्ष्म श्रीशने पटुमञ्जर। घाटाकाल जटाक्षेपे बल-वत्यस एव हि। चूडादौ कथिताश्चेते वसल स्नेहवत्यपि। अथ प्राण्यङ्गमावन्त तथा कक क्षुद्रजन्तव। घाटा अस्ति अस्याखिन् वा घाटाल फेनादिलात् घाटिल एव कालन कालनिन अश्वाचन्द्रादिभिर्नीच्यते। जटाल. जटिल चेपे अन्यत्र घाटा-वान् कालवान् जटावान् बलवति असल अन्यत्रांसवान् दुर्बल स्नेहवति स्नेहल अन्यत्र स्नेहवती गौ। प्राण्यङ्गावन्तात् कर्णिकाल कर्णिकावान् गज। शिखाया' प्राण्यङ्गत्वेऽपि अनभिधानान्नेह शिखीति पूर्वेणैव प्राणिग्रहणं किं शिखावान् शिखा वेदस्याङ्ग न तु प्राणिन.। रुगावन्तात् मूर्च्छाल विचर्चिकाल.। क्षुद्रजन्त्वावन्त-त्वात् यूकाल मक्षिकाल इत्यादि। आवन्तादिति किं हसवान् ज्वरवान् मशक-वानित्यादि। फेनादेरिल'। फेनिल इति। फेन कर्णोदक प्रज्ञा ध्रुवका ध्रुवका कला। पिच्छिण्ड यवपिच्छाश्च कीकव्रीहि गुहाग्रहा.। जङ्घा पादोदक पङ्क कर्ण तुण्ड शटा वसा.। शर्करा सिकताद्येश्च चेपे काल घटा जटा.। पार्ष्णिश्च धमनिश्चैव फेनादौ परिकीर्त्तिता। कैश्चित् गुहाग्रहशब्दौ न पठ्यते। पार्ष्णि-धमनिभ्यामीनो वा। आभ्यामीनो वा स्यात् अस्त्यर्थे। पार्ष्णीन पार्ष्णिन पक्षे पार्ष्णिवान् धमनीन धमनिन. पक्षे धमनिवान्। लोमादे.श। लोमश इति। लोम रोम तरुमान वरुवर्कौ कपिर्हवि। बहुवन्ध इत्योद्दिष्टा लोमादौ ग्रन्थको-विदैः। पामादेर्न। पामन इति पाम अस्ति अस्य अस्मिन् वा इति वाक्यम्। पाम श्लेष्मा क्रमिर्दद्रुर्वलिश्च वामसामनी। अङ्ग तु स्यात् प्रशसाया निलिसी ज्योतिर्षा हि लुक्। कटुशाकौ पलाशीना स्त्री नेलघ्रास्तुड इत्यथा। विश्वञ्च दक्षतेर्लुक् च गणसूत्रप्रमाणत। अङ्गनेति प्रशसाया स्वभावात् स्त्रीत्वम् अन्यत्राङ्गवती नेत्र

ज्योतिष इषो लुक् ज्योत्स्ना इन्दुद्युतावभिधानम् अन्यत्र ज्योतिष्मती कद्रूर्नागजननी गृहगोधा च कद्रुण. शाकी शाकसमूहे स्यात् महत्शाके वा शाकमस्यास्मिन् वा शाकिन पलाशी महत्पलाशे पलाशसमूहे वा पलाशिन वयाणा ख लक्ष्मशाड' लक्ष्मण विषु अञ्चते क्विप् विष्वगस्त्यस्मिन् वा विषुण अञ्चतेर्लुक्। प्रज्ञादेर्ण'। प्राज्ञ इति। प्रज्ञा श्रद्धा च भल्लूकी भालुकभलुकावपि। भल्लूकश्च यवश्चापि रोहिणो मरुदित्यपि। कण्डोल वत्सवत्सर्ग्या लाङ्गूलवयसावपि। मध्वादेर। मधुर इति। मधु माधुर्य्यमस्त्यस्यास्मिन् वा मधुरो रस शब्दशक्तिस्वभावात् विवक्षितार्थ एव त्य द्रव्याभिधानन्तु तद्योगात् मधुरो गुड यथा शुक्लादिगुणयोगात् शुक्ल. पट इत्यादि। मधुपक्षमुख पांशु रूष पाण्डु नर्म्म शुषि। कच्छुरप्यथ सज्ञाया खकुञ्जनगसिन्धव। स्वस्तु कच्छ्वा शिखायाश्च तमसस्तु तिमिस्तमि। खरी गर्दभ कुञ्जरो हस्ती नगरो जनपद' सिन्धुरोदेश' कच्छुरस्त्यस्यास्मिन् वा कच्छुर रे स्व अन्यत्र कच्छमान् एव शिखा अस्यास्ति शिखर. तमोऽस्यास्ति तिमिर तमिस्र पक्षे तमस्वितमस्वत्। केशा-देर्व. केशव इति। केशेष्टकामानहिरण्यराजी कुमार विश्वाश्च विधुर्विषव्यम्। अण. सलुग्वेजकाजगवौ तु नाम्न्यव गाण्डी च परे प्रयोगात्। अर्णोऽस्यास्त्यस्मिन् वा अर्णव. सकारलुक् रूढिशब्दात् अतान्यत्यस्य निवृत्ति अजो विष्णु को ब्रह्मा ताव स्मिन् विद्येते अजक धनु अथवा अजो मुख्योऽस्य मुख्ये क सोऽस्त्यस्यास्मिन् वा अजकव परैकदेशिनस्तु अजकावमित्याहु.। अज गच्छति अजग सोऽस्त्यस्या-स्मिन् वा अजगवमिति चान्द्रा। गाण्डी ग्रन्थि. सोऽस्त्यस्मिन् वा गाण्डीव अर्जुन धनु। रज आदेर्वल.। रजस्वलेति स्त्रीधर्म्मिण्यभिधानम्। नाम्नि रज शिखा दन्त परिषत् कृषिर्वालति.। भावोत्सङ्गोत्साहपुताश्वलार स्युरनामनि। शिखा वलो मयूर दन्तावलो हस्ती परिषद्वलो राजा अप्रतिसदेति य.। मूले कृषी वल-इति नाम्नीति र्घ. आतीवल शौण्डिक. षट् सज्ञायाम् असज्ञायान्तु भ्रातृवल। उत्सङ्गवल: उत्साहवल'। ऊर्जोऽसहनवलेऽहङ्कारे। न इत् ऊर्जस्वल साहङ्कार। फलादेरिन. फलिन इति। फल वर्ह पर्णो गर्भो मल शृङ्गञ्च कथ्यते। मलादीमसो वा। मलशब्दादीमस स्याद्वा अस्त्यर्थे। मलीमस' मलीन मलवान् वर्हिण इति घूर्ण इति ण. पक्षे वर्हीत्यादि। ऊर्णादेर्यु:। ऊर्णायुरिति ऊर्णा मेषलोम अयुक्ताविति नाकारलोप:। ऊर्णा शुभमहन्तय.। शुभम् अह शब्दौ शुभाहङ्कारयो-र्वर्त्तेते स्वादिपाठात् व्यौ। निद्रादेरालु। निद्रालुरिति। निद्रा तन्द्रा दया लज्जा कृपा हृदयमेव च। अर्श आदेर. अर्शस इति वैजयन्त इति वैजयन्ती माला अस्ति

यस्यासौ वैजयन्तं अर्शआदिराकृतिगणः। वातादेः किन्। वातकी। वातातिसारपिशाचा इति वयः। शृङ्गादेरारकः। शृङ्गारक इति पक्षे शृङ्गी शृङ्गिकः शृङ्गिणः शृङ्गवान् वृन्दारकः पक्षे वृन्दी वृन्दवान्। वाशब्दस्य व्यवस्थावाचित्वात्। हिमादेर्यः। हिमादेरस्त्यर्थे यः स्यात्। हिम्यः हिमवान् पर्वतः। हिम गुणो ब्राह्मणश्च मङ्गलञ्च मह्स्तपः। रूपादाहतप्रशंसायाम्। रूपादस्त्यर्थे यः स्यात्। निघातिकायास्ताडनादिना निष्पादितं यत् पुरुषाकृतिरूपं तदाहतपदेनोच्यते। उक्तपदादिघटितव्यवहाराय द्रव्यं दीनारः दक्षिणदेशे आहतं प्रसिद्धं रूपमस्ति यस्यासौ रूप्यो दीनारः प्रशस्तरूपमस्यासौ रूप्यो गौः। हिमादेलुः। वेत्येव हिममस्ति यस्यासौ हिमेलुः पक्षे हिम्यः हिमवान्। नित्यं णिको नैकद्रव्यान्नैकपूर्वनिष्कपूर्वात् तु शतसहस्रात्। एकद्रव्यवर्जाद्गोपूर्वात् एकपूर्वाच्चास्त्यर्थे णिको नित्यं स्यात् निष्कपूर्वाच्छतात् सहस्राच्च। गौरस्तिकः गौशतिकः गौसहस्रिकः एकशतिकः एकसाहस्रिकः। संख्या सङ्ख्यादिति परपदस्य त्रिः नैष्कशतिकः नैष्कसहस्रिकः। एकद्रव्यात् तु एकद्रव्यं हिमादिराकृतिगणत्वात् यः पक्षे एकद्रव्यवान्। कथमेकादशीति पूर्ववाशब्दस्य व्यवस्थया नदादिः। नित्यग्रहणादन्यस्यास्त्यर्थस्य निवृत्तिः। ज्योत्स्नादेः णः। वेत्यनुवर्त्तते मण्डूकगत्या ज्योत्स्नास्ति यस्यासौ ज्योत्स्नः ज्योत्स्नावान् स्त्रियां ज्योत्स्नी ज्योत्स्नावती। ज्योत्स्ना तमी विसर्पश्च तपः शिखा विपादिका। सुधा सहस्र कुतपः सिकता शर्करा सिधुः। कुण्डलञ्च समाख्याता द्वादशैते मनीषिभिः। शर्करासिकताभ्यां लुक् वा देशे। आभ्यामस्त्यर्थविहितानां लुक् स्यात् वा देशे। शर्करा सिकता देशः पक्षे शर्करिलः सिकतिलः इति शार्करः शर्करावान् सैकतः सिकतावान्। सूक्तसाम्नोरीयः। लेरस्त्यर्थे सूक्ते सामनि चाभिधेये ईयः स्यात्। अच्छावाक् शब्दोऽस्ति यस्मिन् सूक्ते अच्छावाकीयं सूक्तं यज्ञोऽस्ति यस्मिन् सामनि यज्ञीयं साम। अध्यायानुवाकयोर्लुक् वा। अनयोरर्थयोरभिधेययोरस्त्यर्थे ईयः स्यात् वा लुक् च। गर्दभशब्दोऽस्मिन् अध्याये वर्त्ततेऽनुवाके वा गर्दभाण्डशब्दोऽस्मिन् अध्याये वर्त्तते गर्दभाण्डीयोऽध्यायः गर्दभाण्डः अनुवाकश्च एवं दीर्घजीवितीयः दीर्घजीवितः पलितस्तम्भीयः पलितस्तम्भः इत्यादि। विमुक्तादेः णः। विमुक्तादेरस्त्यर्थे णः स्यात् अध्यायानुवाकयोरर्थयोः। विमुक्तशब्दोऽस्मिन्नध्याये वर्त्तते अनुवाके वा वैमुक्तः अध्यायः अनुवाकश्च। विमुक्तो वसुमान् पूषा दाशार्हः परिश्रावकः। देवासुरा दशार्णाश्च इर्व्वानपि वृत्रहा। सुवर्णोपसदौ सोमः पततीनोर्वशी वयः। असिहत्यो हविर्दानं सन्दाविणः च वर्हः;

## ५५५। मान्तोऽदनतः।

मान्तः ६।, अत् ।१।, अनत ५।।

मस्यान्त् इत्यस्य अत् स्यात् नत्वकारात् परस्य।

अभविषत, अभविष्ठाः अभविषाथाम्।

## ५५६। धे स-लोपो वा।

धे ७।, स-लोप. १।, वा ।१।।

धे परे सस्य लोपो वा स्यात्।

## ५५७। टीठीढीधो ढिचः सेमस्तु हलो वा।

टीठीढीध ६।, ढ ।१।, इच ५।, सेम ५।, तु ।१।, हल ५।, वा ।१।।

इचः परस्यासां धस्य ढः स्यात्, सेम्हलात् परस्य तु वा स्यात्।

अभविढ्वं अभविध्व [ ६४ ] झप्झसोरिति सस्य दः।

अभविड्ढं अभविषि अभविष्वहि अभविष्महि।

---

दतिच्छृदिमन्यतरौ भिदि विद्यतिविन्दतिसीदतयः॥ छविनत्तिरुधिच्छिपिपिंश्यतयौ रभिक्षीयतिराध्यतिसाध्यतयः। तुदिवन्धिवधिस्वपितप्यतयस्क्षपिहन्तियतिश्लिषिपुष्य-तयः। लिपिलुप्यतिविध्यतिचुध्यतयो नमिदंशियमिस्पृशिनद्यतयः। वपतिर्विजलिञ्ज दिशिपश्यतयौ लभिगच्छतिवेशतिरीशतयः। रमुङ्क्रुशजौनिशतिल्विषयौ द्विषि-तुष्यतिदुष्यतिशुष्यतयः॥ विषलिर्विषगौपिसधौशिषयौ घषतिवषतिदुं ह्निलिहय॥ आपिमृंशिविशिक्रशिदहिरहयौ लेढिवंहिनहिश्पतिशपय। तपति स्कन्दतिरौदित् गदित श्रीमद्वोपदेवमतविदितः॥ ५५४॥

मस्यात्मनेपदस्य अन्त् मान्त् तस्य। अन्तावयवमच हित्वा पूर्वभागस्य ग्रहण तेन कुर्वते कुर्वताम् अकुर्वत इत्यादावपि। अनतः किं एधन्ते लोपोऽतो इत्यनेन कृतस्याकारलोपस्य स्थानिवत्त्वाङ्गीकारात्॥ ५५५॥

धे परे सस्य लोपः स्याद्वा। ङित्वात्सङ् धे श्री लुकि आध्वे सस्य दकारे आढ्वे॥ ५५६॥

टीढीढीनां ध टीठीढीध तस्य सह इमा वर्त्ततेऽसौ सेम् तस्मात्। यथा अकृढ्वं आनढ्वं अस्तौढ्वं अध्यैढ्वं उड्ग्रढ्वे घौढ्वं तुष्टुढ्वे चकृढ्वे कषीढ्वं नेषीढ्वं

५५८। धुर्द्विष्ठ्याङि।

धु' १।, द्वि १।, ष्यङि ७।।

ष्यामङि च धुर्द्विः स्यात्।

५५९। झभखथहघंकॄणां जव्चप् जस्वचॄाः खेः।

झभ् कु ऋणा ६।॥, जव् चु आ १।॥, खे ६।।

खेर्झभ खथ हकार घं कवर्ग ऋवर्णानां क्रमात् जब् चप् जकार स्व चवर्गाकाराः स्युः।

---

सोषीढ्व अभविढ्वमिति सलोपपक्षे षस्य ढ पक्षे अभविध्व सलोपाभावपक्षे झप्झसोरित्यनेन सस्य द अभविड्ढम्॥ ५५७॥

टौ च अङ् च ष्यङ् तस्मिन्। प्रकरणादेव धौ प्राप्तौ पुनरुपादान ज्ञापयति ष्या अव्यवहितपूर्वधातोरेव द्वित्व स्यात्। तेन इन्दामास इत्यादौ इन्दादेर्न द्वित्वम्। एव वीप्सायां पद द्वि। यथा गृहे गृहे गीत स्मार स्मार मनसि। गुणसादृश्य पीडानुपूर्व्येषु समासवच्च। एष्वर्थेषु द्विरुक्त समासवच्च स्यात्। गुणे सुखसुखेन प्रियप्रियेण। सादृश्ये गुणवाचकस्यैव पटु पट्वी मृदु मृद्वी पूर्वस्य पुवद्भाव मन्दमन्दमुदित प्रययौ ख भीतभीत इव शीतमयूख। कदाचित् समासो न स्यात् च। यथा मन्द मन्द नुदति पवन। पीडायां गतगता नष्टनष्टा। आनुपूर्व्ये ज्येष्ठज्येष्ठ प्रवेशय एकैकमक्षर जपति। त्वरायां यावत् बोधम्। गच्छ गच्छ गच्छ अहिरहिरहि। सामीप्येऽध्युपर्य्यधसाम्। अध्यधि ग्रामम् उपर्य्युपरि ग्रामम् अधोऽधो ग्रामम्। सामीप्ये कि सर्वस्योपरि चन्द्रमा। वाक्यञ्च यावदिच्छयाधिक्ये। अहो दर्शनीया अहो दर्शनीया अत्र दर्शनीयत्वस्याधिक्य मह्य मह्य रोचते अत्र रुचेराधिक्यम्। नमस्तस्यै नमस्तस्यै नमो नम इत्यादौ भक्तेराधिक्यमिति॥ ५५८॥

झभ् च खथ् च हश्च घंश्च कुश्च ऋश्च ते तेषाम्। जव् च जप् च जश्च स्वश्च चुश्च अश्च ते। यथा जझाष डुढौके दधार जघास बभौ। चखाद पुस्फोर चिच्छेद टिष्ठेव तुथोद जह्रौ पपौ चुकोप जगाद। पपार ततार ऋकारेण वर्णस्य ऌकारस्य ग्रहणात् चकॢपे॥ ५५९॥

## ५६०। भुवोऽङ् ठ्यां ढ-भावे तु वा।

भुव ६।, अङ् ।१। ठ्या ७।, ढ भावे ७।, तु ।१।, वा ।१।।

भुव' खेरङ् स्यात् ठ्या ढ-भावयोस्तु वा।

बभूव बभूवतुः बभूवुः, बभूविथ बभूवथुः बभूव, बभूव बभूविव बभूविम। बभूवे बभूवाते बभूविरे, बभूविषे बभूवाथे बभूविढ्वे बभूविध्वे बभूवे बभूविवहे बभूविमहे। ढ भावे च। बभूवे बुभूवे इति प्रयोगौ।

भविता भवितारौ भवितारः, भवितासि भवितास्थः भवितास्थ, भवितास्मि भवितास्वः भवितास्मः। भविता भवितारौ भवितारः, 'भवितासे भवितासाथे भविताध्वे, भविताहे भवितास्वहे भवितास्महे।

भूयात् भूयास्ता भूयासुः, भूयाः भूयास्तं भूयास्त, भूयासं भूयास्व भूयास्म। भविषीष्ट भविषीयास्ता भविषीरन्, भविषीष्ठाः भविषीयास्था भविषीढ्वं भविषीध्वं, भविषीय भविषीवहि भविषीमहि।

भविष्यति भविष्यत' भविष्यन्ति, भविष्यसि भविष्यथः भविष्यथ, भविष्यामि भविष्यावः भविष्यामः। भविष्यते भविष्येते भविष्यन्ते, भविष्यसे भविष्येथे भविष्यध्वे, भविष्ये भविष्यावहे भविष्यामहे।

अभविष्यत् अभविष्यताम् अभविष्यन्, अभविष्य. अभविष्यतम् अभविष्यत, अभविष्यम् अभविष्याव अभविष्याम। अभविष्यत अभविष्येताम् अभविष्यन्त, अभविष्यथाः अभविष्येथाम् अभविष्यध्वम्, अभविष्ये अभविष्यावहि अभविष्यामहि।

भवतकि भवतकः। प्रणिभवति प्रनिभवति। एवं चेतति इत्यादयः।

---

ङित्त्वादन्त्यस्य स्थाने। ढस्य भावस्य ढभाव तस्मिन्। ढभावयोरपि नित्य-

[२] चिती संज्ञाने । *

## ५६१ । रुदाद्यस्तिसेर्दिस्योरीम् ।

रुदादि अस्ति से ५।, दि सी ६॥, ईम् ।१। ।

**एभ्यो दिस्योरीम् स्यात् ।**

---

मिति केचित् । भूयादित्यादिषु कित्त्वान्न गुण । भविषीढ्वमिति षकारस्य ढकारविधानसामर्थ्यात् व्यवधानेऽपि ढकार । भविष्यतीत्यादीनि सुगमानि । अवतकीत्यादौ त्यादिर्व्यत्यादिनाऽक् । प्रणिभवतीत्यादि अकखाद्यषान्तान्तेर्वा णत्वम् । एव चेततीत्यादय इति । येषु विशेषकार्य्यं नास्ति ते प्रयोगा एवेत्यर्थः विशेषकार्य्यार्थं सूत्राण्याह ॥५६०॥

रुदादिश्च "रोदिति स्वपितिश्चैव श्वसिति. प्राणितिस्तथा । जक्षति श्चैव विज्ञेयो रुदादि पञ्चको गण" इति । अस्तिरिति असल्भावे स्वरूपकथने तिप्

---

प्रसङ्गाद् बालबोधार्थं गणपाठोक्ता अनुबन्धास्तत्प्रयोजनानि अकारादि क्रमेण चोच्यन्ते । (४)

अ—सुखोच्चारणार्थ. ।

आ—निष्ठाभावादिकर्म्म वेट् । (१०७७ भावे क्रियारम्भे च वाच्ये क्त—क्तवतु स्थाने वा इट् )

इ—नुम्वान् । [५६८]

इर्—वा अङ्वान् । ( ५६५, ङ इति स्मृते )

ई—अनिड् निष्ठ । ( १०७१, क्त क्तवतु स्थाने न इट् )

उ—क्त्वा वेट् । ( ११७२ )

ऊ—वेट् । ( ५७३ ) वेम् ।

ऋ—चङि अह्रस्व. । ( ६३८ )

ॠ—चङि वा ह्रस्वः । ( ३३९ )

ऌ—अङ्वान् ( ५६५ ) ङ ।

ए—सिचि अवृद्धि । ( ५७६ )

ऐ—यजादि ( ६५१ )

ओ—निष्ठात न ( १०५२ ) क्त क्तवत्वोः तस्थाने न )

औ—अनिट् । ( ५५४ ) अनिम्

क—चुरादि । ( ७७३)

कि—वा चुरादि. ( ७७३ )

ग—क्र्यादि. । ( ७३८ )

गि—पूादिः । (७६९) पूधातुभिन्नश्चेत् स्वादिश्च (१०५२)

घ—रुदादि ( ५६१,५९५ )

ङ—तङ्वान् । ( ५३१, कर्त्तरि वाच्ये आत्मनेपदी )

ज—ज्वलादि । [१०००]

ञ—उभयपदी । ( ५३१ )

## ५६२। झस् स्वात् झसीम ईमि सेर्लोपः।

झस स्वात् ५।, झसि ७।, इम' ५।, ईमि ७।, से ६।, लोप १।।

झसात् स्वाच्च परस्य झसि, इमः परस्य ईमि, सेर्लोपः स्यात्। अचेतीत् अचेतिष्टाम्।

---

वक्तव्य। रुदादिश्च असिश्च सिश्चेति रुदाद्यसिसि तस्मात्। दिश्च सिश्च दिसी तयो। रुदाद्यसिभ्या घ्यादिस्योरेव रुदादेभ्या सिव्यवधानेन असेर्भू आदेशे न च घ्या दिस्योरसम्भवात्। एव सिरिति घ्या सि तस्मात् परयोर्घ्या दिस्योरेव घ्या असम्भवात् एवञ्च दिसाहचर्य्यात् सिस्तु विभक्तेरेव। अन्यथा रुदादे' परस्य घ्या क्तस्य सेरपि इम् प्रसजेत्। यथा अरोदीत् अरोदी आसीत् आसी'। सेस्तु अनैषीत् अनैषी ॥ ५६१ ॥

झस् च स्वश्चेति झस्स्व तस्मात् यथा असैद्वा अक्रात अव्राजीत्। ईम परस्य ईम्येवेति नियमात् अचेतिष्टामित्यादौ ऋस्वात् परस्यापि सेर्न लोप। अचेष्ट असोष्ट इत्यादौ लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बलवानिति न्यायात् आदौ गुणे सेर्लोपो न स्यात् ॥ ५६२ ॥

---

ञि—अद्य क्त.। (१०९५ वर्त्तमाने क्त)
टु—साधु.। (११४२)
डु—त्रिमक्-युत। (११४३)
ण—फणादि.। (५७९)
त—अदन्त। अत्-अन्त.। (७७५)
द—तनादि। (६८८)
ध—रुधादि। (७३८)
न—स्वादि। (७३८)
प—मुचादि.। (७४१)
भ—शमादि। (७४०)
म—घटादि। (७९८)
मि—णिचि इण् शमी. वा ऋस्व.। (७९९)
य—दिवादि.। (७३८)
र—वैदिक.। (वेदोक्तधातु)।
ल—अदादि.। (६७०)
लि—ह्लादिः। (७२६)
लु—स्वपादि'। (६६१)
व—हुतादि'। (६४८)
श—तुदादि'। (७३८)
शि—कुटादिः। (७५५)
ष—क्तदङ् वान्। (११५६, क्तदन्ते ङ)
स—जक्षादि। १०४)

---

## ५६३। अनुस् सिद्देरभुवः।

अन् ।१।, उस् ।१।, सि वे ५।, अभुव ५।।

सेर्द्देश्च परस्य अन उस् स्यात् न तु भुवः। अचेतिषुः अचेतोः।

## ५६४। खेराद्यचो लोप्योऽनुशस्खपाद्यन्तान्यस्याद्यन्तौ।

खे ६।, आद्यच ५।, लोप्य १।, अनु ।१।, शस् अन्तौ १॥।

खेराद्यचः परो भागो लोप्यः स्यात्, पश्चात् शसादि-खपान्तो यदि स्योऽवशिष्टस्तस्यादिर्लोप्यः,यदन्यात्द्दशस्तस्यान्तो लोप्यः। चिचेत चिचितत. चिचितुः।

---

।सश्च दिश्च सिदि तस्मात्। सि परस्य द्या अन् उस् देस्तु द्या एव। यथा अचेतिषु अस्तु अषु अद्रु अगु एधु भूस्थापिवेति सेर्लुकि त्यलोपे त्यलक्षणमिति न्यायात् सि परत्वादन् उस्। देस्तु अजचु। अभुवः किम् अभूवन् यङलुकि अबोभुवन्॥ ५६३॥

आदिश्चासावच् चेति आद्यच् तस्मात्। आदिरत्र अचा सह्य एव न तु यावद्वर्णानामिति बोध्यम् अन्यथा ददरिद्र इत्यादौ हसादे परभागलोपानुपपत्ते। शस् च खप् च शखपौ। आदिश्च अन्तश्च आद्यन्तौ शखपौ आद्यन्तौ यस्य स शखपाद्यन्तः शखपाद्यन्तश्च अन्यश्च शखपाद्यन्तान्यौ शखपाद्यन्तान्यौ च तौ स्यौ चेति शखपाद्यन्तान्यस्यौ तयोराद्यन्तौ शखपाद्यन्तान्यस्याद्यन्तौ। अनुरिह परभागार्थश्च इत्यत आह आद्यच परो भाग इति। पश्चादिति आद्यच. परभागाभावे इत्यर्थः। तेन यस्य आद्यच. परभागो वर्त्तते तस्य तल्लोपानन्तर यस्य तु पर भागो न वर्त्तते तस्य प्रथमत एव शखपाद्यन्तसयोगस्य आदिर्लोप्य अन्यसयोगस्य अन्तो लोप्य स्यादिति निष्कर्ष.। यथा चखाद पुस्फोर टिष्ठेव तस्थौ चुश्चोत तुष्टुप तस्तार चस्कन्द पस्पर्श। अन्यसयोगस्य तु सस्मार दध्वान ततार चक्राम। परभागाभावे तु तुष्टाव तस्थौ चुक्षाव पस्पार दध्यौ दध्माव जग्नौ जग्लौ सखौ इति॥ ५६४॥

(३) च्युतिर् च्चरणे।

## ५६५। शासुलिद्द्युत्पुषादेर्ङ्ष्टौपे जृश्विस्तन्भुविषु म्रुचुम्लुचुग्रुचुग्लुञ्चिरितस्तु वा।

शासु-पुषादे ५।, ङ १।, टौपे ७।, जृ इरित. ५।, तु ।१।, वा ।१।।

शासोऌकारेतो द्युतादेः पुषादेश्च ङः स्यात् टौपे, जृादेस्तु वा। अच्युतत् अच्योतीत् चुच्योत।

---

ऌ इत् यस्य स लित्। द्युत् च पुष् च द्युत्पुषौ तावादी ययोस्तौ द्युत्पुषादौ शासुश्च लिच्च द्युत्पुषादी चेति तस्मात्। स्वमते लिदित्त्वेनैव सिद्धे द्युत्पुषाद्यो-र्विधान प्राचामनुरोधात्। इर् इत् यस्य स इरित्। जृश्च श्विश्च स्तन्भुश्च विषुश्च म्रुचुश्च म्लुचुश्च ग्रुचुश्च ग्लुचुश्च इरिच्चेति तस्मात्। यथा अशिषत् अघसत्। द्युता-दयो ह्वादादेरात्मनेपदिनः सर्वे टौपे ङ विधानसामर्थ्यात् टामुभयपदिन यथा द्युत ङ ऌ द्युत्याम् अद्युतत् अद्योतिष्ट। द्युतादिश्च द्युति. श्वित्त ञिम्य. रुचिर्घ्विता-चच्छि दाचिदा श्लमुनिदा द्युटिश्च। रुचिलुटिघ्वन्स लुठि चुभिश्चतुर्भि सन्न-व्रतुव्रधुश्च। स्वन्तु स्रधुश्चापि क्लपुर्युताविति वयोविंशतिरेव याता इति। पुषादयो दिवादौ परस्मैपदिन सर्वे। पुष्यति शुष्यति श्विदय स्निघ्यति तुष्यति बध्य-चुधय। प्लुष्यति दृप्यति मुह्यति दुह्य णान्ह षिाह्य क्रुधि लुठिषाश्चयः। सप्त-दश्चेति पुषादावुदिता. श्रीमद्योपदेवमतविदिता। एव पुष्यद्‌प्यश्चमुदसुनसदय श्राम्य एमु जसु मुदसयः। अस चाम्यति वस क्रुमयः पुष्य विध्य कुशि वुमष्यति सुषय। उच्यति ऋषि मसि व्रषि क्षम ह्यय कुप्यति भञ्ज भन्सु चिदय। ष्टुपिह्निंपिडिपिगुपियुपयः क्षियति रुपि नुपि लुभि क्ष्वदि ग्टधयः। दुर्गसिंह इति चाह पुषादि तेनीभयो प्रामाणिकत्वादेते इरनुबन्धा पठिता किञ्च सिध्यति चुभ्यति लभ्यति तुभ्यतीना चतुर्णा दुर्गसिंहसम्मतानामपि बहुवादसम्मतत्वादिरनु-बन्धेऽपि नोक्त.। जृादेस्तु अजरत् अजारीत् अश्वत् अश्वयीत् अस्तभत् अस्तम्भीत्। विष इति विष निच्यौ व्याप्तौ इत्यस्य ग्रहणम् अविषत् अविचत् अम्रुचत् अम्रो-चीत् अम्लुचत् अम्लोचीत् अग्रुचत् अग्रोचीत् अग्लुचत् अग्लोचीत्। इरितस्तु अच्युतत् अच्योतीदित्यादि॥ ५६५॥

(४) मन्थ विलोडने ।

## ५६६ । स्यात् ठ्यपित् क्विद्वा ।

स्यात् ५।, ठी ।१।, अपित् ।१।, कित् ।१।, वा ।१। ।

## ५६७ । हसुङ्नो लोपोऽणौ ।

हसुङ्न ६।, लोप १।, अणौ ७। ।

धोर्हस उङो नस्य लोपः स्यादणौ । ममथतुः ममन्थतुः । मथ्यात् ।

(५) कुथि हिंसा-संक्लेशयोः ।

## ५६८ । नेदित्पूजार्थाञ्चोः ।

न ।१।, इदित् पूजार्थाञ्चो ६॥ ।

इदितो धोः पूजार्थस्याञ्चतेश्च नलोपो न स्यादणौ । अत-एवेदितो नुण् । प्रनिकुन्थगात् । (५४८) कादित्वान्न णः ।

(५) षिधु गत्याम् ।

## ५६९ । भाद्यादिषाः स्नोऽष्ठ्यै ष्वक्कष्ठिवाम् ।

भ्वाद्यादिषा. ६।, स १।, अष्ठ्यै ष्वक्क-ष्ठिवाम् ६॥। ।

भ्वादेरादौ स्थितयोः ष-णयोः स नौ स्तः, न तु ष्ठ्यै ष्वक्क ष्ठिवाम् ।

---

संयोगात् परा अपित् ठी कित् स्याद्वा । यथा बभजतु. बभञ्जतु । हसुङ्नोलोपो-ऽणौ ठ्यान्तु वा इति कृते ठ्यपिति न लोपविकल्पे सिद्धे स्यात् ठ्यपित् कित् वेति विधानन्तु भस्ज औ श पाके इत्यस्य ठ्यपिति भस्जीऽरेऽणौ भर्जवेत्यनेन भर्जादेशे बभर्ज बभज्जे इत्याद्यर्थम् ॥ ५६६ ॥

उङ् चासौ न चेति उङ् न । हसो हसन्तधातोरुङ् न हसुङ्न तस्य हसुङ्न इति षष्ठेरकम् । नास्ति णुर्यस्मिन् परे सोऽणुस्तस्मिन् । यथा भनूजधो भज्यते भक्त । हसन्तधातो किम् । नीयते नीर्ण अत न प्रसङ्ग. ॥ ५६७ ॥

इदनुबन्धाना नकार एव नास्ति कथं लोपो निषिध्यते इत्यत आह अतएवे त्यादि । अतएव न लोपनिषेधादित्यर्थः ॥ ५६८ ॥

५७०। सेक सीक सृप सृ सृज स्तृ स्त्या-न्ये दन्त्याजन्तसादयः। षोपदेशा ष्वः स्वक्क स्वित् स्वत् स्वञ्ज स्वप स्मिङश्च। णोपदेशास्त्व-न्टन्नर्द नाथ नाध नन्द नक्क नॄ नटः।

सेक अन्ये १।॥, दन्त्याजन्तसादय १।॥, षोपदेशा १।॥, ष्व १।॥, स्वक्क स्मिङ १।॥, च ।१।, णोपदेशा १।॥, तु ।१।, अ न्टत्—नट १।॥।

सेधति।

---

भ्वादिरिति भूसत्तायामित्यादिर्दशगणात्मक तथाच। भ्वाद्यदादी जुहो-त्यादिर्दिवादि स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादि चुरादय इति भ्वादिरादि. भ्वाद्यादि ष च ण च ष्ण भ्वाद्यादौ ष्ण भ्वाद्यादि ष्ण तस्य। धोरधि कारेऽपि भ्वादिग्रहण लिङ्गधातोर्निरासार्थम्। तेन षष्ठमिच्छति षष्ठीयति एव षकारीयतीत्यादौ न प्रसङ्ग"। षाट्वर्गेस्तवर्गेज इति वोपदेवस्वरसात् अत्र षकारस्या-षट्वर्गस्य तवर्गप्रकृतिकत्वे ष्यायते डिर्भावे निमित्तस्याभावे नैमित्तिकस्याप्यभाव इति न्यायात् टकारस्य तकारत्वे णपि तष्ट्यौ सनि तिष्यासति यङि त्याष्टायते इति। एव सवव। षोपदेशणोपदेशौ दर्शयति साइश्लोकेन ॥५६९॥

सेक च सीक च सृप च सृश्च सृज च स्तृश्च त्याश्च ते तेभ्योऽन्ये। दन्त्यश्च अच्च दन्त्याचौ तावन्ते यस्य स दन्त्याजन्त दन्त्याजन्तश्चासौ स चेति दन्त्याजन्तस दन्त्या-जन्तस आदिर्येषा ते दन्त्याजन्तसादय दन्त्यवर्णान्ता अजन्ता वा ये सकारास्तदा-दिका धातव षोपदेशा धातुसज्ञाकाले मूर्द्धन्यादित्वेन पठिता इत्यर्थ सेका-दीनामजन्तसादित्वात् स्तृष्ट्या इत्येतयोर्दन्त्यान्तसादित्वात् प्राप्तौ निषेध। स्वक्कादयो दन्त्यान्तसादयोऽजन्तसादयोऽपि न भवन्तीति पृथगुक्ता। किञ्च उदूटौ यत्र विद्येते यो व प्रत्ययसन्धिज"। अन्तःस्थ त विजानीयात् तदन्यो वर्ग्य उच्यते। इति स्वरसात् स्वपेर्वकारस्य दन्त्यत्वेऽपि पृथक ग्रहण ज्ञापयति दन्त्यान्तसादीनामजन्तसादीनाञ्च क्वचित् षोपदेशता नास्तीति। तेन स्वका प्रतीघाते सान्त्वक सान्त्वने इत्यादीना दन्त्यादित्वं सिद्ध षोपदेशफलन्तु कृतसकारवत्त्वात् तुष्टाव तोष्टूयते सुष्वप सोषुप्यते इत्यादिषु षत्वम्। न्टश्च नर्द च नाथ च नाध च नन्द च नक्कश्च नॄश्च नट ऋ ते न्टन्नर्दनाथनाधनन्दनक्क नॄ नट, न विद्यन्ते ते येषु धातुषु मध्ये ते तथा। न्टतादि-

## ५७१ । व्याच्छस्य गत्यर्थवदे सः ।

व्याच्छस्य ६।, गत्यर्थवदे ७।, स १। ।

गत्यर्थे वदे च धौ परदे व्यस्याच्छस्य सः स्यात् । अच्छसेधति ।

## ५७२ । गीकः स्तु स्तुभ सो सुवास्यान्तसुञां स्था सेनि सन्ज स्वन्जाऽगतिसेधाऽप्रतिसदाऽयङ्सिचाऽनङ्स्तम्भाऽन्नव्यवस्वन परि नि वि सेव सुमऽनङ्सिवाऽनोऽङ्सहां सः षोऽभ्यपि दशस्यादेस्तु द्वेश्च ।

गि इकः ५।, स्तु सुञा ६।।।, स्था-सहा ६।।।, स १।, षः १।, अभि ७, अपि ।१।, दश-स्यादे ६।, तु ।१।, द्वे. ६।, च ।१। ।

स्वादेरस्यान्तसुञः स्थादेरगत्यर्थ-सेधोऽप्रतिपूर्व-सदो यङ्वर्जसिचोऽङ्वर्जस्तम्भोऽन्नार्थव्यवपूर्व-स्वनः पर्य्यादिपूर्व सेव सुमऽङ्वर्ज सिव अोऽङ्वर्जसहाश्च गीरिकः परः सः षः स्यात् अभ्यन्तरेऽपि दशानां स्यादीनान्तु द्विरुक्तानाञ्च । निषेधति न्यषेधत् गतौ तु गङ्गां व्यसेधत् ।

---

वर्जिता नादयो धातवः णोपदेशा धातुसञ्ज्ञाकाले मूर्द्धन्यादित्वेन उच्चारिता इत्यर्थः । णोपदेशफलन्तु प्रणयति प्रीणाति इत्यादिषु नादित्वात् प्राग्वन्नो इति णत्वम् । नृत नर्त्तने इत्यादीना दन्त्यादित्वन्तु अन्येषामनुरोधात् ॥५७०॥

व्यश्च तत् अच्छश्चेति व्याच्छः तस्य । गत्यर्थश्च वदश्च गत्यर्थवदः तस्मिन् । अच्छेति अभिशब्दसमानार्थो निपातः । यथा अच्छगत्य अभिमुखं गत्वेत्यर्थः अच्छोद्य आभिमुख्यमुदित्वेत्यर्थः ॥ ५७१ ॥

स्य स्वरूपः स्योऽन्तो यस्य स स्यान्तः न स्यान्तोऽस्यान्तः अस्यान्तश्चासौ सुञ् चेति अस्यान्तसुञ् । स्तुश्च स्तुभश्च सोश्च सुवश्च अस्यान्तसुञ् च तेषाम् अगतौ सेधः अगतिसेधः नास्ति प्रति यस्मिन् सोऽप्रति स चासौ सद चेति अप्रतिसदः । नास्ति

यङ् यस्मात् सोऽयङ् स चासौ सिचश्चेति अयङ्सिचः नास्ति अङ् यस्मात् सोऽनङ् स चासौ स्तम्भश्चेति अनङ्स्तम्भ । व्यवाभ्यां स्वन. व्यवस्वन अन्ने भच्ये व्यवस्वन अन्नव्यवस्वन' नास्ति अङ् यस्मात् सोऽनङ् स चासौ सिवश्चेति अनङ्सिव. । ओश्च अङ् च ओऽङौ न विद्येते ओऽङौ यस्य सोऽनोङ् स चासौ सह चेति अनोङ्सह । सेवश्च सुम् च अनङ् सिवश्च अनोङ्सह च ते सेवसुमनङ् सिवानोऽङ् सह । परिश्च निश्च विश्च परिनिवयः तेभ्य. सेवसुमनङसिवानोऽङ्सहः परिनिविभ्यःसेवसुमऽनङ् सिवाऽनोङ् सह' पश्चात् स्थाश्च सेनिश्च सन्जश्च स्वन्जश्च अगतिसेधश्च अप्रतिसदश्च अयङ् सिचश्च अनङ् स्तभश्च अन्नव्यवस्वनश्च परिनिविसेवसुमऽनङ् सिवाऽनोऽङ् सहाश्च ते स्थादिसह. तेषा स्थादिसहाम् । दशाना स्थादीनां समाहार दशस्थादि' तस्य । यथा अभिष्टौति विष्टोभते विष्यति विषुवति सुव इति तौदादिकस्य षूश चेपे इत्यस्य ग्रहणात् षू ङ् षू योङ इत्येतयोर्विसूते विसूयते इत्यादौ षत्व न स्यात् । विषुणोति स्यान्तस्य तु विसोष्यति विसविष्यति इत्यादौ न षत्वम् । स्य स्वरूप इति किं व्यषीढ्वमित्यादौ षत्व' स्यादेव । निष्ठास्यति सेनिरिति लिङ्गधातु' सेनया अभियाति अभिषेणयति । निषजति निष्वजते निषेधति । गतौ तु गङ्गा विसेधति किञ्च सेध इति निर्देशात् दैवादिकस्य निसिध्यतीत्यादौ न षत्वम् । निषीदति प्रतौ तु प्रतिसीदति निषिच्यति यङि तु विसेसिच्यते इत्युभयत्र न षत्वमिति श्रीपतिदत्त । विष्टभ्नाति विष्टभ्नोति अङि तु व्यतस्तम्भत् विष्वणति अवष्वणति चीर भिन्नु' अन्यत्र विस्वनति वीणा शब्द करोतीत्यर्थ. । व्यवेत्युक्तेर्बकारादपि षत्व' व्यवात् किं परिस्वनति इत्यादौ न स्यात् । परिषेवते निषेवते विषेवते । सुमिति सुमागमः परिष्करोति । परिषीव्यति अङि तु पर्य्यसीषिवत् पर्य्यादिनिमित्तक खेः षत्व' निषिध्यते खिनिमित्तक मूलधातोः षत्व' क्रिया दित्यनेन स्यादेवेति श्रीपतिदत्तः । परिषहते । ओकारे निसोढा अङि तु पर्य्यसीषहत् । अम्व्यवधाने तु प्रत्यष्टावीत् निविपरिस्वन्जस्तु सुमसिवसहाम् अम् व्यवधाने वा षत्वमिति वक्ष्यति । न्यष्टावीत् न्यस्तावीत् इत्यादि । दशस्थादेस्तु इश्चेति विधानात् खिव्यवधानेऽपि षत्व खेः सकारे सति तत्रापि षत्वमिति बोध्यं नितष्टौ अभिषिषेणयिषति निषषञ्ज विषाष्वज्यते । ष्यान्तु सत् स्वञ्जोऽग्रा नाखेरिति वक्ष्यमाणात् मूलधातोर्न षत्वम् । तेन विषस्वाज विषसाद इति । निषिषेध विषाषद्यते निषिषेच वितष्टम्भ विषष्वान विषिषेवे । एषामेव किं सीषनाश्रे विससौ विसुषाव इत्यादि दशस्थादेरिति नियमात् अन्येषा सोसुबादीना खेः

(७) षिधू शास्त्रे माङ्गल्ये च।

५७३। वेमूदित् स्वर चाय स्फाय प्याय सूति सूय धूञ रधादि निष्कुषोऽरवसो रु दु सुनोस्त्वठ्याः।

वा।१।, इम्।१।, ऊदित्—निष्कुष. ५।, अरवस ६।, रुदुसुनो ५।, तु।१।, अठ्या ६।।

एभ्यो वसस्यारस्येम् स्याद्वा, रौत्यादेस्तु ठीवर्जम्। असेधीत्।

---

षत्वं न स्यात्। क्विलादित्यनेन प्राप्तम् उपसर्गनिमित्तक षत्वमनेन नियम्यते। तेन णुल प्रस्तुत्या विस्नौति ष्णालशोधने प्रतिस्नाति इत्यादौ न षत्व किञ्च उपसर्ग-निमित्तक षत्वमेव नियम्यते। तेन तौष्णूयते तोष्णूयते इत्यादौ ष्विनिमित्तक षत्व स्यादेव। क्विलादित्यत्र विसर्गव्यवधानेऽपि षत्वविधानादिहापि विसर्गव्यवधाने-ऽपि षत्वमिति बोध्यम्। नि ष्टौति दु.ष्टौति॥५७२॥

ऊदिद्व यस्य स ऊदित् रध आदिर्यस्य रधादि। निस कुष' निस्कुष। पश्चात् ऊदिच्च स्वरश्च चायश्च स्फायश्च प्यायश्च सूतिश्च सूयश्च धूञ च रधादिश्च निष्कुष चेति तस्मात्। स्वर इति स्वृञ शब्दोपतापयो. स्वजातीयधात्वन्तराभावात् स्वृग्रहणेनैवेष्टसिद्धौ स्वरग्रहणं ज्ञापयति क्वचिन्निषेध बाधित्वा विकल्पोऽय प्रवर्त्तते इति। अतएव नेम्रतस्यप इत्यनेन व ऋ स्का, भिन्नात् ऋदन्तात् थप इम् निषेधेऽपि सस्वरिथ सस्वर्थ इति स्वयमुदाहरिष्यति। रधादिस्तु रध्यतिनृष्यद्रुह्यौ च मुह्यतिद्रुह्यतिस्तथा। ष्णुह्यणिह्यौ नशत्यू च रधादावष्ट धातव.। स्वमते ऊदित्त्वे नैव सिद्धौ स्वरते रधादेश्च इह पाठ प्राचीनमतानुवादार्थम्। रुश्च दुश्च सुश्च नुश्च तस्मात्। यथा असेधीत् असैत्सीत् असारीत् अस्वार्षीत् अचायीत् अचासीत् अस्फायिष्ट अस्फास्त अप्यायिष्ट अप्यास्त असविष्ट असोष्ट। सूति सूय इति अदादिदिवाद्योर्ग्रहणात् षूञ चेपे इत्यस्य असावीदिति नित्यम्। अधावीत् अधौषीत्। रधिता रद्धा निष्कोषिता निष्कोष्टा रविता रोता दविता दोता सविता सोता नविता नोता। ठ्यास्तु रुरुविव दुदुविव सुषुविव नुनुविव इति अन्यस्मादनिमोऽपि स्यादिति नियमात् नित्यमिम्॥५७३॥

**५७४। व्रजवद्रलजनिमोऽजिश्विजागुर्व्रिः सौ पे।**

व्रज वद अर् अल्-अच्-अनिम ६।, अजिश्विजागृ ६।, व्रि १।, सौ ७।, पे ७।।

**व्रजेर्वदेररन्तस्यालन्तस्याजन्तस्यानिमश्च सौ पे व्रिः स्यात् नतु जि श्वि-जागृणाम्।**

**असैत्सीत् असेधिष्टाम्।**

**५७५। ढभात्तथोर्धोऽधः।**

ढभात् ५।, तथो: ६॥, ध १।, अध ५।।

**ढभात् परयोस्तथयोर्धः स्यान्न तु धाञः। असैद्धाम्।**

---

नास्ति इम् यस्मात् सोऽनिम् व्रजश्च वदश्च अर् च अल् च अच् च अनिम चेति तस्य। जिश्च श्विश्च जागृश्चेति तत्। न जिश्विजागृ अजिश्विजागृ तस्य। अरलौ स्वरूपौ तेन तदन्तौ ग्राह्यौ। अच आरालेजित्यादिना अच एव व्रद्धि स्थानिवत्त्वेन निर्देशात् अच एवेत्यर्थ। धातो स्वरूपकथने इप्रत्ययो वक्तव्य। तेन व्रजेर्वदेरित्युक्तम्। यथा अव्राजीत् अवादीत्। व्रजसाहचर्य्यात् वद इति दन्त्यवकारादिरेव तेन वद स्थैर्य्ये इत्यस्य अवादीत् असारीत् अफालीत् अनैषीत् अनैषीत् अहौषीत् अधौषीत् अकार्षीत् अद्राचीत् असैत्सीत् अतौचीत् अमाचीत्। ज्यादेस्तु अश्वनयीत् अश्वयीत् अजागरीत्। ननु जागृोऽनव्वीति गुण स्यैव प्राप्तौ जागुरिह वर्जन कथमिति चेन्न निमित्तगतविशेषस्य बलवत्त्वात् व्रद्धे प्राप्तौ निषेधार्थम्। अतएव दीधीवव्योर्गुणञ्चला नित्यत्वात् परस्मैपदे अनुस्स्विइ-रिति उसि दीधीवेव्योर्न गुरिति सूत्र वाधित्वा गुरुस्य ठ्यामित्यनेन गुणे अदीधयु अवेवयुरिति वोपदेव ॥ ५७४ ॥

तश्च थश्च तथौ तयोस्तथो। असैद्धामित्यनिमपत्ते इमि तु असेधिष्टामिति। अध' किं धत्ते ॥ ५७५ ॥

[ ८ ] खद स्थैर्य्ये वधे च ।

५७६ । हसादेः सेमोऽह्मय्रेदित् चणश्वस-वधो वोऽन्तः सौ पे व्रिः ।

हसादेः ६।, सेम. ६।, अ-ह्म-य एदित् चणश्वसवध ६।, वा ।१।, उङत ६।, सौ ७।, पे ७।, व्रि १। ।

ह्मयान्तादेकारेतः चणादेश्चान्यस्य सेमो हसादेरुङोऽकारस्य व्रिः स्याद्वा सौ पे । अन्यखादीत् [ ५४८ ] खादित्वान्न णः, अखदीत् ।

५७७ । ञ्णित्यन्त्येजुङतोः ।

ञ्णति ७।, अन्त्येजुङतो' ६॥ ।

धोरन्त्यस्येच उङोऽकारस्य च व्रिः स्यात् ञिति णिति च । चखाद ।

---

सह इमा वर्त्तते य स सेम् तस्य । एत् इत् यस्य स एदित् । ह च म च य च एदिश्च चणश्च श्वसश्च वध चेति तत् । न ह्मयेदित्चणश्वसवध अह्मय्रेदित्चणश्वसवध तस्य । उङ् चासौ अच्चेति उङत् तस्य । ह्मान्तादिषु अचह्मीत् अक्रमीत् अह्यीत् अकटीत् अचणीत् अश्वसीत् अवधीत् ॥ ५७६ ॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन् । अन्त्यश्चासाविच् चेति अन्त्येच् उङ् चासावच्चेति उङत् अन्त्येच्च उङच्च तौ अन्त्येजुङतौ तयोः । हसादेरिति नानुवर्त्तते उङतो ग्रहणात् । तेन धातुमात्रस्य अन्त्ये च उङतश्च व्रि स्यात् ञिति णिति च परे । यथा जिगाय निनाय जुहाव पुपाव चकार ततार पपाठ उङत इति येन केनापि उङतो ग्रहणम् । तेन भन्जगिलभीवेसमोर्नलोपे इति नलोपे अजाजि अलाभि इत्यादि सिद्धम् । अतएव रन्जधातोर्नलोपे उङतो वृद्धौ घटादिजनीत्यनेन ह्रस्व विधाय रजयति मृगानिति स्रय वक्ष्यति । वृत्तौ धोरिति व्याख्यानात् त्वचयतीत्यत्र जिसमेतस्य धातुसंज्ञायां त्वचो धातुत्वाभावादुङतो न वृद्धि' । ननु निनाय नुनाव इत्यादिषु आदौ गुणे कृते पश्चादुङतो वृद्धौ इष्टसिद्धौ अन्त्येचो ग्रहण वृथेति चेन्न एकनिमित्तके गुणे कृते वृद्धेरकर्त्तव्यत्वात् । अन्यथा

५७८। णप्यन्त्ये वा।

अपि ७।, अन्त्ये ७।, वा ।१।।

चखाद चखद।

[९] गद भाषे।

प्रणिगदति।

[१०] [वर्ग्यबकारादिः] बद स्थैर्य्ये।

५७९। तॄ फल भज त्रप श्रथ ग्रथ दभाद्यन्तास्थहसां व्याः कित् सेमथप्यदेः खिलोपश्चा-शश दद वाद्यन्यथा-खि णु नलोपिनां जॄ वम भ्रम त्रस फणादिवधार्थ राधान्तु वा।

तॄ-हसा ६।।।, व्या. ६।, कित्-सेमथपि ७।, अत् ।१।, एः १।, खिलोप. १।, च ।१।, श-शश—नलोपिना ६।।।, जॄ राधा ६।।।, तु १।, वा ।१।।

वादीनामाद्यन्तस्थितास्थहसानाञ्च अकारः व्याः किति सेमथपि च एः स्यात् खिलोपश्च, नतु शशेर्ददेर्वकारादेरन्यथाभूतखेर्णुमतो नलोपिनश्च, जॄवमभ्रमत्रसफणादीना हिंसार्थस्य राधेश्च वा स्यात्।

बेदतुः बेदुः बेदिथ। अन्यथाभूतखेस्तु चखदतुः।

[११] णद शब्दे।

[५६९] ण्वाद्यादीति णो नः। नदति। प्रणिनदति।

---

ओ जागरयतीत्यादौ नायीऽयञ्मीति गुणे कृते उक्तौ द्वद्वापत्ते। एकनिमित्तके इति किं दिव्यतीति देवः अत्र पचादित्वादनि गुणे देवस्येदं दैवम् अत्र णो वृद्धिः स्यादेव। न च तथापि अन्त्यैगैव स्थाता किमिची ग्रहणेनेति वाच्यम्। व्येञ्ञै-वतावित्यस्य अपि विव्याय इत्यनुपपत्तेः। रामतर्कवागीशस्तु अन्त्यात्रुक्तौविति

पठिता अल्लोपित्व स्थानिवत्त्वञ्चादन्तत्वप्रयोजनम्। यत्र लेते न विद्यन्ते तत्रा-ल्लोपो विकल्पनम्। तद्बलादन्त्यदीर्घश्च पुकचेत्यङ्कापयत्यत इति स्वरसादकारस्य स्थितिपक्षे वृद्धिमादन्तत्वात् पनञ्च विधाय अङ्कापयति। शवलमिति साधयति तद्वेयम् अच एव वृद्धि स्थानित्वेन निर्देशात्। व्रजवदित्यादौ यथा अचो ग्रहण विनाप्यच प्राप्तिस्तथात्रापि ञ्णित्यन्तोऽतोरित्यनेनैवेष्टसिद्धौ अचो ग्रहणस्यैव वैय-र्थ्यात्। स्वमाचष्टे स्वापयति इत्यादौ अनेन वृद्धौ पनागमेनैवेष्टसिद्धौ एकाज-कारान्ताना नापविधानवैयर्थ्याच्च। एव नित्यस्य अल्लोपस्य तद्वचनबलाद्विकल्पे अन्त्यदीर्घस्यापि तद्वचनादेव सिद्धौ अकारस्य इह वृद्धिविधानवैयर्थ्याच्च अङ्का-पयतीत्यादौ तु अल्लोपो विकल्पनम् अन्त्यदीर्घश्चेत्युभयमेव मनीषादित्वात् साध्य-मिति ॥५७८॥

सुगम प्रणिगदतीति गदनदेति चालम् ॥५७८॥

स्य सयोग न स्नोऽस्य अस्यश्चासौ हस् चेति अस्य हस् आद्यन्तयोरस्य हस् येषा ते आद्यन्तास्यहस.। तॄश्च फलश्च भजश्च त्रपश्च श्रथश्च ग्रथश्च दभश्च आद्यन्तास्य हसश्च तेषाम्। सह इमा वर्त्तते य स सेम् सेम् चासौ यप् चेति सेमयप्। किच्च सेमयप् चेति किल्सेमयप् तस्मिन्। अन्तस्थवकार आदिर्यस्य स वादि। अन्यथा अन्यप्रकार. खिर्यस्य सोऽन्यथाखि। गुणश्च नलोपश्च गुणनलोपौ तौ विद्येते ययोस्तौ गुणनलोपिनौ। शशश्च ददश्च वादिश्च अन्यथाखिश्च गुणनलोपिनौ च ते। पश्चात् नञ्समास. तेषाम्। वधार्थश्चासौ राध चेति वधार्थराध। जॄश्च वमश्च भ्रमश्च त्रसश्च फणादिश्च वधार्थराध च ते आदिराध. तेषा तॄ इत्यस्य गुण-त्वात् फलभजोरन्यथाखित्वात् त्रपसयोगादित्वात् श्रथग्रथो. सयोगादित्वात् न लोपित्वाच्च दभेर्नलोपित्वादप्राप्तौ पृथगुक्ति। ननु उपदेशकाले आद्यन्तास्यहस. ये धातवस्तेषामेव ग्रहणात् गुणन्नलोपिनोरप्राप्तौ येन केनापि प्रकारेण आद्य-न्तास्यहसा ग्रहणात् गुणन्नलोपिवर्जन कथमिति चेन्न टुनदिसमृधि इत्यादीना-मुपदेशे आद्यन्तास्य हसत्वात् ननन्दतुरित्यादावपि खिलोपाद्युत्पत्ते। फणादिश्च फणति राजतिश्चैव भ्राजतिर्भ्राशतिस्तथा। भ्लाशति स्वमतिश्चैव स्यमतिश्च फणा-दय। अत्र फणादिपाठसामर्थ्यादाकारस्याप्येत्वम्। एव वधार्थराधोऽपि रेधतुरिति वद स्थैर्ये बर्व्यवकारादित्वान्निषेध:। दन्त्यादिस्तु वनसम्भक्तौ ववनतु एव वज गतौ ववजतु. वसिरस्तम्भे ववसतु.। अन्यथा खिगुणनलोपिनामिति एषा मध्ये चखदतुरित्युदाहृतम् अन्यत् यथास्थानमुदाहर्त्तव्यमित्यभिप्राय. ॥ ५७९ ॥

[ १२ ] अर्द्द पीडायाम्।

## ५८०। स्यान्तादादृदाद्यञ्जोः खेरान् ठ्यां वा त्वाञ्छेः।

स्यान्तादादि-ऋदादि—अञ्जी ६।, खे ६।, आन् ।१।, व्या ७, वा ।१।, तु ।१।, आञ्छे ६।।

**स्यान्तो योऽकारादिस्तस्य ऋकारादेरञ्जोतेश्च खेरान् स्यात् व्याम् आञ्छतेस्तु वा।**

**आनर्द।**

[ १३ ] इदि परमैश्वर्य्ये।

## ५८१। भूयोऽमजादेः।

भूय ।१।, अम् ।१।, अजादे ६।।

**अजादेरमि कृते पुनरम् स्यात्। ऐन्दत्।**

## ५८२। विजादि-दयायासत्यानेकाचोऽनृच्छूर्णोंठ्यामाम्।

विजादि—अनेकाच ५।, अनृच्छूर्णों ५।, ठ्या ७, आम् ।१।।

**इमन्नेजादेर्दय अय आस एभ्यस्त्यान्तादनेकाचश्च आम् स्यात् न तु ऋच्छूर्णोः।**

---

स्य सयोगोऽन्ते यस्य स स्यान्त। अत् अकार आदिर्यस्य सोऽदादि स्यन्तश्चासौ अदादिश्चेति स्यन्तादादिः। ऋत् आदिर्यस्य स ऋदादि। अत्र तद्गुणसंविज्ञानबहुव्रीहिणा अन्त्यावयववर्णान्तरसहितऋकारादिरेवोच्यते। तेन ऋगतावित्यादेर्न ग्रहणम्। पश्चात् स्यन्तादादिश्च अञ्चुश्चेति। अञ्चु इति सौवादिकस्य निर्देशात् क्रियादिकस्य आम इत्येव। अञ्जोः पृथक्ग्रहणादेव अदादिशब्देन स्यन्तादौ लब्धव्ये स्यान्तकरणं कथमिति चेन्न अञ्जातेरप्राप्तये अञ्चुग्रहणस्य सार्थकत्वे अदादिपदेन स्यान्तानामस्यान्तानाञ्च अकारादीना प्राप्तव्यत्वात्॥ ५८०॥

पूर्वकृतेन अमा धातौ. सन्धौ पश्चादनेन पुनरम्। अमो. सन्धौ पुनरम् करणस्य वैफल्यात्। ननु घौटीयौष्म् धीरमाऽजादेर्व्विश्च इत्यनेनैवेष्टसिद्धौ एतद्विधानन्तु आदिष्टस्याप्यजादे पुनरम् विधानार्थम्। तेन ब्रजेञ्जौ ऐज्यत बब्रुसर्हि औष्टामित्यादि सिद्धम्॥ ५८१॥

## ५८३। भ्वस्कृन्वामः।

भू अस् कृ ।१॥, अनु ।१।, आम' ५।।

भू अस् कृ एते आमन्तादनु प्रयुज्यन्ते। इन्दाम्बभूव इन्दामास इन्दाञ्चकार।

## ५८४। नेमसुम् कृ स्त्व भृ स्तु द्रु स्रु स्रोरेव ठ्रा:।

न ।१।, इम् ।१।, असुम् कृ स्रो ५।, एव ।१।, ठ्रा ६।।

एभ्यष्ठ्रा एव इम् न स्यात् अन्यस्मादनिमोऽपि स्यात्। इन्दाञ्चकर्थ।

---

ऋगुरु ऋश्चासौ इच् चेति विंच्, विंच् आदिर्यस्य स विंजादि विंजादिश्च टयश्च अयश्च आसश्च त्यश्च अनेकाच् चेति तस्मात्। ऋच्छ च ऊर्णुश्चेति ऋच्छूर्णु न ऋच्छूर्णु अनृच्छूर्णु तस्मात्। त्य प्रत्यय। यथा ऋतीयाञ्चक्रे पणायाञ्चक्रे कारयामास चिकीर्षामास इत्यादि। त्यान्तानामनेकाचत्वेनैव प्राप्तौ पृथक् ग्रहणं स्वामास इत्याद्यर्थम्॥ ५८२॥

भू अस् च कृश्चेति भ्वस्कृ। आम इति पञ्चम्यैव परत. प्रयोगे सिद्धे अनुग्रहणं क्रियाविशेषणोपसर्गव्यवधानेऽपि प्रयोगार्थम्। तेन त पातयाम्प्रथममास पपात पश्चाद्दितिरघु। उचाम् प्रचकुर्नगरस्य मार्गानिति भट्टि। पूर्वतोऽनुवृत्तावपि पुनरामो ग्रहणं सामान्याम् प्राप्त्यर्थम्। तेन दरिद्राकाश्चेत्यादि पञ्चाम् वाभीत्या-दभिर्विहितादामोऽपि भ्वादेरनुप्रयोग। एवमात्मनेपदिधातुभ्योऽस् भुवोरनुप्रयोगे कर्त्तरि कृतस्यात्मनेपदस्य स्थाने परस्मैपदादेशो वक्तव्य। ईहामास ईहाम्बभूव। भावकर्मणो कृतस्य तु न स्यात्। ईहामासे ईहाम्बभूवे चन्द्रो जनेन। व्यतीहारे कर्त्तरि कृतस्यापि न स्यात्। इहाम् व्यतिबभूवे क्षाव'। करोतेरनुप्रयोगे तु मूलधातोरेव परस्मैपदात्मनेपदे तिष्ठत'। इन्दाञ्चकार ईहाञ्चक्रे। ननु पूर्वसूत्रे ठ्रामिति विषयसप्तम्या ठ्रा उत्पत्ते प्रागेव आमि कृते भ्वादीनामनुप्रयोगे तदनु-सारिण्यैव विभक्ति स्यात्। किमात्मनेपदस्य परस्मैपदादेशेन इति चेत् न। कृञो-ऽनुप्रयोगे आत्मनेपदिधातो ईहाञ्चकार इति परस्मैपदापत्ते। एवं परस्मैपदि-धातो इन्दाञ्चक्रे इत्यात्मनेपदापत्तेश्च। इन्दामासेति अस्तेरनुप्रयोगविधानसामर्थ्यात् भूरादेशो न स्यात्॥ ५८३॥

[ १४ ] णिदि कुत्सायाम् ।

प्रणिन्दति प्रनिन्दति ।

[ १५ ] उख गतौ ।

५८५ । खिर्योरियुवर्णे ।

खे ६।, यी: ६।, इयुव् ।१।, अर्णे ७। ।

खेरिवर्णोवर्णयोः क्रमादियुवौ स्याताम् अर्णे परे । उवोख ।

अर्णे किम् ? ऊखतुः ।

[ १६ ] अन्चु गतिपूजनयोः ।

[५६८] नेदित् पूजार्थाञ्चोरिति अञ्चगात् । गतौ तु अच्यात्

[ १७ ] म्रुचु इर्गत्याम् ।

[५६५] ग्लासुलिदृद्युदिति ङो वा अम्रुचत् अम्रोचीत् ।

एव [ १८ ] म्लुचुग्रुचुग्लुचु ।

[ १९ ] आङ्कि आयामे ।

आनाङ्क आङ्क ।

---

नास्ति सुम् यस्यासौऽसुम् असुम् चासौ क्रश्चेति असुमक्र' असुमक्रश्च स्तुश्च द्रुश्च स्रुश्च श्रुश्च स्नुश्चेति तस्मात् । नैमिकाजादित्यत्र इवर्जनात् प्राप्तस्य इमो निषेधार्थमिह इग्रहणम् । अन्येषां सप्तानां एकाचत्वेन अनिमामपि इह ग्रहणं नियमार्थम् । ननु एवशब्दं विनापि नियमसम्भवादत्र एवशब्दो इर्थेति चेत् न । रञ्जो वि सुपीत्यत्र निमित्ते कार्य्यिणोरङो नियमात् यथा रङ्गभिन्नरेफस्य विसर्गो न स्यात् । तथात्रापि असुमक्रादेर्निमित्तात् कार्य्यसत्त्वायाम् थ्या एव इम् न स्यात । असुमक्रादेरनियमोऽपि थ्या अन्यत्र इमापत्तेः । ततश्च असुमक्रादिसम्बन्धिना एवशब्देन असुमक्रादिभिन्नादनियमोऽपि थ्या इम् स्यादेवेति बोध्यते इत्यत आह अन्यस्मादनिमोऽपि स्यादिति। यथा चकर्थ सस्तव ददव बभूव तुष्टुव दुद्रुव शुश्रुव सुस्रुव। असुमक्रजस्तु सस्वरिथ अन्यस्मादनिमोऽपि स्यादिति नियमेन जग्मिथ ददिथ पिश गतौ पिप्यिथ नीञ् निन्येथ तु लू तुतुविथ दम्भिथ । क्विचिन्नियमेन विभाषा न बाध्यते ववन्दिथ वव्दे ॥ ५८४ ॥

[ २० ] वज गतौ।

ववजतुः ववजिथ [ ५७९ ] वादित्वान्न एः।

[ २१ ] व्रज गतौ।

[ ५७४ ] व्रजवदेति ञिः अव्राजीत्।

[ २२ ] अज गतौ क्षेपणे च।

५८६। व्यजोऽरे वा त्वनवस्यघञल्क्यापि।

वि ।१।, अज' ६।, अरे ७।, वा ।१।, तु ।१।, अन-वसि ७।, अ-घञ् अल्-क्यपि ७।

अजतेररे विः स्यात्, अन त्ये वसे च वा स्यात्, न तु घञादौ।

५८७। नेमेकाजाद्युदृतोऽश्वि श्वि डी शी यु रु णु स्नु नु क्ष्णु वुः।

न ।१।, इम् ।१।, एकाच आत्-इ उत् ऋत ५।, अश्वि—वु ५।।

श्व्यादेरन्येभ्य एकाज्भ्य आदन्तेवर्णान्तोदन्त ऋदन्तेभ्य इम् न स्यात्।

अवैषीत् आजीत्। विवाय।

---

इश्च उश्च यु तस्य इय् च उव् च इयुव्। इयेष उवोख। अर्णो कि ईषतुः, ऊखतु ॥ ५८५ ॥

न रोऽररस्तस्मिन्नरे अनश्च वस् च तस्मिन्। घञ् च अल् च क्यप् चेति घञल्-क्यप् न घञल्क्यप् अघञल्क्यप् तस्मिन्। अल्प्रत्यय वस् प्रत्याहार.। यथा अरँ वाकै वायकः। अनटि वयनम् अजन वसे तृणि वेता अजिता घञादौ समाज समज' समज्या ॥५८६॥

एकोऽच् यस्य स एकाच्, आत् च इश्च उत् च ऋत् चेति आदुदृत् एकाच्चासौ आदुदृच्चेति एकाजाद्युदृत् तस्मात्। श्विश्च श्रिश्च डीश्च शीश्च युश्च रुश्च णुश्च स्नुश्च नुश्च क्ष्णुश्च वुश्च ते,न विद्यन्ते ते यत्र तत् अश्विश्रिडीशीयुरुणुस्नुनुक्ष्णुवु तस्मात्। यथा

## ५८८। श्रुध्वोरणवचीयुव्योर्व्यौ त्वस्यान्नैकाचोर्व्यो:।

श्रु ध्वी ६॥, अणचि ७।, इयुव् ।१।, यो ६।, व्यौ १॥, तु ।१।, अस्यात ५, नैकाची ६॥, व्यी ६॥।

**श्रोर्ध्वेश्च इवर्णोवर्णयोरणावचि इयुवौ स्तोऽनेकाचस्तु अस्यात् परयो: क्रमादुवर्णो वर्णयोर्वं यौ स्त:। विव्यतु विव्यु।**

---

पाता जेता नेता श्रोता कर्त्ता। एकाच. कि दरिद्रिता चिरयिता दिधिता ऊर्ण-विता जागरिता सामान्यविधानात् प्राप्तेम् एव निषेधकोऽय विशेषविधिना तु स्यादेव। यथा यमरमेति अपासिष्टा सुम्तुधीरिति अस्तावीत्। स्यस्थइन इति करिष्यति। श्वयादेस्तु श्वयिता श्रयिता डयिता शयिता यविता रविता रीता नविता नीता वेमुदितौ वा क्षविता चविता क्ष्णविता वरिता। कविकल्पद्रुम श्रड हञ विवर्जिता इत्युभयग्रहणज्ञापकादत्र सूर्वं युलमिश्रमी इत्यस्यैव वर्जने युजग बन्ध इत्यस्यादिम् न स्यात्। तेन बीता। यद्यपि स्वमते ह न इति इर्या-ग्विद्यानुक्तावपि एकाजुदन्ततया अनिमत्वे नेमसुमिति ठ्या नित्येमत्व ठ्या अन्यत्र वेमूदिदित्यनेन वेमत्व तथापीह पाठ केषाञ्चिन्मते द्वावेतौ नित्येमाविति ज्ञाप-नार्थम्। अतएव कविकल्पद्रुमे श्विश्रिडीशीयुरुनुक्षुक्ष्णु हड्हञ विवर्जिता इति नित्येमा मध्ये अनयो. पाठ। अवेजीदिति अजदौऽपि पूर्वेण वसे परे वि आर्द्रक एकाजिवर्णान्तत्वादनेन इर्मनिषेध॥ ५८७॥

श्रुश्च ध्वश्च श्रु ध्व तयो। नास्ति णर्यस्मिन् सोऽण् अणश्चासावच् चेति अणच् तस्मिन्। इय् च उव् च इयुव। इश्च उश्च यु तस्य व च य च व्यौ। न सोऽस्य. तस्मात्। न एको नैक। नैकोऽच् ययोस्तौ नैकाचौ तयोर्नैकाचोरिति श्रु ध्वो-रित्यस्य विशेषणम्। उश्च इश्च वी तयोर्व्यो। यौरित्येकवचनान्तस्य इयुव इत्यनेनैव यथासंख्यं न तु श्रु ध्वोरिति द्विवचनान्तेन श्रोरिवर्णस्य असम्भवात्। तेन अय नियम। अणावचि परे श्रोरुवर्णस्य उव् स्यात् धातोरिवर्णोवर्णयो क्रमादियुवौ स्त इति। एव व्योरिति द्विवचनान्तस्य श्रु ध्वोरित्यनेन च यथासंख्यम्। तेन अनेकाच श्रोरसंयोगात् परस्य उवर्णस्य वकार। अयितेत्यादौ गुणेन बाधितत्वादेव इयुवौ रप्राप्तौ अणाविति सुखार्थमिति काशीश्वर.। तद्वियम्। श्रु धूसम्बन्धीवर्णो वर्ण-

**५८६। ऋजट्टशच् पाठात्वतो नित्यानिम्तु-थपो वेमन्त्व्येऽदः।**

ऋज् ट्ट्श-अच्-पाठ-अत्वत ५।, नित्य-अनिम्तु ५।, थप ६।, वा ।१।, इम् ।१।, अन् ऋ व्येऽद. ५। ।

ऋजेर्ट्टशेरजन्तात् भ्वादिपाठेऽकारवतो नित्यमिम्रहित-त्वात् थप इम् वा स्यात्, न तु ऋ व्येञ अद एभ्यः। विव-यिथ विवेथ।

---

स्थानिकत्वादभ्यावनिमित्तकत्वाच्च विशेषेण अुध्वोरित्यनेन इडस्थानिकत्वादजभ्यास-निमित्तकत्वाच्च सामान्यस्य गर्घूङश्चेत्यस्य बाधितत्वात् अयिता इत्यादावपि इया-पत्ते। अत धोरिवर्णस्य विकृतस्यापि ग्रहण तेन आद्रियते इत्यादि सिद्धम् ॥५८८॥

अत् अन्त्यस्य अत्वान् पाठे दशविधगणपाठे अत्वान् पाठात्वान्। ऋजश्च ट्टशश्च अच्च पाठात्वाश्चेति तस्मात। नियमनिम् तु प्रत्ययो यस्मात् स नित्यानिम्ता तस्मात्। नित्यानिम्तुरिति अजन्तस्य पाठात्वतश्च विशेषणम्। ऋश्च व्येश्च अद चेति ऋव्येऽद न ऋव्येऽद अनृव्येऽद तस्मात्। यथा ससर्जिथ ससष्ठ ददर्शिथ दद्रष्ठ। अजन्तात् यथा पपिथ पपाथ चिचयिथ चिचेथ निनयिथ निनेथ जुहविथ जुहोथ। नित्यानिम्तु. किं शिश्रयिथ युयविथ पुपविथ ववरिथ तेरिथ। पाठात्वतो यथा डुपचष पाकि पेचिथ पपक्थ, वचौ वाचि उवचिथ उवक्थ व्यध्यौ ताडे विव्यधिथ विव्यद्ध, षदलृजौश विषादे सेदिथ ससत्थ। भन्जधौ मोटने बभञ्जिथ बभङ्क्थ। नित्यानिम्तु' किं पठ वाचि पेठिथ इत्यादि। न च अत्वतोग्रहणे-नैवेष्टसिद्धौ पाठात्वतो ग्रहण वृथेति वाच्य गृह्णातेर्यङि जौ कृते नरीनृत्यत इति रीरीशि यथा जरी गृह्यते इति स्यात्। तथात्वापि कृषादीना थपि वद्रीऽकि-दिति ऋकारस्य रेफेऽकारवत्वात् चकर्षिथ चकर्ष्ठ इत्याद्यनिष्टापत्ते.। ऋव्येऽद इयत्र ऋशब्दस्य ऋवर्णान्तवाचित्वेऽपि दीर्घऋदन्तानां वृ इत्यस्य च सेम् कृत्वात् प्रसङ्गाभावे ह्रस्वऋभिन्न ऋदन्तात् नेम्तस्थप इत्यनेन थप इम् निषेधे ऋस्क इति दर्यरेव नित्यानिम्त्वात् वेम्प्राप्तावनेन निषेधे नेमसृमक इति नियमाद्वसीरसे-वीमि भ्यास्थ सस्वस्वरिथ इति। व्येऽदोस्तु विव्ययिथ आदिथ॥ ५८६॥

[ २३ ] चि चये।

५९० । घीँऽजय्यरे ।

घँ १।, अच् ।१।, यि ७।, अरे ७। ।

अजन्तस्य घँः स्यादरे ये परे। चीयात्।

[ २४ ] कटे वर्षावरणयोः।

अकटीत् एदित्त्वान्न त्रि· [ ५७६ ]।

[ २५ ] गुपू रक्षणे।

५९१ । कम ऋतो गुपू धूप पण पनो ञिङीयङाया धुः।

कम ५।, ऋत ५।, गुपू-धूप पण पन ५।, ञिङ्-ईयङ्—आय १।॥, धु १।

कमो ञिङ् ऋतेरीयङ् गुपादेरायः स्यात् स्वार्थे, तदन्तश्च धुसञ्ज्ञः। गोपायति।

५९२ । वारे ।

वा ।१।, अरे ७। ।

एभ्य एते वा स्युररं विषये। अगोपायीत् अगोपीत् अगौप्सीत्। गोपायामास जुगोप।

एव [ २६ ] धूप तापे।

[ २७ ] तपौ सन्तापे।

[ ५५४ ] औदित्त्वान्नेम्, अताप्सीत्।

---

न रः अर. तस्मिन् यि इत्यस्य विशेषणम्। यथा चीयात्। शिव इवाचरति शिवायते एव हरीयते विष्णूयते। धोरन्तस्थितस्य प्रकृतेर्विकृतेरप्यचो दीर्घः स्यात् ह्वेञ ह्यात् टुओश्वि शूयात् इत्यादौ जौ कृतेऽपि दीर्घ। हविगतौ ह्वियात् डुकृञ क्रियात् इत्यादौ तु ऋद्रि शयक्ङीये इत्यत्र ह्रस्वान्तादेशसामर्थ्यात् न दीर्घः ॥५९०॥

क्रमः ऋत इति द्वयं प्रत्यस्यं कम्। गुपूश्च धूपश्च पणश्च पन् चेति तस्मात्।

[ २८ ] चमु अदने।

५९३। ष्ठिवुक्लमाचमोऽपि घँः।

ष्ठिवु क्लम आचम ६।, अपि ७।, घँ १।।

एषा घः स्यादपि। आचामति। आङः किं, चमति विचमति।

[ ५७६ ] मान्तत्वान्न त्रि.। अचमीत्।

[ २९ ] क्रमु पादविक्षेपे।

५९४। क्रम क्लम भ्रम भ्राश भ्लाश त्रस त्रुट लष यस संयसः श्यन् वा रे घे।

क्रम संयस ५।, श्यन्।१।, वा।१।, रे ७।, घे ७।।

एभ्यो घेऽर्थे श्यन् वा स्यात् रे परे। क्राम्यति।

---

ञिङ् च ईयङ् च आयश्च ते ञिङीञकारी वृद्ध्यर्थं ङकार आत्मनेपदार्थं। ईय-ङीङकार आत्मनेपदार्थोऽगुणार्थश्च। अर्थाविशेषेण विधानात् स्वार्थे सु। यथा कामयते ऋतीयते गोपायति गोपायते धूपायति धूपायते पणायति पणायते पनायति पनायते आयान्तत्वादुभयपद वक्ष्यति ॥५९१॥

विषयसप्तमीय तेन ध्यामेव स्निप्रभृति प्रत्यय. सम्भाव्यते इति टीविभक्त्युत्पत्ते. प्रागेव आदेशास्तती धातुसञ्ज्ञायां टीप्रभृति विभक्त्युत्पत्ति। अगोपायीदिति आयान्त-त्वेन धातुसञ्ज्ञाया धात्वन्तरत्वान्नित्यमिम्। पक्षे अगोपीत् अगौप्सीदिति ऊदित्वान्नेम्। अनिम्पक्षे वृद्धि.। गोपायामासेति प्रत्ययान्तत्वादाम्। एव गोपाय्यते गुप्यते गोपायति गोपययति इत्यादि ॥५९२॥

ष्ठीवति क्लामति आचामति ॥५९३॥

क्रमश्च क्लमश्च भ्रमश्च भ्राशश्च भ्लाशश्च त्रसश्च त्रुटश्च लषश्च यसश्च संयस् चेति तस्मात् क्राम्यति श्यनि परेऽपि दीर्घ. इति गोविन्दभट्टः। तन्मते। क्राम्यति अतएव पठन्ति च दृश्यते श्यनि दीर्घत्व दाक्षिणात्यवेदिभि'। तेन क्लाम्यति कौमारे चानित्यस्योपलक्षणादिति। क्लाम्यति शमादित्वात् दीर्घं वक्ष्यति भ्रम्यति भ्रमति भ्राश्यते भ्राशते भ्लाश्यते भ्लाशते भ्राशभ्लाशौ तालव्यान्तौ दन्त्यादौ च त्रसति त्रसति

**५९५। क्रमः पेऽपि घं:।**

क्रम' ६।, पे ७।, अपि ७।, घं १।।

क्रामति।

**५९६। स्नु-क्रमोऽमेऽरवस इम्।**

स्नु क्रम ५।, अमे ७।, अरवस ६।, इम् ।१।।

आभ्यां वमस्यारस्य इम् स्यान्न तु मे। अक्रमीत्।

[ ३० ] औ यमु उपरमे।

**५९७। स्था दान पा ज्ञा घ्रा ध्मा म्ना·र्त्ति दृश शत् सद्लमिष यम जनां तिष्ठ यच्छ पिब जा जिघ्र धम मनर्च्छं पश्य शीय सीद गच्छेच्छ यच्छ जाः शिति।**

स्था—जना ६।॥, तिष्ठ—जा' १।॥, शिति ७।।

एषामिते क्रमात् स्यु शिति परे। यच्छति।

---

त्रुव्यति त्रुटति पचे तुदादित्वात् श। लष्यति लषति यस्यति यसति अन्तस्थादि सयस्यति अन्यत्र प्रयस्यति। स्नन शित्वाद्रसञ्ज्ञाया ङिदपिद्र इति ङित्वे त्रुव्यती-त्यत्र न गुण नकारस्तु त्रुव्यन्तीत्यादौ अप्यनो नित्यमिति गुणार्थं ॥५९४॥

क्रामति। पे किं प्रक्रमते ॥५९५॥

स्नुक्रमोनेमसे इत्यनेनापीष्टसिद्धौ अमेऽरवस इति गौरव ज्ञापयति क्रमधातो रनात्मनेपदे अरवसमात्रस्य नित्यमविधानात् क्वचिदिमो विकल्पेऽपि नित्यमिम इति। तेनानुपसर्गस्य क्रमधातोर्वा गेरित्यात्मनेपदयोग्यत्वेमहत्वात् क्रमोनेम टण इति इमनिषेधे नित्यानिमृत्वात् प्राप्तव्य सृजदृशेति विकल्प बाधित्वा थपि चक्रमिथ इत्यत्र नित्यमिम्। अस्नावीत् अक्रमीत् स्नविष्यति क्रमिष्यति स्नवितव्य क्रमितव्य मे तु स्नोष्यते क्रंस्यते पचिक्रंसते सुस्नुप्रतीति तु, नेमुगुहृयहेति इम निषेधात् क्रम परस्य भावकर्म्मणो' कर्तस्य आत्मनेपदस्य इम् स्यादिति दुर्गसिंह-क्रमदीश्वरौ। यथा सनन्तस्य चिक्रमिष्यते ॥५९६॥

क्रमो यथा स्था तिष्ठति दान यच्छति दा इत्युक्तौ दासञ्ज्ञाग्रहणेन डुदाञ्वि

## ५९८। यम-रम-नमातः पे सेरिम् सन् चैषाम्।

यम—आत ५।, पे ७।, से ६।, इम् ।१।, सन् ।१।, च ।१।, एषाम् ६॥।

यमादेरादन्ताच्च सेरिम् स्यात् पे तेषाञ्च सन्। अयंसीत् अयंसिष्टाम्। [५८८] सृजदृशेति वेम्। येमिथ ययन्थ।

एवं [३१] णमौ शब्दनत्योः।

[३२] हय गतौ।

अहयीत् [५७६] यान्तत्वान्न त्रिः।

[३३] दल मि भेदे।

[५७४] व्रजवदेति त्रिः। अदालीत्।

[३४] ञि फला विसरणे।

फेलतुः फेलुः फेलिथ।

[३५] त्सर छद्मगतौ।

अत्सारीत्।

[३६] ष्ठिवु निरसने।

[५९३] ष्ठिवुक्लमेति घंः। ष्ठीवति।

डुधाञ्जलि इत्येतयोः शपो लुक् करणात् अन्येषाञ्च असम्भवात् दान इत्यत्र नकारः सुखार्थ इति काशीश्वरः। वस्तुतस्तु डुदाञ्जलि दाने दाललूनावित्याभ्यां शपो लुकि कृतेऽपि शतृशानयोर्यच्छादेशनिवृत्त्यर्थः। पा पाने पिबति दानसाहचर्य्यात् पा इत्यपि भौवादिक एव। अन्यथा पाल रक्षणे इत्यस्य शतृशानयोः पिबादेशापत्तेः। ज्ञा जानाति घ्रा जिघ्रति ध्मा धमति म्ना मनति अर्त्तिरिति भौवादिकजुहोत्यादीर्ग्रहणम्। तेन ऋ प्रापे ऋच्छति। ऋर्लिंगत्यामित्यस्य तु तिबादौ शपो लुक् करणात् शतृशानयोर्ऋच्छादेशे इयृच्छन् इयृच्छान.। दृश पश्यति। शदॢ जौ शाते तालव्यादि शीयते। षदॢ जौ शविषादे शरणे गतौ सीदति। गम गच्छति इषु श वाञ्छे इच्छति। भौवादिकयोर्गमयमयोर्मध्यवर्त्तित्वात् इषधातोः अकारमात्रावशिष्टे यिति इच्छादेशः तेन इषगाभीक्ष्ण्ये इष्णाति इष्य सर्पणे इष्यति। यम यच्छति।

## ५९९। ष्ठिवजाद्योः खेष्ठक्षोस्त वा।

ष्ठि व अजाद्यो. ६॥, खे ६।, ठक्षोः ६॥, त ।१।, वा ।१।।

तिष्ठेव टिष्ठेव ष्ठीव्यात्।

[ ३७ ] जि जये।

## ६००। जेर्गिः सन्-ठ्योः।

जे ६।, गि १।, सन् ठ्यो. ७॥।

जिगाय।

[ ३८ ] रक्ष पालने।

प्रनिरक्षति। षान्तत्वान्न [ ५४९ ] णः।

[ ३९ ] अक्षू व्याप्तौ।

## ६०१। वाक्ष-क्रशार्थतक्षः श्नुर्वे रे।

वा ।१।, अक्ष क्रशार्थ तक्ष ५।, श्नु १।, वे ७।, रे ७।।

आख्या रे परे श्नुः स्याद्वा घेऽर्थे। अक्ष्णोति अक्षति। [ ५८८ ] श्नुभ्वोरित्युव अक्ष्णुवन्ति। [ ५७३ ] उदित्त्वादिम् वा आक्षीत्। [ २१३ ] स्वादेः सो लोपः।

---

जनीत्यडजनो जायते। समादिसाहचर्य्यात् रे परे जायमानो य. ञित् तस्मिन्नेव जनो जादेश तेन जन्मलिच इति जीहीत्यादिकस्य शदश्यानयोर्जादेशाभावे जञत व्यतिजज्ञान इति। ननु रे इत्यनेनैवेष्टसिद्धौ श्नतीति कथमिति चेत् न स्वलिंगत्या-मित्यस्य इयर्त्तीत्यादौ श्नपो लुकि तिबादौ स्वच्छादेशापत्तं ॥५९७॥

यथा अयसीत् अयसिष्टा व्यरसीत् अनमीत् अयासीत् गै अगासीत् ॥५९८॥

ष्ठिव् च अजादिश्च ष्ठिवजादी तयो। ठ च क्ष च ठक्षौ तयो. ष्ठिवधातो खेष्ठकारस्य अजादिधातो. खेस्क्षकारस्य च तकार स्याद्वा। यथा तिष्ठेव टिष्ठेव उक्षीश्वन्ससमापने उतिक्षिषति। उचिक्षिषति ष्ठीव्यादिति व्यंनचतयोति दीर्घ ॥५९९॥

जिगीषति जिगाय। जेस्तुबन्वीसिन्नन्तीति वक्तव्यम्। जयति रघुवंशतिलक. ॥

## ६०२ । षढोः कः सि ।

ष ढो: ६॥, क १।, सि ७। ।

षस्य ढस्य च कः स्यात् सकारे परे । चाक्षीत् चाक्षिष्टाम्
चाष्टाम्, चाक्षिषुः चाक्षु: ।

एव [ ४० ] तत्क्रकार्ष्ये ।

कशार्थं किं, निर्भर्त्सने सन्तचति ।

[ ४१ ] णिक्ष चुम्बने ।

[ ४४८ ] प्रणिक्षति प्रनिक्षति ।

[ ४२ ] कषौ विलेखने ।

## ६०३ । कृष मृश स्पृश तृप दृप सृप सिष्यां वा ।

कृष—सृप ५।, सि १।, ष्या ७।, वा ।१। ।

एभ्यः सिर्वा स्यात् ष्याम् ।

---

जयन्ति यमुनाकूले रहः केलय. । कुपस्थाने तातङ् दृश्यते भावगम्यमना कोऽपि जयताद्वागमोचर इति हलायुध ॥६००॥

कशार्थश्चासौ तक्ष चेति कशार्थतक्ष । अतस्य कशार्थतक्ष चेति तस्मात् तक्ष्णोति तक्षति काष्ठ तक्षा तनूकरोति इत्यर्थ । सन्तक्षति चौर साधुर्निर्भर्त्सयतीत्यर्थ । धातूनामनेकार्थत्वात् सन्तक्षतिरिह निर्भर्त्सनार्थ ॥६०१॥

आचौदिति अनिम्पक्षेऽपि ष्यां सिः रुदाद्यस्तीति ईम् स्यादे सीलोप इति कलोपे अनेन ग्रस्य के क्षिलादिति ष. । आष्टामिति अनिम्पक्षे झस्त्वादिति सिलोपे संयोगादे कस्य लोपे ष्टुभिरिति तस्य टः । आक्षुरिति अनिम्पक्षे सेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् अन् उस् । प्रणिक्षतीति वालननिसेत्यादिना णत्व वा ॥६०२॥

कषौ त्वाकृषि कृषको चेलुभयं मृशशौ मृशि स्पृशशौ स्पृशि जिलतृप्यू प्रीणने दृप्यूहर्षगर्वयोः सृसृपौ गत्याम् इत्येतेभ्यः सिर्वा स्यात् ष्याम् ऋकारस्य इद्धौ अकार्षीत् सकिं अक्राक्षत् ॥६०३॥

६०४। वृद्रोऽकिज्झसे ह्रशसृजोस्तु नित्यम्।

वा।१।, ऋत्।१।, र १।, अकित् झसि ७।, ह्रश सृजी ६॥, तु।१।, नित्यम् १।१

क्षुधादीनाम् ऋकारो रः स्याद्वा अकिज्झसे ह्रशसृजोस्तु नित्यम्। अक्राचीत्, अकार्चीत्।

६०५। ह्रशषोऽनिमिजुङोऽह्रशः सक् च्यां श्लिषस्त्वालिङ्गने।

ह-श ष ५।, अनिम् इजुङ ५।, अ-ह्रश ५।, सक्।१।, च्या ७।, श्लिष' ५।, तु।१।, आलिङ्गने ७।।

अनिमिजुङो ह श षान्तात् ह्रशवर्जात् सक् स्यात् च्यां, श्लिषतेस्त्वालिङ्गनेऽर्थे। अक्रुक्षत्।

[४३] रुष हिंसायाम्।

६०६। वेम् सह लुभ ष्ट स्तु शुच वस त्वश रुष रिषिषो स्तोऽरस्य।

वा।१।, इम्।१।, सह—इषी ५।, त ६।, अरस्य ६।।

एभ्यस्तस्यारस्य इम् स्याद्वा। रोषिता रोष्टा।

एव [४४] रिष हिंसायाम्।

---

वाशब्दस्य व्यवस्थावाचित्वात् सनि सृजदृशोर्ऋकारस्य रेफो न स्यादिति बोध्यम्। यथा दिदृक्षते सिसृक्षति। वा ग्रहणमुत्तरत्र निवृत्त्यर्थम्॥ ६०४॥

हश्च-तालव्य-शश्च मूर्द्धन्यषश्च चेति तस्मात्। नास्ति इम् यस्मात् सोऽनिम् इच् उङ् यस्य स इजुङ् अनिम् चासौ इजुङ् चेति अनिमिजुङ् तस्मात्। अनिमिजुङ इति ह्रशषो विशेषणम्। नास्ति ह्रम् यत्र सोऽह्रश् तस्मात्। अनिमिजुङ-हान्तात्तालव्यशान्तान्मूर्द्धन्यषान्ताच्च ह्रश्वर्जात् सक् स्यात् च्याम्। श्लिष्यतेस्तु आलिङ्गनेऽर्थे इत्यर्थ। यथा मिहौ सिचि अमिक्षत् रुहौ अरुक्षत् दिशशौज अदिक्षत् क्रुशशौ अक्रुक्षत् स्पृशशौ अस्पृक्षत् लिषौज भासि अलिक्षत् दुर्दुषौ अदुक्षत् क्रुषौ अक्रुक्षत्। अत्र शस् प्रत्याहारो लिपिकरप्रमादकृत अनिमइजुङ् इत्यसान्तधातोरसम्भवात् आलिङ्गनन्तु प्रीतिपूर्वकवक्षोद्वयसंयोग.। अश्लिक्षत् युवती युवा॥६०५॥

[ ४५ ] उष दाहे।

## ६०७। दरिद्राकासकाशजागुषो वाम् ठ्याम्।

दरिद्रा—उष ५।, वा।१।, आम्।१।, ठ्याम् ७।

एभ्य आम् वा स्यात् ठ्याम्।

[ ५८३ ] ब्वस् कन्वाम इति ओषाम्बभूव उवोष।

[ ४६ ] ग्रथ प्लुतगतौ।

ग्रग्राथ ग्रग्रथतुः ग्रग्रथिथ।

[ ४७ ] मिह्रौ सेचने।

[ ६०५ ] ह्मषोऽनिमिति सक्। ( १७५ ) ढोढ़ोभी अमिक्षत्।

[ ७७ ] ढोढि घंस्वानुरिति, मेढा।

[ ४८ ] दहौ भस्मीकरणे।

[१७६] दादेघं.। [१७७] क्रमान्तस्येति दस्य धः। अधाक्षीत्।

[ ४९ ] चह कल्कने।

अचहीत् [ ५७६ ] हान्तत्वान्न ञ्रिः।

[ ५० ] श्रुच शोके।

[ ६०६ ] शोचिता शोक्ता।

यथा सहिता सोढा लोभिता लोब्धा भरिता भर्त्ता सविता सोता शोचिता शोक्ता वसलडस्मृतौ वसिता वस्ता तुलक्ष्च्यादौ तविता तोता अशग भोजने अशिता अष्टा रोषिता रोष्टा इषु शवाञ्छे एषिता एष्टा इषु गृहणात् इषुगाभीक्ष्णे इत्यसर्पयं इत्यतयोर्नित्यमेव॥ ६०६॥

यथा दरिद्रामास ददरिद्र काश दुतौ काशाञ्चक्रे चकाशे काश्रड कुशब्दे काशामास चकाशे जागरामास जजागार ओषाम्बभूव उवोष। मेढेति मिह्रौ सेचने अन्तरङ्गतरत्वादादौ गुणे ढोढीभाविति हस्य ढे ढभात्तथोरिति तकारस्य धे ष्टुभिरिति धस्य ढे ढोढ्रीति ढस्य लोपे पूर्वङ्गस्याभावान्न दीर्घः॥ ६०७॥

[ ५१ ] ग्लै हर्षक्षये ।

## ६०८ । एचोऽशित्याः ।

एच ६।, अशिति ७।, आ १। ।

धोरेच आः स्यादशिति । [ ५९८ ] यमरमेतोम् सनौ । अग्लासीत् ।

## ६०९ । णबातो डौः ।

णप् ।१।, आत ५।, डौ १। ।

आदन्तात् परो णप् डौः स्यात् । जग्लौ ।

## ६१० । उस्येचीम्यगखराचि लोपः ।

उसि ७।, एचि ७।, इमि ७।, अखराचि ७।, लोप १। ।

उसि एचि इमि अगोररस्याचि धोरातो लोपः स्यात् । जग्लतुः जग्लुः । जग्लिथ जग्लाथ ।

## ६११ । स्यादेर्ङस्यो वाव्यणौ ।

स्यादे. ६।, ङे ।१।, अस्य ६।, वा ।१।, व्यणौ ७। ।

स्यादेरादन्तस्य स्थावर्जस्य ङे स्याद्वा व्यणौ । ग्लेयात् ग्लायात् ।

---

अशितीति विषयसप्तमी तेनादौ आ स्यात् । तत प्रत्ययोत्पत्ति । अतएव साम गायतीति सामगः इत्यत्र आदौ एचोऽशित्या तत आदन्तात् हनजनाद्गमादे-रिति ड । अरे इत्यनेनैवेष्टसिद्धौ अशितीति कथम् इति चेन्न ग्लै क्लमे इत्यस्य यङ-लुकि व्या जाग्लायात् इत्यादौ ऐकारस्य आकारानुपपत्ते ॥ ६०८ ॥

ददरिद्रौ इति सिद्ध्यर्थं डौकरणमिति रामतर्कवागीशः । इदमतीव हास्यास्पदं बहुव्याकरणविरुद्धत्वात् ग्रन्थकारेण दरिद्रे आलोप इति सूत्रं कृत्वा णपि ददरिद्र इति स्वयमुदाहृतत्वाच्च । वस्तुतस्तु डौकरणं क्वचिदेकपदेऽपि सन्धिर्न स्यादिति सूचनार्थं तेन चालनी तितउः पुमानित्यमरः ॥ ६०९ ॥

नास्ति गुर्यस्मिन् सोऽगुः अगुश्चासावरश्चेति अखरः तस्माच् अखराच् तस्मिन् । यथा अप्सु. गार्लिस्तुतौ व्यतिजगे जग्लिथ अन्तर्द्धि. अगो. किं स्थानम् अरस्य किं भान्ति अचि किं स्यात. ॥ ६१० ॥

[ ५२ ] गै शब्दे ।

**६१२ । दा मा गै हाक पिव सो स्थोऽरहसि त्वयपि ङी ।**

दा—स्थ ६।, अरहसि ७।, तु ।१।, अयपि ७।, ङी ।१।।

एषां व्यणौ ङे स्यात् अरहसि त्वणौ यप् वर्जे ङी स्यात् । गेयात् ।

[ ५३ ध्यै संहतौ ध्वनौ ।

ध्यायति ।

[ ५४ ] दैप शोधने ।

[ ५३४ ] पित्वान्न दासञ्ज्ञा । अदासीत् । दायात् ।

[ ५५ ] धेट पाने ।

[ २५७ ] ट ईवर्थः ।

---

न च परसूत्रे स्थाग्रहणेनैव इह तस्याप्राप्तौ स्थावर्जनं कथमिति वाच्यम् । परसूत्रे स्थाग्रहणस्य अरहसि त्वयपिङीति शेषरीतिसम्बन्धेनैव सार्थकत्वे सयोगाद्यादन्तत्वेन स्थाधातोरनेन व्यणौ ङे विकल्पापत्तेः । ध्येयात् ध्यायात् प्रेयात् प्रायात् स्येयात् स्नायात् ॥ ६११ ॥

समस्तस्यासमस्तेन नित्याकाङ्क्षेण सङ्गतिरिति न्यायादणावित्यस्य ङीसम्बन्धस्यापि अरहसि इत्यनेन सम्बन्धः । अथवा यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् यप् वर्जनेनैव अणाविति लभ्यते दा इति सञ्ज्ञा देयात धेयात् दीयते धीयते दैप शोधने इत्यस्य दायात् दायते मास्वरूप तेन मालमाने मेयात् मीयते माङलिशब्दे माङयच मेङ प्रतिदाने एषां मीयते । गेयात् गीयते ह्येयात् हीयते हाकग्रहणात् हाङलि हायते पेयात् पीयते पिवग्रहणात पाल पै इत्येतयो: पायात् पायते सो इति सोय नाशे । मेयात् मीयते स्थेयात् स्थीयते । यपि तु प्रदाय प्रमाय इत्यादि । अत्र अयप्रहसि तु ङी इति कृतेऽभीष्टसिद्धौ अरहसि त्वयपीङीति कृतं तस्य क्वचिन्नित्यत्वज्ञापनार्थं तेन हानिरित्यत्र न ङी । ट ईवर्थः इति । तेन स्तनन्धयीत्यादि ॥ ६१२ ॥

## ६१३। ञि श्रि स्रु द्रु कमोऽङ् पे स्यां श्वि धेट ध्वन्येल्यर्ह्यूनेस्तु वा।

ञि—कम ५।, अङ् ।१।, पे ७।, ट्या ७।, श्वि धेट ध्वनि एलि अर्हि-ऊने' ५।, तु ।१।, वा ।१।।

णयन्तादिभ्यश्चामङ् स्यात् पेऽर्थे श्वयादेस्तु वा। (५५८) श्वुर्धिश्वण्डीति, अदधत्।

## ६१४। घेशाच्छासाध्नः सेः पे लुग्वा।

घे—घ्न ५।, से' ६।, पे ७।, लुक् ।१।, वा ।१।

अधात् अधासीत्।

[ ५६ ] पा पाने।

[५८७] स्थादानेति पिब। पिबति। [ ५५२ ] भूस्था पिबेति सेर्लुक्। अपात् पेयात्।

[ ५७ ] घ्रा गन्धोपादाने।

जिघ्रति। अघ्रात् अघ्रासीत्।

[ ५८ ] ध्मा शब्दाग्निसंयोगयोः।

धमति। अध्मासीत्।

[ ५९ ] ष्ठा गतिनिवृत्तौ।

तिष्ठति। न्यष्ठात्। नितष्ठौ। स्थेयात्।

[ ६० ] म्ना अभ्यासे।

मनति।

[ ६१ ] दा न दाने।

प्रणियच्छति। प्रण्यदात्। देयात्।

ञिश्च श्रिश्च स्रुश्च द्रुश्च कम. चेति तस्मात्। श्विश्च धेटश्च ध्वनिश्च एलिश्च अर्हिश्च ऊनिश्चेति तस्मात्। यथा अचीकमत् अशिश्रियत् असुस्रुवत् इत्यादि। अदुद्रुवत्

[ ६२ ] ह्वृ कौटिल्ये ।

**६१५ । स्याद्यर्त्यृतो णुर्यङ्यक् ठौढाणौ, स्कुस्तु ठाम् ।**

स्यादि-अर्त्ति-ऋत ६।, णु १।, यङ्-यक्-ठौढणौ ७, स्कु. ६।, तु ।१। ठाम् ७।

**स्यादेरर्त्तेर्ऋकारस्य णु स्यात् यङि यकि ठौढयोरणौ च, स्कुस्तु ठ्यामेव । जह्वरतुः ।**

**६१६ । नेम्ऋतस्थपोऽवृस्कुः ।**

न ।१।, इम् ।१।, ऋत ५।, थप ६।, अ वृ ऋ स्कु ५। ।

**वृ ऋ स्कु वर्जात् ऋकारान्तात् थप इम् न स्यात् । जह्वर्थ ।**

अचकमत् अशिश्वियत् श्वयीत् व्रजवदेत्यत्र श्विश्वि वर्जनात् न त्रि । अदधत् अधासीत् । ध्वनिरिति सि ध्वन रवे इत्यस्य घटादिपचे कृतङ्स्वस्य ध्वनत् क नु शब्दे इत्यदन्तस्य च ग्रहणम् । अदिध्वनत् अध्वनयीत् । इल ऐलयीत् ऐलिलत् अर्द आर्दयीत् आर्दिदत् ऊनेरित्यदन्तचुरादि औनिनत् औनयीत् ॥ ६१३ ॥

वेट पाने शोय निशाने छोय लूनौ सीय नाशे घ्रा गन्धग्रहणे एभ्य सेर्लुक् स्याद्वा दरणौ नङ् । अधात् अधासीत् अशात् अशासीत् अच्छात् अच्छासीत् असात् असासीत् अघ्रात् अघ्रासीत् । पिबतीति पिबादेशस्य अदन्तत्वात् न णु लोपोऽतो ऽन्त्यकारलोपः । न्यङ्गादिति भूस्था पिबेति सिलुक् गीक. सुस्तुभेत्यत्र अस्यपीति षत्वम । नितष्ठाविति दगस्थादेरिति खिव्यवधानेऽपि षत्वम् ॥ ६१४ ॥

स्यादिश्च अर्तिश्च स्याद्यर्त्तौ तयोर्ऋत् स्याद्यर्त्यृत् तस्य । नास्ति णुर्यस्मिन् सोऽणु ठौढयोरणू ठौढणौ । यङ् च यक् च ठौढणुश्चेति तस्मिन् । अत्र कार्णारीति ठासाहचर्यात् कित्ठौढौषमित्यनेन कित्सञ्ज्ञस्य ढौपरस्मैपदस्यैव ग्रहणम् । तेन कॄनमृताविषयस्य स्याद्यृधृदुरिति वेमत्वे कृषीष्ट इत्यादौ इगुङ्- संढौति आत्मनेपदस्य कित्त्वेऽपि अनेन गुणो न स्यात् स्कुरिति ससुम्कञ इत्यर्थ. । यथा सास्मर्य्यते स्मर्य्यते सस्मरतु. स्मर्य्यात् । अर्त्तस्तु अराय्यते अर्य्यते आरतुः अर्य्यात् । स्कुन्तु सञ्चस्करिव । अत्र अर्त्तेः साहचर्य्यात् स्यादेरिति ऋदन्तस्यैव ग्रहणम् । तेन स्वृशब्दे परीस्वृस्स्यते स्वृस्यते पस्वृतु, स्वृस्यात् एषु न गुणः ॥६१५॥

## ६१७। स्यस्यर्द्धनः।

स्यस्य ६।, ऋत् हन ५।।

ऋदन्त हन्तिभ्यां स्यस्य इम् स्यात्। ह्वरिष्यति।

[६३] स्वृ ऊ शब्दोपतापयोः।

[५७२] वेमूदितोम् वा अस्वारीत् अस्वार्षीत् सस्वरिथ सस्वर्थ।

[६४] ह्व गतौ।

## ६१८। वक्त्यस्य ख्या लिप सिच ह्वो ङो घे ख्यां स्वस्तु वा लिव्भ्यस्तु मे।

वक्ति-ह्व ५।, ङ. १।, घे ७, ख्या ७, स्व ५।, तु ।१।, वा ।१।, लिव्भ्य ५॥, तु ।१।, मे ७।।

वक्त्यादेर्घेऽर्थे ङः स्यात् ख्यां, स्वृऋभ्यान्तु वा लिपादेस्तु मे वा स्यात्।

---

ह्वश्च ऋश्च स्वश्च ते, न विद्यन्ते ह्वऋस्वारी यत्र सोऽह्वस्वः तस्मात्। यथा अष्ट-सेके जगर्थ जघर्थ आदेस्तु ववरिथ नेमसुमित्यादिना वधाती छीमावस्य इम् निषेधे-ऽपि अत ह्वग्रहणात् थप इम्। ववरिथ सञ्चस्करिथ वेमूदिदित्यत स्वरग्रहणज्ञाप-कात् स्वृऊशब्दोपतापयोरित्यस्य सस्वरिथ सस्वर्थ इति स्यादेव॥ ६१६॥

करोतीत्यादीना नेमिकाजिति निषेधादप्राप्तौ स्वृऊशब्दोपतापयोरित्यस्य वेमो-ऽपि नित्यार्थं विधानम्। करिष्यति स्वरिष्यति हनिष्यति॥ ६१७॥

वक्तिरिति वच्‌ौ वाचि। अस इति अस्‌ु इर् क्षेपे। वक्तिश्च असश्च ख्याश्च लिपश्च सिचश्च ह्वाश्च तस्मात्। स्वश्च ऋश्च स तस्मात्। लिव्भ्य इति बहुवचनं गणार्थम्। तेन लिपसिचह्वाभ्य इत्यर्थः। यथा अवोचत् आस्थत् अस्यते परस्मैपदे ङ. सिद्ध एव इर्ह्वोपन्यासस्तु आत्मनेपदप्राप्त्यर्थं। तेन गीर्वास्योद्धोढे चेत्यात्मनेपदे निरास्थत आख्यत् अलिपत् असिचत् अह्वत् असरत् आरत् इर्भ्योर्गुणरिति गु पक्षे असार्षीत् आर्षीत् लिपादेस्तु अलिपत अलिप्त असिचत असिक्त अह्वत अह्वास्त॥ ६१८॥

## ६१९। इश्रोर्णुः।

इश्री ६॥, णु १।।

इश्रेः ऋवर्णान्तस्य च णुः स्यात् ङे। असरत् असार्षीत्।

## ६२०। ऋद्रिः शयक्ढीपे।

ऋत् ।१।, रि १।, श-यक्-ढी-पे ७।।

स्रियात्।

[ ६५ ] ऋ गतौ।

ऋच्छति। आरत् आर्षीत्। आर, आरतुः, आरिथ। अर्य्यात्।

[ ६६ ] श्रु श्रवणे।

## ६२१। श्रोः शृर्घे रे जिश्च।

श्री ५।, श्र १।, घे ७।, रे ७।, जि १।, च ।१।।

श्रुवो घेऽर्थे श्रु स्यात् रे, श्नुवश्च जिः। शृणोति शृणुतः शृण्वन्ति।

## ६२२। नूपोऽस्यस्योल्लोपो व्मि वा।

नूप ६।, अस्यस्य ६।, उल्लोप १।, व्मि ७।, वा ।१।।

अस्यस्य नो रूपस्य उकारस्य वा लोपः स्यात् वमयोः परयोः। शृण्वः शृणुवः शृण्मः शृणुमः।

[ ५४७ ] ङेर्लोपोऽस्येति, शृणु शुश्रुव।

असर्षत् आरत् अजरत् ॥ ६१९ ॥

श्रश्च यक् च ढीपश्च तस्मिन्। आद्रियते क्रियते क्रियात्। आरतुरिति स्यादात्त्व्ं त इति णः। आरिथेति स्वजदशैत्यत्र ऋवर्जनात् न वेम्। अर्य्यादिति स्यादात्त्वृत इति णः ॥ ६२० ॥

शृण्वन्तीति धुर्णं इति णत्व शुश्रोरिति व ॥ ६२१ ॥

नुश्च उप् चेति तस्य। न स्योऽस्यः तस्य। उत लोपः उल्लोपः। व च म च व्म तस्मिन् शृण्वः शृणुवः शृण्मः शृणुमः तन्वः तनुवः तन्मः तनुमः शृणोमि तर्ना-मीत्यादौ लोपस्वरादेशयो स्वरादेशविधिर्बलवानिति न्यायात् गुण एव। संयुक्त-नुपोस्तु आप्नुवः आप्नुमः इणदुञ भवे नीप्युञोरुवेति गुणे तर्णुवः तर्णुमः शुश्रुवेति नेमसृमिति नियमात् न इम् ॥ ६२२ ॥

[ ६७ ] सु गतौ।

## ६२३। सुस्तुधोः सेरिम् पे।

सु स्तु धो' ५।, सें ६।, इम् ।१।, पे ७।।

असावीत्। सुषविथ सुषुविव। सविता सोता।

[ ६८ ] स्रु गतौ।

[ ६१३ ] ञिश्रीत्यङ्। असुस्रुवत्। सुस्रोथ सुस्रुव।

[ ६९ ] दु गतौ।

अदावीत्, अदौषीत् दुदुविव।

[ ७० ] द्रु गतौ।

अदुद्रुवत्। दुद्रुव।

[ ७१ ] गम्लृ गतौ।

गच्छति [ ५६५ ] लिदित्त्वात् ङः, अगमत्। जगाम।

(२३०) हनगमेत्युङ्लोपः, जग्मतुः जग्मु'। जगमिथ जगन्थ।

## ६२४। गमोऽमे स इम् मार्हात्तु वा।

गम ५।, अमे ७।, स ६।, इम् ।१।, मार्हात् ५।, तु ।१।, वा ।१।।

**गमः परस्य सस्य इम् स्यात् न तु मे, मयोग्यात्तु वा। गमिष्यति।**

---

वेमूदित्यनेन वेमत्वे नित्यार्थं सुग्रहणम्। एकाजुदन्तत्वेन निषेधे स्तु धोर्ग्रहणम्। असावीत् अस्तावीत् अधावीत् पे किम्? असोष्ट असविष्ट अस्तोष्ट अधोषाता कृदुसुनोस्त्वथ्या इत्युक्ते सुषुविव सुषविथ उभयत्र नित्येम् सोता सविता इति वेम्। श्रुश्रोथेति नेमसुमिति नियमेन सृजदृशेत्यस्य बाधितत्वात् नेम्। कृदुसुनोस्त्वथ्या इत्युक्ते अदावीत् अदौषीत् दुदुविव दुद्रुव इति नेमसुमिति नियमात् नेम्। जगमिथ जगन्थेति सृजदृशेति वेम्॥ ६२३॥

गमिष्यति जिगमिषति जिगमिषु' मे तु गंस्यते ग्रामस्तेन। मम् आत्मनेपद-मर्हतीति मार्हं'। समो गमृच्छेत्यादिना आत्मनेपदविधानात् सञ्जिगमिष' सञ्जिगंसु। मार्हात् सेप वा इत्येके सङ्गंस्यते सङ्गमिष्यति अद्यपदिति लृदित्त्वात् ङः। क्षमम्येति सौ वद्रोऽकिदिति वृद्धौ वा असाम्सीत् असासीत्॥ ६२४॥

[ ७२ ] स्वृ गतौ ।

असाप्सीत् असार्प्सीत् असृपत् ।

[ ७३ ] स्कन्दिरी गति-शोषणयोः ।

६२५ । विस्कभ्ना-निर्व-वि-सु-निर्दुः स्वपः सः षो, निनिर्वि स्फुर स्फुल परिविस्कन्दाऽ-प्राणि-घ-निपरिनिर्व्यभ्यनु-स्यन्दस्तु वा ।

विस्कभ्ना—स्वप ६।, सः १।, षः १।, नि निर्-स्यन्द ६।, तु ।१।, वा ।१। ।

विस्कभ्नातेर्व-वर्ज-व्यादिपूर्वस्य स्वपश्च सः षः स्यात् न्यादिपूर्वं स्फुर-स्फुलोः परि-वि-स्कन्दतेः अप्राणिघ न्यादिपूर्वस्य स्यन्देश्च स्वाहा । परिष्कन्दति परिस्कन्दति ।

[ ७४ ] तॄ प्लवन तरणयोः ।

६२६ । ऋतो णुः कित् ठ्याम् ।

ऋत ६।, णः १।, कित्-ठ्याम् ७। ।

तेरतुः ।

---

विस्कभ्ना विश्च सुश्च निर् च दुर् च तेभ्यः स्वप् निर्गतो वो यस्य स निर्व निर्वश्चासौ विसुनिर्दु स्वप् चेति निर्वविसुनिर्दु स्वप्विस्कभ्नाश्च निर्वविसुनिर्दु स्वप् च तयोः । निश्च निर् च विश्च ते तेभ्यः स्फुरस्फुलौ निनिर्विस्फुरस्फुलौ परि-विभ्यां स्कन्द परिविस्कन्दः निश्च परिश्च निर् च विश्च अभिश्च अनुश्च ते तेभ्यः स्यन्द निपरिनिर्व्यभ्यनुस्यन्द अप्राणी घो यस्य सोऽप्राणिघ स चासौ निपरि-निर्व्यभ्यनुस्यन्द चेति अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द निनिर्विस्फुरस्फुलौ च परि-विस्कन्दश्च अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द चेति । तस्य । यथा विष्कभ्नाति । निस्फुलति निष्फुलति, एवं निर्विभ्याम् । परिस्कन्दति परिष्कन्दति विष्कन्दति विस्कन्दति निष्यन्दते निस्यन्दते घृतं चरतीत्यर्थः । एवं परि निर् वि अभि अनुभ्य । अप्राणिघ. किं निस्यन्दते हस्ती मद मुञ्चतीत्यर्थ ॥ ६२५ ॥

किच्चासौ ठी चेति कित् ठी तस्याम् । तेरतुरिति अनेन गुणे तॄफलेति अकारस्य एकार, खिलोपश्च । दीर्घ ऋत. इति किम् ? चक्रतु. ॥ ६२६ ॥

## ६२७ । वॄतो वेमो घौंऽठीढीपसिः ।

व ऋत ५।, वा ।१।, इम' ५।, घं १।, अ-ठी ढी प-से ६। ।

वृङो वृञ ऋदन्ताच्च इमो घं: स्याद्वा, न तु ठ्या: ढ्या: पसेश्च।
तरीता तरिता । ठोढीपसेस्तु तेरिथ । तरिषीष्ट, अतारिष्टाम् ।

## ६२८ । ऋदिरणावुर्वौष्ठ्यात् ।

ऋत् ।१।, इर् ।१।, अणौ ७।, उर् ।१।, तु ।२।, ओष्ठ्यात् ५। ।

ऋकार इर् स्यादणौ, ओष्ठ्यात् परस्तु उर् । तीर्य्यात् ।

[ ७५ षन्जौ ञि सङ्गे ।

## ६२९ । षन्जदन्शष्वन्जोऽपि न लोपः ।

षन्ज दन्श ष्वन्ज ६।, अपि ७।, न लोप १। ।

निषजति । न्यषाङ्क्षीत् निषषञ्ज ससजतुः सस्वजतुः ।

( ७६ ] दृशिरौ प्रेक्षणे ।

पश्यति । अदर्शत् । [ ६०४ ] वद्रोऽकिदिति । अद्राक्षीत् ।

[ ५८९ ] सृजदृशोतीम् वा, ददर्शिथ दद्रष्ठ ।

[ ७७ ] दन्शौ दंशने ।

अदाङ्क्षीत् ।

---

वश्च ऋच्च वॄत् तस्मात् । पे सि पसि ठी च ढी पसिश्चेति न ठीढीपसिः अठीढीपसि. तस्य । वॄ इति वृञोर्ग्रहण वरिता वरीता वरिष्यते वरीष्यते तरीता तरिता । ठीढीपसेस्तु ववरिथ वरिषीष्ट अवारिषाता तेरिथ तरिषीष्ट अतारिष्टाम् ॥ ६२७ ॥

पोरित्यनेनैवेष्टसिद्धौ ओष्ठ्यादिति कृत दन्त्यवकारस्यापि प्राप्त्यर्थम् । तेन वृणीते सनि वुवूर्षतीत्यत्र घौंऽज् झनिङ् गमामिति दीर्घे ओष्ठ्यपरत्वादुर् । तीर्य्यादिति व्यंन्यचतयीति दीर्घं । एव तीर्य्यते तितीर्य्यति तेतीर्य्यते निस्तीर्य्य ओष्ठ्यात्तु पृ पूर्य्यात् वॄगि वूर्य्यात् भॄगि भूर्य्यात् मॄगि मूर्य्यात् । दन्त्यवात्तु वृगिञ वूर्य्यात् । ओष्ठ्यादिति धात्ववयवादेव । तेन सम्पूर्वस्य ऋगि गत्यामित्यस्य समीर्य्यादित्येव ॥ ६२८ ॥

[ ७८ ] कित निवासे रोगापनयने संशये च।

६३०। कित्तिज्गुपः सन्नेम् मान शान दान वधस्तु खिङीं च।

कित्-गुप ५।, सन् ।१।, न ।१।, इम् ।१।, मान—बध ५।, तु ।१।, खिः ६।, ङी ।१।, च ।१।

कितादेः सन् स्यात् इम् न स्यात्, मानादेस्तु खिङीं च।
क्रमादर्तेऽत्र सन्देहे चान्तिनिन्दाविचारणे।
निशानार्जवनिन्दासु रुग्जयेऽपि कितो मतः॥

षन्ञौञि सङ्गे दन्शस्वरूपं ष्वन्ञौञिङालिङ्गे एषां नस्य लोपः स्यादपि परे। एभ्योऽप्किदित्यनेनैवेष्टसिद्धौ अप्येषां नलोपविधानं कथमिति चेत् न। दशिकङ् दर्शे इति इदनुबन्धात्मनेपदादिचुरादेर्ञेरनित्यत्वपक्षे दशने इत्यादौ अप किंत्वेऽपि इदत् धातोर्नलोपनिषेधे नलोपानुपपत्ते। चुरादर्ञेरनित्यत्ववीजं धातुदीपिकायाम् अकिकृलक्षणीत्यत्र द्रष्टव्यम्। सजति दशति स्वजते निषजति गौक इति षत्वं न्यषाङ्क्षीदिति अनिमत्वात् वृद्धिः अभ्यपीति षत्वं निषषञ्ज इति दशस्यादेरिति द्वयो षत्वम्। ससजतु ससञ्जतुरिति स्यात् ठ्यपिदिति कित् पक्षे न लोपः। अदर्शद्रिति इरित्वात् ङ दृशोरिति षः। अदाङ्क्षीदिति अनिमत्वात् वृद्धिः अभ्यपीति षत्वम्॥ ६२९॥

कित् संशयेच्छावासारोग्येषु तिजङ् चान्तौ निशाने गुपङ् गोपनकुत्सयोः मानङ् विचारेऽर्थे शानङ् चान्तौ निशाने दानञार्जवे छिदि बधङ् निन्दे बन्धे। क्रमादर्तेऽत्रेति। अत्र सन् विधाने एते कितादयः सप्त क्रमात् सन्देहादिसप्तस्वर्थेषु मताः। कितो रुग् जयेऽपि मतः। कित सन्देहरुग्जययो। तिजङ् चान्तौ गुपङ् निन्दायां मानङ् विचारणे शान अनिशाने दानङ् आर्जवे बधङ् निन्दायामित्यर्थः। सन्देहो विरुद्धानेककोटिविषयज्ञानं तत्राकर्म्मकः शास्त्रे चिकित्सति काव रुक्जयो रोगप्रतीकारः। चिकित्सत्यातुरं वैद्यम्। चान्तिः सहनं तितिक्षते दुःखं तपस्वी। निन्दादोषवत्तयाख्यानं जुगुप्सते व्याधं साधुः। विचारणम् इदमित्थं न वेति प्रमाणानुसन्धानम्। मीमांसते धर्म्मं धीरः। निशानं तीक्ष्णकरणं शीशांसति खड्गं कर्म्मकारः। आर्जवमकुटिलीभावः दीदांसति साधुरकुटिलो स्यात्

## ६३१। सन्आादिधुः।

सन् आादि १।, धु १।।

**सनन्तो आाद्यन्तश्च धुसंज्ञः स्यात्।**

## ६३२। सन्यङन्तो द्विः।

सन् यङ् अन्त १।, द्विः १।।

**चिकित्सति। अचिकित्सीत् चिकित्सामास।**

**इति पवत्-पादः।**

---

इत्यर्थ। निन्दा उक्ता बीभत्सते व्याध साधु। सन्देहादिभ्योऽन्येष्वर्थेषु केतति इत्यादि स्यादिति वोपदेव। तेषु तिबादयो न प्रयुज्यन्ते कृत्प्रत्यया एवेति केचित्। कङ्कणझनत्कारश्च किं गोपसे इत्यादयोऽपि दृश्यन्ते॥ ६३०॥

आादिश्च ञि सन् यङ् काम्यक् क्य ञ्य क्लि इति सप्त। यथा रोचयति बुभूषति बोभूयते पुत्रकाम्यति जानीयति कृष्णायते कृष्णाति॥ ६३१॥

सन् च यङ् च सन्यङौ तावन्तो यस्य स सन्यङन्त इति तद्गुणसंविज्ञानबहुव्रीहौ सन्यङ्समेतो द्विः स्यात्। यथा बुभूषति बोभूयते। अजादेस्तु आदिवर्णं हित्वा द्वित्वे अटिटिषति अटाट्यते एव इष गतौ इषिषिषति उषङ् शब्दे उषिषिषते। कदाचित्तद्गुणसंविज्ञानबहुव्रीहौ केवलो धातुरपि द्विः। तेन मोचते इत्यत्र सन हित्वा मुचधातोर्द्वित्वे मुचोऽढिङ्ङेमोंच् वेति मोचादेश। चिकित्सतीति कित् सन् अनेन इम् निषेधे गुर्नानिमोति वक्ष्यमाणात् गुणनिषेधे चिकित्स इति भागस्य धातुसंज्ञाया द्वित्वादि तिप्शपौ च चिकित्सामासेति त्यान्तत्वादाम्॥ ६३२॥

पवता परस्मैपदिना पाद प्रकरणमित्यर्थ.।

इति पवत् पाद.।

---

[ ७९ ] एधङ वृद्धौ।

एधते। ऐधिष्ट। एधाञ्चक्रे।

[ ८० ] ददङ दाने।

[ ५७९ [ अशशददेत्युक्तेः, दददे।

[ ८१ ] ष्वक्क ङ सर्पणे।

[ ५६९ ] अ·ष्ठ्यैष्वक्केत्युक्तेः, ष्वक्कते। षष्वक्के।

[ ८२ ] ऋज ङ आर्जवे। आनृजे।

[ ८३ ] तिजङ क्षमा-निशानयोः।

तितिक्षते।

[ ८४ ] ष्वन्जौ ङ सङ्गे।

निष्वजते।

## ६३३। निविपरिस्वन्जस्तु सुमादेः सः षोऽमि वा।

नि सुमादे ६।, स ६।, ष १।, अमि ७।, वा।१।।

न्यष्वङ्क्त। न्यस्वङ्क्त। सस्वजे सस्वञ्जे।

---

ष्वक्कङ। अष्ठ्यैष्वक्केत्युक्तेर्न दन्त्यादिश। ष्वक्कते षष्वक्के षिष्वक्किषते षाष्वक्क्यते। ष्वष्वन्जस्तु इम पञ्चमस्वरिण मत्वा पुक्कत पुपुक्के पुषुक्किषते षुषुक्क्यते इत्युदाहरति। निष्वजते इति सन्जदन्शेति नलोपे गीक इति षत्वम्॥ ६३२॥

सुम् आदिर्यस्य स सुमादि। स्वन्जश्च स्तुश्च सुमादिश्चेति। निविपरिभ्य स्वन्जस्तु ममादि निविपरिस्वनृजस्तु सुमादि सुमादिश्च गीक इति सूत्रे पठिता सुमागम् सिवसह निविपरिभ्य परेषामेषा सस्य ष स्यात् वा अम् व्यवधाने। न्यष्वङ्क्त न्यस्वङ्क्त व्यष्टावीत् व्यस्तावीत् पर्यष्कार्षीत् पर्यस्कार्षीत् न्यषेवीत् न्यसेवीत् व्यषहत व्यसहत। सस्वजे इत्यादि स्यात् ब्यपिदिति कित् पक्षे न लोप. ॥६३३॥

## ६३४। सत्स्वञ्जोष्ठ्यां नाखेः।

षद-स्वञ्जी ६॥, व्यां ७, न ।१।, अखे ६।।

खिवर्जस्यानयोः सः षो न स्यात् व्याम्। विषस्वजे विषस्वञ्जे।

[ ८५ ] त्रपूषङ् लज्जायाम्।

अत्रपिष्ट अत्रप्त। त्रेपे।

[ ८६ ] जभङ् जम्भने।

## ६३५। नुण् जभोऽचि।

नुण् ।१।, जभ ६।, अचि ७।।

अजम्भिष्ट।

[ ८७ ] ष्टुभङ् स्तम्भे।

विष्टोभते व्यष्टोभिष्ट।

[ ८८ ] पणङ् व्यवहारे स्तुतौ च।

[ ५९१ ] कम ऋतेत्यायः। पणायते।

## ६३६। सनः पमे धोर्वा त्वायात्।

सन. ५।, पमे १॥, धो., ६।, वा ।१।, तु ।१।, आयात् ५।।

पणायति पणायते। अपणायिष्ट अपणिष्ट। पणायाञ्चक्रे पेणे।

---

सद च स्वनज च सदस्वनजौ तयो. न खिरखि. तस्य अखे। विषसाद विषस्वजे। व्यामिति किं विषाष्वज्यते इत्यादौ दणस्यादेरित्युक्तेरुभयो षत्वम्॥६३४॥

जभो नुण् स्यात् अचि परे प्रकरणबलात् जभङ् जम्भे इत्यस्यात्मनेपद एवेति बोध्यम्। जम्भते अजम्भिष्ट जम्भन जम्भ. जभि जभ जभने इत्यस्य परस्मैपदिनस्तु जभति जभिष्यति जभनम्। विष्टोभते गौक इति षत्वं व्यष्टोभिष्टेति अस्यपीति षत्वम्॥६३५॥

सन सनन्तात् मूलधातो सम्बन्धिनी पमे स्याताम्। यथा बुभूषति पिस्पर्द्धिषते चिकीर्षति चिकीर्षते आयात्तु वा पणायति पणायते आयस्यानुबन्धेनैवेष्टसिद्धौ

## ६३७ । विच्छास्तुतिपणो वायः ।

विच्छ—अस्तुतिपण ५।, वा ।१।, आय १।।

पणायते पणते ।

एवं [ ८६ ] पन डीडे ।

[ ६० ] कमुङ कान्तौ ।

कामयते । [ ६१३ ] आन्तत्वादङ् ।

## ६३८। अग्ध्युङः स्वोऽनग्लोपि शास्वृदितः ।

अग्डि ७, उङ ६।, स्व १।, अनग्लोपि—शासृ ऋदित ६। ।

अनग्लोपिनः शासोऋकारेतश्चान्यस्य उङः स्व. स्यात् ञेः परे अङि परे ।

---

आयात् तु वेति कृत वृद्धेरप्राप्तये फलवत् कर्त्तरि परस्मैपदार्थमफलवत् कर्त्तर्य्यात्मनेपदार्थञ्च ॥६३६॥

न स्तुतिरस्तुति अस्तुतौ पण् अस्तुति पण् विच्छश्च अस्तुति पण् चेति तस्मात् । विच्छश्च गतावित्यस्मादस्तुत्यर्थमूर्द्धन्यान्तपणश्चायः स्याद्वा । स्तुतिवर्जनात् व्यवहारार्थे इत्यर्थे । व्यवहारश्च क्रयविक्रयस्वरूप । विच्छायति विच्छायते विच्छति पणायते पणायति पणते । एव पन इति पनडोडे इति दन्त्यान्तस्यापि कम ऋत इत्याद्ये पनायति पनायते इत्यादिकं बोध्यमित्यर्थ ॥६३७॥

ञे परोऽङ् ञ्यङ् तस्मिन् । अकी लोप अग्लोप' सोऽस्यास्तीति अग्लोपी । ऋत् इत् यस्य स ऋदित् । अग्लोपी च शासुश्च ऋदिच्चेति न अग्लोपिशास्वृदित् अनग्लोपिशास्वृदित् तस्य । यथा अपीपठत् अदीदवत् अबूबुधत् । अग्लोप्यादिस्तु । कूटल्कदाहे मन्त्रे इत्यदन्तात् चुर्य्योञिरिति ञौ हसाल्लोप इत्यकारलोपे अग्लोपित्वात् न ह्रस्व अचुकूटत् अशशासत् अडुढौकत् । ओणृ अपसारणे इत्यस्य ऋदनुबन्धो ज्ञापयति अग्डि आदौ ह्रस्व पश्चात् द्वित्वमिति । अन्यथा आदौ द्वित्वे दीर्घोङी-ऽभावादेव ह्रस्वासम्भवे ऋदनुबन्धो व्यर्थ स्यादिति । मा भवान् ओणिणत् अतएव मा भवान् अटिटत् इट मा भवान् इटिटत् उष मा भवान् उषिषत् इत्यादीना ञौ आदौ वृद्धौ गुणे वा कृते अनेन ह्रस्वे पश्चात् द्वित्वे मायोगादमागमाभावे तद्रूपेण स्थितिरिति । अत केवलेऽडि दीर्घोङीऽभावादेव ञे. परेऽडीति लब्धव्यं ञिग्रहण

६३९। खेः सन्वह्नौ घोर्ह्सादेर्घश्च, ल्यनेकाचोऽस्त्वकलिहलेर्वा।

खे ६।, सन्वत् ।१।, घौ ७।, घो ६।, ह्सादि ६।, घ १।, च ।१।, ल्यनेकाचौ ६॥, तु ।१।, अकलिहलि ६।, वा ।१।।

अनग्लोपिनः खेर्घौ ध्वचरे परे सन्वत् कार्य्यं स्यात् ञाड्डि, घोश्च खेर्ह्सादेः घः स्यात्, कलि-हलि-वर्जस्य लेः अनेकाचश्च सन्वत् वा स्यात्।

---

सामान्यार्थम्। तेन वादितवन्त प्रयोजितवान् अवीवदद्वीणा गायनेन राजा इत्यत्र पुनर्ञौ कृते पूर्वञेर्लोपेऽपि अनग्लोपित्वात् ञस्य स्यादेव इति काशीश्वर। वस्तुतस्तु केवलेऽडि उक्तौ परत्वानुवृत्तौ अचकमत इत्यत्रापि सन्वत् भावाद्यापत्ति ॥६३८॥

सन् इव सन्वत् लिश्च अनेकाच्च तौ तयोः कलिश्च हलिश्चेति कलिहलि न कलिहलि अकलिहलि तस्य। अनग्लोपि शास्वृदितो अनुवृत्तावपि खे परस्य शास्वृदितोर्लघोरसम्भवात् चकास्तङ् दीप्तावित्यस्य ऋदितोऽपि अनेकाच्त्वात् विशेषेण विकल्पेन बाधितत्वात् अनग्लोपिन इत्येव व्याख्यातम्। ञे परेऽड्डिपरे सति अनग्लोपिधातो' खे सन्वत् कार्य्य स्यात् खे. परे लघुधात्वचरे सति। तत्रैव यदि ह्सादेर्धातो खिर्लघुर्भवति तदा तस्य दीर्घश्च स्यात। कलिहलिवर्जस्य लेरनेकाच्धातोश्च खेर्लघुधात्वचरे परे सन्वत् कार्य्यं स्याद्वा। सन्वद्भावपक्षे ह्सादिसम्बन्धी खिर्यदि लघुर्भवति तदा घं स्यादित्यर्थ। अत्र केवलस्य लघोरसम्भवात् लघुयुक्तस्य ह्सो ग्रहणम्। यथा अपीपचत् असीषिचत् अमुमूहत् अचीकरत्। अग्लोपिनस्तु कलत्क्षगतिसख्ययो।। अचकलत्। घौ ध्वचरे किं अररम्भत्। ह्सादे किं औन्दिदत्। लघौ खे किं ध्वन अदिध्वनत्। लेस्तु कृतयति अचीकृतत् अचकृतत्। कविमाख्यातवान् अचीकवत् अचकवत् पटुमाख्यातवान् अपीपटत् अपपटत् कलिहलिवर्जनात् लेरग्लोपित्वेऽपि स्यात्। इवर्णो वर्णाभ्यामन्तस्य लिङ्गस्य सन्वद्भावो नास्तीति जौमराः। कलिहल्योस्तु अचकलत् अजहलत्। अनेकाचस्तु अचीचकासत् अचचकासत् ॥६३९॥

## ६४० । ख्यस्येत् सनि ।

ख्यस्य ६।, इत् ।१।, सनि ७। ।

खेरवर्णस्य इत् स्यात् सनि परे ।

## ६४१ । ञेर्लोपोऽनाल्विष्णाय्यान्तेत्वामिम्शिति ।

ञे ६।, लोप. १।, अनालु—शिति ७। ।

आलु इष्णु आय्य अन्त इत्नु आम् इम् शित् एभ्योऽन्यत्र ञेर्लोपः स्यात् ।

अचीकमत अचकमत । कामयाञ्चक्रे चकमे ।

[ ८१ [ अयङ गतौ ।

आयिढ्वम् आयिध्वम् आयिद्वम् । अयाञ्चक्रे ।

एव [ ८२ ] दयङ् गतौ ।

[ ८३ ] स्फायीङ् वृद्धौ ।

अस्फायिष्ट ।

---

खेर. ख्य. तस्य ॥६४०॥

आलुश्च इष्णुश्च आय्यश्च अन्तश्च इत्नुश्च आम् च इम् च शिच्च ते । न विद्यन्ते ते यत्र स तस्मिन् यथा भाव्यते बोध्यते इत्यादिषु यकि ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् वृद्धिगुणौ स्त एव । आल्वादौ तु स्पृहयालु कारयिष्णुः स्पृहयाय्यः मण्डयन्त स्तनयित्नु कारयामास कारयिष्यति कारयति अचीकमतेति कम ञिङ् वृद्धि कामि इत्यस्य धातुसञ्ज्ञा तन् अङ् ञग्ङ्ङ इति ङ्ग्ले कमि इत्यस्य द्वित्वे मि इत्यस्य लोपे कस्य च खे सन्वदिति सन्वत्त्वात् खस्येत् सनीति अकारस्य इकारे घोश्च खेर्हसादेर्घश्चेति तस्य दीर्घेऽनेन ञेर्लोपे अचकमतेति वारे इति ञिङोऽप्राप्तिपर्रे ञिश्रीत्यङ् । अयङ् गतौ अयधातौ परे निर्दुः प्रतिवर्जस्य उपसर्गस्य रेफो ल स्यादिति वक्तव्यम् । प्लायते पलायते पल्ययते निर्दुः प्रतीनान्तु निरयते दुरयते प्रत्ययते । आयिढ्वमिति अयध्व्या सि इम् धे स लोपो वा टौठीढीध इति धस्य ढो वा पक्षे तद्रूपस्थितिः । सस्य स्थितिपक्षे झप्झसोरिति सस्य द. । अयाञ्चक्रे विंजादीत्याम् । अस्फायिष्टेति वेमूदितीम् वा ॥६४१॥

६४२। य्वोर्लोपो हस्ययि।

य्वो ६॥, लोप १।, हसि ७।, अयि ७। ।

अस्फास्त।

[८४] ओ प्यायी ङ् वृद्धौ।

६४३। पदस्तनीण् घे प्याय ताय दीप पूर जन बुधस्तु वा।

पद ५।, तनि ७।, इण्।१।, घे ७।, प्याय—बुध ५।, तु।१।, वा।१। ।

पदो घेऽर्थे इण् स्यात् तनि, प्यायादेस्तु वा।

६४४। इणस्तन् लोप्यः।

इण ५।, तन्।१।, लोप्य १। ।

अप्यायि अप्यायिष्ट अप्यास्त।

६४५। प्यायः पीर्यङ्ठ्योः।

प्याय ६।, पी' १।, यङ्-ठ्यो ७॥।

पिप्ये।

[८५] तायृङ् सन्तानपालनयोगतौ च।

अतायि अतायिष्ट।

---

य च व च य्वौ तयोः। वकारो दन्त्य। अस्फास्तेति अनिम् पक्षे यलोप। एव स्फाता प्याता। दिव्यु यङ्लुकि ऊटी अप्राप्तिपक्षे देदेति देदित हसि किं स्फायते सेवते अयि किं पलाय्यते दीव्यति ॥ ६४२ ॥

णित्वात् वृद्धिः। अपादि अप्यायि अप्यायिष्ट अतायि अतायिष्ट अदीपि अदीपिष्ट अपूरि अपूरिष्ट अजनि अजनिष्ट अबोधि अबुद्ध ॥ ६४३ ॥

इण इति सामान्यार्थं तेन रतनोर्यगिणावित्यनेन क्रतादिणोऽपि तनो लोप.। नतु तन्स्थाने इण् करणेनैवेष्टसिद्धौ तनि परे इण कृत्वा तल्लोपविधानगौरवं कथमिति चेत् सत्य तत्स्थाने इणि कृते ध्या सेरापत्तिः तनस्थाने जातत्वेन ङित्वात् अबोधीत्यादौ गुणाभावश्च ॥ ६४४ ॥

[ ९६ ] ग्लसृङ चलने ।

अग्लिढ्वम् अग्लिध्वम् अग्लिड्वम् ।

[ ९७ ] षेवृङ सेवने ।

परिषेवते, न्यषेविष्ट, विषिषेवे । प्रतिसेवते ।

[ ९८ ] काशृङ दीप्तौ ।

काशामास चकाशे ।

एव [ ९९ ] कासृङ कुशब्दे ।

[ १०० ] ईहङ चेष्टायाम् ।

ऐहिढ्वम् ऐहिध्वम् ऐहिड्वम् ।

[ १०१ ] रु ङ वधे गत्याम् ।

अरविष्ट अरोष्ट । रुरुविषे ।

[ १०२ ] दे ङ पालने ।

६४६ । द्वे देङो दिगिष्ठ्याम् ।

द्वे. ६।, देङ ६।, दिगि १।, ठ्याम् ७। ।

द्विरुक्तस्य देङो दिगिः स्यात् ठ्याम् । दिग्ये ।

[ १०३ ] ओडीङ नभोगतौ ।

अडयिष्ट ।

पिप्ये ग्रुध्वोरिति य. । यङि पेपीयते यङ्लुकि पेपेति पेपीत अग्लिढ्वमित्यादि धे सलोपपक्षे ढो वा पक्षे सस्य द । परिषेवते परिनिविर्सेवेति षत्वम् । न्यषेविष्टेति अभ्यपीति षत्वम् । विषिषेवे इति दग्रस्थादेरिति षत्वम । एष्य कि प्रतिसेवते काशामासेति दरिद्राकाशेत्यामि असोऽनुप्रयोगे वक्तव्यात् आत्मनेपदस्य परस्मैपदादेश । ऐहिढ्वमित्यादि सुगमम् अरोष्टेति रुदुसूनोर्भ्वठ्या इति इमोऽभावपक्षे लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बलवानिति न्यायादादौ गुणे ह्रस्वपरत्वाभावान्न सिलोप. । रुरुविषे इति रुङ् ठ्या. से द्वित्वं रुदुसूनोर्गिति ठीवर्जनात् नेमसुमिति नियमेन नित्यमिम् ग्रुध्वोरित्युव् ॥ ६४५ ॥

[१०४] गुपङ् गोपन कुत्सनयोः। जुगुप्सते।

[१०५] मानङ् विचारे। मीमांसते।

[१०६] बधङ् निन्दायाम्। बीभत्सते।

[१०७] द्युतङ् ऌ दीप्तौ।

[५६५] शासुलिद्युतादिति ङ तेनैव पम्। अद्युतत् अद्योतिष्ट।

६४७। द्युत्स्वाप्योः खेर्जिः।

द्युत् स्वाप्यो ६॥, खि ६।, जि १।।

दिद्युते। [१०८] वृतङ् वृ्ल वर्त्तने।

६४८। वृद्भ्यो नेम् पे स्यसनोर्वा त्वमे।

वृद्भ्य ५॥, न ।१।, इम् ।१।, पे ७।, स्य सनो ६॥, वा ।१।, तु ।१।, अमे ७।।

वृतादेः स्य-सनोः इम् न स्यात् पे, मादन्यत्र तु वा। अतएव पम्। वर्त्स्यति। मे तु, वर्त्तिष्यते।

[१०९] स्यन्दूङ् वृ्ल क्षरणे।

निष्यन्दते निस्यन्दते घृतम्। निस्यन्दते हस्तीति प्राणिघत्वान्न षः।

---

सुगमम्। जुगुप्सत इति कितिजेति सन्। बीभत्सत इति बधस्तेनैव सनि खेर्डौ च भभान्तस्येति बस्य भ। द्युतङ् तेनैव पमिति द्युतादेष्टीपेङ्विधानसामर्थ्यात् ट्यामुभयपदमित्यर्थ॥ ६४६॥

द्युतो ज्यन्तस्वपश्च खेर्जि स्यात्। दिद्युते दिद्योतिषते देद्युत्यते सुष्वापयिषति असूषुपत्॥ ६४७॥

बहुवचन गणार्थम्। अतएव पमिति वृतादेरात्मनेपदिनः परस्मैपदे स्यसनो इम् निषेधादेव स्यसनोरुभयपदित्वमित्यर्थः। यथा वर्त्स्यति विवृत्सति। मे तु वर्त्तिष्यते विवर्त्तिषते। मादन्यत्र तु विवर्त्तिषा विवृत्सा विवर्त्तिषु विवृत्सु विवर्त्तिषितव्य विवृत्सितव्यम्। वृतादिश्च वृतुर्विधु शृधु स्यन्दू क्रृपू पञ्च वृतादय.। निष्यन्दते घृतमिति अप्राणिघत्वात् षत्व वा। निसन्दते हस्तीति प्राणिघत्वान्न ष.॥ ६४८॥

[ ११० ] क्लपूङ् वत्ट कल्पने ।

६४९ । क्लपः क्लृपोऽक्लपादौ ।

क्लप. ६।, क्लृप १।, अक्लपादौ ७।।

क्लपः स्थाने क्लृपः स्यात् न तु क्लपादौ । कल्पते ।

६५० । नेम् पे ड्याः ।

न ।१।, इम् ।१।, पे ७।, ड्या. ६। ।

क्लपो ड्या इम् न स्यात् पे । अतएव पम् । कल्प्ता । पे किं कल्पिता कल्प्ता, कल्प्स्यति, मे तु कल्पिष्यते कल्प्स्यते ।

[ १११ ] व्यथ षङ् पीडायाम् ।

६५१ । व्यथ-ग्रह-ज्या-वय-व्यध-वश-व्यच-प्रच्छ-व्रश्च-भ्रस्ज स्वप-वच-यजादेः खेर्जिंठ्याम् ।

व्यथ-यजादे ६।, खे ठ्याम् ७। ।

एषां खेर्जिः स्यात् ठ्याम् । विव्यथे ।

[ ११२ ] ञि त्वरा षङ् स्वदे ।

अत्वरिढ्वम् अत्वरिध्वम् अत्वरिद्वम् ।

इति मवत् पादः ।

---

क्लप स्थाने क्लृप' स्यात् न तु क्लपादौ पदे साध्ये । क्लपादिर्यथा क्लपा क्लपाद्य, क्लपद्य कर्पटस्य क्लप. क्लपी ॥ ६४९ ॥

अत्रापि अतएव परस्मैपदमिति बोध्यम् । ततश्च द्युतादिष्यामुभयपदित्व
वृतादेर्द्युताद्यन्तर्गणत्वात् व्यां स्यसनोश्च उभयपदित्वम् । क्लपस्तु द्युतादित्वात् व्या वृतादित्वात् स्यसनो. नेम् पे ड्या इत्यनेन ड्याश्च उभयपदित्वम् । अन्यत्र सर्व एवात्मनेपदिन. ॥ ६५० ॥

व्यथस्य ग्रहस्य ज्यास्य वयस्य व्यधस्य वशस्य व्यचस्य प्रच्छस्य व्रश्चस्य भ्रस्जस्य स्वपस्य वचस्य यजादेश्चेति तस्य । एषां खेर्जिः स्यात् ठ्याम् । विव्यथे जग्राह जिज्यौ उवाय वय इह वेञ स्थाने वयादेशः । तस्य च वेञ स्थाने जातत्वेनैव णौ

---

[ ११३ ] पतॢज गत्यैश्वर्य्ययोः ।

**६५२ । वच्यस्य-श्वि-पतां वोचस्थ-श्व पप्ता ङे ।**

वचि-अस-श्वि-पता ६।॥, वोच अस्थ-स्व-पप्ता. १।॥, ङ ७ ।

एषामेते क्रमात् स्युर्ङे । प्रपप्तत् ।

[११४] गजटु वम उद्गिरणे । वेमतुः ववमतुः वेमिथ ववमिथ ।

[ ११५ ] भ्रमु जण चलने ।

( ५८४ ) क्रमक्लमेति श्यन् वा । भ्रम्यति भ्रमति । भ्रेमतुः बभ्रमतुः ।

[ ११६ ] सह जङ शक्तौ ।

व्यषहत व्यसहत । [६०६] वेमसहेतीम् वा । परिषहिता ।

---

सिद्धे इह ग्रहण ठ्या नवे प्रच्छामिति जि निषेधस्य बाधनार्थम् । विव्याध उवाश्च विव्याच पप्रच्छ वव्रश्च बभ्रज्ज । ग्रहप्रच्छव्रश्चभ्रस्जा खेर्जौ क्ते भ्रमखथेति ऋकारस्याकारे जेः फलाभावेऽपीह ग्रहण ग्रहादिगणार्थम् । तेन गृह्यते पृच्छ्यते वृश्च्यते भृज्ज्यते इत्यादिषु ग्रहस्वपाद्योरिति जि । सुष्वाप उवाच स्वप साहचर्य्यात् वच इह अदादिको ग्राह्य इति जौमरा । इयाज । ठ्या कि वा व्यथ्यते । यजादिस्तु "यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिस्तथा । वदिर्वशिश्च श्वयतिश्चैते नव यजादय' । अत्वरिद्वमित्यादि धे सलोपपचे ढौ वा पचे सस्य द. ॥ ६५१ ॥

इति मवत्पाद ।

---

वचिश्च असश्च श्विश्च पत् च ते तेषां वोच च अस्थश्च श्वश्च पप्तश्च ते । वचिरिति अदादिक एव भौवादिकात् ङप्राप्त्यभावात् अस इति दिवादिक एव अन्यस्मात् ङप्राप्त्यभावात् । प्रपप्तदिति ॡदित्त्वात् ङे अनेन पप्तादेशः, गदनदेति षत्वम् । एवम् अवोचत् आस्थत् अश्वत् । वेमतुरित्यादि जॄवमभ्रमेति एत्व खिलोपश्च वा व्यषहत इत्यादि निविपरिस्यनुजेति वा षत्वम् ॥ ६५२ ॥

६५३। सहवहोऽदो ढि।

सह वह ६।, अत् ।१।, ओ ।१।, ढि ७।।

सहवहोः अकार ओ स्यात् ढे परे। निसोढ़ा। [५७२] ओत्वान्न षः।

[ ११७ ] षद ऌ ञौ विषादे गतौ।

निषीदति। न्यषदत्। निषसाद। प्रतेस्तु। प्रतिसीदति।

[ ११८ ] शद ऌ ञौ शाते।

६५४। शदोऽपि मम्।

शद ५।, अपि ७।, मम् १।।

शीयते। अशदत्। [ ११९ ] फण मिण गतौ।

फेणतुः पफणतुः, फेणिथ पफणिथ।

[ १२० राजृ ञ ण दीप्तौ।

रेजतुः रराजतुः, रेजे रराजे। [ ५७९ ] त्रिधिवला- दातोऽप्येत्वम्।

एव [ १२१ ] टुभ्राशृ ङ ण दीप्तौ।

भ्राश्यते भ्राशते। भ्रेशे बभ्राशे।

एवं [ १२२ ] टुभ्लाशृ ङ ण भासि।

[ १२३ ] स्वन ण शब्दे।

विष्वणति अवष्वणति मासम्। व्यष्वणत् विष्वेणतुः विषष्वणतुः। विस्वनति वीणा निस्वनति अन्नम्। [ ५७२ ] अव- व्यवेत्युक्तेर्न षः।

[ १२४ ] खनु ञ विदारे।

[ २३० ] हनगमेत्युङ् लोपः, चख्नतुः चख्ने।

---

सुगमम्। निसोढेति वेमुसहेत्यनिम् पक्षे होढोभाविति हस्य ढेऽनेनाकारस्य ओत्वे ढभान्तयोरिति तस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रौति ढस्य लोपे ओत्वान्न षत्वम्। एव सोढ़व्यः। वोढा वोढ़व्य.॥ ६५३॥

## ६५५। खन-सन-जनां ङा झसि, ये तु वा।

खन-सन जना ६।।।, ङा ।१।, झसि ७।, ये ७।, तु ।१।, वा ।१।।

खायात् खन्यात्। [१२५] चायृ ञ निशाने अर्च्चे।

अचायीत् [६४२] य्वो र्लोप इति। अचासीत्।

[१२६] लषञ स्पृहायाम्। लष्यति लषति।

[१२७ गुहू ञ मवरणे।

## ६६५। गुहो णोरूः।

गुह ६।, णी. ६।, ऊ १।।

गुहो णोरूः स्यात्। गूहति गूहते। अगूहीत् अघुक्षत्।

---

शदृत्त्जौ शाते इत्यस्मादव्विषये म स्यात् यस्या विभक्तौ शप् सम्भवति तत्रा-त्मनेपदमित्यर्थ। शीयते शीयेत अशीयत। अपि किम्? अशदत् शशाद शत्ता शद्यात् शत्स्यति अशत्स्यत्। फेणतुरित्यादि फणादित्वात् एत्व खिलोपश्च वा। विधिबलादित्यादि राजृञ् प्रभृतीना फणादिपाठबलादाकारस्यापि एत्व खिलोपश्च इत्यर्थ। भ्राश्यत इति क्रमक्लमेति श्यन् वा। भ्रेशे इति फणादित्वात् खिलोपादि-र्वा। अवष्टभ्णातीति विधानबलादकारान् परस्यापि षत्वम्॥ ६५४॥

खनश्च सनश्च जन च ते तेषाम्। एषा ङा स्यात् झसि ये तु वा। खात स्रात जात। खायते खन्यते सायते सन्यते जायते जन्यते। अत्र वाशब्दस्य व्यवस्थावाचित्वात् पिति झसि परे न स्यादिति बोध्यम्। तेन यङ्लुकि चङ्खन्ति चङ्खसि ससन्ति सससि जञ्जन्ति जञ्जसि एव वाशब्दस्यानुक्तसमुच्चयार्थत्वात् तनोतेर्ङा स्यात् वा यकि इति बोध्यम्। तायते तन्यते। तथा च तदूरीकृत्य कृतिभि-र्वाचस्पत्य प्रतायते इति माघ। अचायीदिति वेमूदिदितीम् वा पक्षे य्वो- र्लोप इति यलोप.। लष्यतीति क्रमक्लमेति श्यन् वा॥ ६५५॥

कृति गुह्य गोह्यमित्युदाहरता अचि परे एवाय विधिरिति ज्ञापितम्। गूहति गूहिता गोढा गूहिष्यति घोक्ष्यति अतएव गुहो डिदचीति जौसरा.। अघुक्षदिति वेमूदिदित्यत्र वाशब्दस्य गुह' सेरिमोविलक्षणविकल्पार्थत्वात् से. अनिम् पक्षे सिरेव न स्यात् अनिमत्वात् सगेव॥ ६५६॥

## ६५७ । गुह-दुह-दिह-लिहां टीमदन्त्ये न सिः सक् वा ।

गुह दुह दिह-लिहां ६।।।, टीमदन्त्ये ७।, न ।१।, सि १।, सक् ।१।, वा ।१। ।

**एषां टीमदन्त्ये परे सिर्न स्यात्, सक् च वा स्यात् । अगूढ़ अघुचत ।**

## ६५८ । सकोऽल्लोपोऽच्यव्वे ।

सक ६।, अत्-लोप १।, अचि ७।, अव्वे ७। ।

**सकोऽकारस्य लोपः स्यात् अव्वे अचि परे ।**

**अगूहिषि अघुक्षि । अगुह्वहि अघुक्षावहि । दन्त्ये किम्, अगूहिष्महि अघुक्षामहि । अव्वे किम् । अगूहिषत अघुक्षन्त ।**

---

व्या म टीम टौमि दन्त्यष्टौमदन्त्य तस्मिन् । लिहामिति परत्व जनिष्यमाणत्वेन सम्बन्धी य सि स न स्यात् एतेन सेर्जाततुल्यत्वाभिधानात् अपी न प्रसङ्ग सक्कृतौ विप्रतिषेधी यद्बाधित तद्बाधितमेवेति न्यायादित्यर्थ । अन्यथा पञ्चम्यैव सिद्धे षष्ठ्या वैयर्थ्यं स्यात् । सिनित्य निषिध्यते इणषेति विहित. सक् च विभाष्यते इत्यर्थ । अगूढेति इस् पचे सेर्निषेधे अरवसाभावादिमोऽभावे होढोभाविति ढभात्तयोरिति ढ्रौढ्रि घंश्चेति । अघुक्षतेति तनि अनिम् पचे सकि हस्य ढे भभान्त-स्येति गस्य घे षढी क से इति ढस्य के क्षिलादिति षत्वम् । एवम् अदुग्ध अधुक्षत अदिग्ध अधिक्षत । अलीढ अलिक्षत । एवञ्च थास् ध्वम् वहिष्वपि यथा-योग्यमुदाहर्त्तव्यम् । किञ्च प्रत्ययत्वेन दन्त्यवकारादेर्बहि मात्रग्रयमेव दन्त्योपादान कृतम् अन्यथा ढोमतौ इत्युक्तावपीष्टसिद्धि ॥ ६५७ ॥

अतो लोप अल्लोप न व्वम् अव्व तस्मिन् । अघुक्षि इति गुह इ सक् होढोभो भभान्तस्येति गस्य घ षढी क. से षत्वम् अनेन सकोऽल्लोप इम् पचे अगुह्विषीति बोध्यम् । अगुह्वहीति गुह वहि सेर्निषेधे सकोऽप्यप्राप्तिपचे वकारस्य दन्त्यत्वेन भसत्वाभावात् होढोभाविति न ढ । पचे सकि आक्तिमभवीति आत्वे अघुक्षावहीति दन्त्य किम् अघुक्षामहीति दन्त्यपरत्वाभावात् गुहदुहदिहलिहा इत्यस्याप्राप्तौ वेमत्वादनिम् पचे इणषोऽनिमिजुड इत्यनेन सकि आक्तिमभवीति आत्वम् । इम् पचे तु अगुहिष्महि इति बोध्यम् । अव्वे कि गुह अन्त इणष इति

[१२८] ह्रुञ ह्रत्याम् ।

६५९ । इगुङ्मढीस्यनिम् किद्गमस्तु वा ।

इगुङ् ५।, म ढीसि ।१।, अनिम् ।१।, कित् ।१।, गम ५।, तु ।१।, वा ।१।।

इगुङ ऋवर्णान्ताच्च परा मे स्थिता अनिम् ढी सिश्च कित् स्यात्, गमस्तु वा । अहृत अहृषाताम् । हृषीष्ट ।

[१२९] टुडु भृञ भरणे । बभूव ।

[१३०] दान ञ आर्जवे छिदि । दीदासति दीदांसते ।

एवं १३१ शान ञ तेजे । शीशासति शीशासते ।

[१३२] भजी ञ भागसेवयोः । भजते । भेजे भेजिथ बभक्थ ।

[ १३३ ] श्रि ञ सेवायाम् ।

[ ६१३ ] णिश्रीत्यङ् अशिश्रियत् श्रयिता ।

[ १३४ ] रन्जी ञ रागे ।

६६० । रन्जोऽपघकानासघ्णिनौ नलोपो ञौ तु मृगरमणे ।

रन्ज ६।, अप् घक-अन-अस्-घ्णिनौ ७।, न लोप १।, ञौ ७।, तु ।१।, मृगरमणे७।।

रजति रजते । ररजतुः ररञ्जतुः ।

---

सकि लोपोऽतोऽद्येचोरित्यकारलोपे अघुचन्त इति । अकारेऽवश्यलोपस्येऽपि अञ्चे इति कृत ज्ञापयति । लोपोऽस्योमाङ्डोरिति लोपोऽतोऽद्येचोरिति हसल्लिोपो-ऽग्नित्ययोरित्येतेभ्योऽन्यसूत्रेण अकारलोपस्य स्थानिवत्त्वं नास्तीति तेन लुगङ्गोऽप-इत्यादिना अकारलोपे स्थानिवत्त्वानङ्गीकारात् मान्तोऽदनत इत्यत्र प्रवृत्तौ दुहते दिहते लिहते इत्यादि सिद्धमिति ॥६५८॥

इक् उङ्-यस्य स इगुङ् । इगुङ् च ऋश्च इगुङृ तस्मात् । ढी च सिश्चेति मे ढीसि मढीसि । नास्ति इम् यस्य सोऽनिम् इति मढीसेर्विशेषणम् । यथा ञभी भिदिर् भित्सीष्ट अभित्त बुध्यीङ भुत्सीष्ट अबुद्ध सृज्यीङ् सृचीष्ट असृष्ट डुकृञ् कृषीष्ट अकृत । कृत्वगि हिंसि स्यात् गृदृहु रित्यनिम् पचे कीर्षीष्ट अकीर्ष्ट । गमस्तु सङ्गसीष्ट सङ्गंसीष्ट समगत समगस्त, बभ्रवेति नेमसुमिति इम् निषेध. । दीदा-

[ १३५ ] त्विषीञ कान्तौ । अत्विचत् त्विच्चोष्ट ।

[ १३६ ] यजे ञौ देवार्च्चा दान सङ्गतौ ।

[ ६५१ ] व्यथग्रहेति जिः, इयाज ।

## ६६१ । ग्रहस्वपाद्योः कङित्कितोर्जिः ।

ग्रह स्वपाद्यो ६॥, कङित् कितौ ७॥, जि १। ।

ग्रहादेः किति ङिति, स्वपादेः, किति, जिः स्यात् ।

ईजतुः ईजुः इयजिथ इयष्ठ ।

[ १३७ ] डु वपौ ञे मुण्ड वीजोप्त्योः । प्रख्युवाप ।

( १३८ ) वहैञौ प्रापणे ।

प्रख्यवाक्षीत्, अवोढ । उवाह ऊहे ।

---

सतीति किन्निजेति सन् खिङ्गौ च । भेजिथेति सृजदृशेति वेम् अयितेति नेमे काजेत्यत्र अिवर्ज नादिम् ॥६५८॥

अप् च यकश्च अस् च घ्णिनिश्चेति तस्मिन् । यथा रजति रजकी रजन रज रागौ । घ्णिनिरिति कृत्प्रत्ययो वक्तव्य । अस्य घकारो जस्य गकारार्थ पूर्वणकारो वृद्ध्यर्थ । शेष इकार उच्चारणार्थ. । रञ्जनमिति अग्रन्तस्यैव । ररजतुरिति स्यात् ठ्यपिदिति कित् पचे न लोप । अलिक्षदिति लिर्षे अभासे ह्रस्वेति सक् । त्विच्चोष्ठेति इगुङ्रिति कित्त्वान्न गुण ॥५६०॥

ग्रहश्च स्वपश्च ग्रहस्वपौ तावादी ययोस्तौ ग्रहस्वपादी तयो । कश्च ङश्च इतौ यस्य स कङित् कङिच्च किच्च कङित्कितौ तयो । स्वपग्रहाद्यो किदखोर्जिरिति कृतेऽपीष्टसिद्धौ कङित्कितोरिति गौरवम् कथमिति चेन्न । अनिम्सनोऽगुणत्वे ज्याप्रभृतीनाम् अनिमा सनि जेरापत्तेः । वस्तुतस्तु सनोऽगुणत्वे ग्रहस्वपप्रच्छामिति नियमादन्येषामनिमि सनि जे प्रसङ्गाभाव । गौरव स्पष्टार्थम् । व्यथग्रहेति सूत्रे पठिता ग्रहादय स्वपादयश्च । यथा गृह्यते गृह्णाति जीन. जीनाति विध्यते विध्यति उश्च्यते वृश्चन्ति । व्यचस्तु तत्रोपादान ज्या खेर्जि प्राप्त्यर्थमेव । व्यचोजिरञ्णिदसीति अनेन ञित् णित् अस् इभ्योऽन्यत्र जे' कर्त्तव्यत्वात् । पृच्छ्यते पृच्छति वृश्च्यते वृश्चति भृज्ज्यते भृज्जति सुप्यते उच्यते इज्यते इत्यादि ईजतुरिति व्यथग्रहेति खेर्जि. अनेन मूलधातोर्जि. । इयजिथ सृजदृशेति वेम् अनिम् पचे प्रच्छाजेति

[१३९] वेञ् स्यूतौ ।

## ६६२ । ठ्यां न वे-प्रच्छाम् ।

ठ्या ७।, न ।१।, वे प्रच्छाम् ६॥ ।

वेञ् प्रच्छि व्रश्चि भ्रस्जीनां जिर्न स्यात् ठ्याम् । ववौ ववतुः ।

## ६६३ । वेञो वय् वा ।

वेञ ६।, वय् ।१।, वा ।१। ।

वेञो वय् स्याद्वा ठ्याम् । उवाय ऊयतुः ।

## ६६४ । य वः किति ।

य ।१।, व १।, किति ७। ।

वेञो यस्य वः स्याद्वा ठ्यां किति । ऊवतुः ।

[१४०] व्येञ् वृतौ ।

## ६६५ । ना व्येष्ठ्याम् ।

न ।१।, आ ।१।, व्ये ६।, ठ्याम् ७। ।

व्येञ आ न स्यात् ठ्याम् । विव्याय ।

---

अड् । प्रण्युवाप इति गदनदेति णत्वम् । प्रण्यवाचीदिति ह्रोढोभौ व्रजवदेति ञि गदनदेति णत्वम् । अवोढेति वह तन् सि औदित्वान्नेम् झसस्सादिति सेर्लोप हस्य ढत्वे सहवह इति ओत्वे ढभात्तथोरिति तस्य धत्वे ष्टुभिरिति धस्य ढत्वे ढ्रोढ्रीति ढलोप ॥६६१॥

वेश्च प्रच्छश्च वेप्रच्छ । प्रच्छ इति बहुवचन गणार्थम् । तेन व्यधग्रहेति सूत्रे प्रच्छादयो ग्रहादिगणसमाप्तिपर्य्यन्ता इत्यर्थ । अत आह । प्रच्छि व्रश्चि भ्रस्जीनामिति । वेञ् निषेधेऽपि तदादेशस्य वयोर्जिर्न निषेध । अन्यथा तत्र वयो-ग्रहणस्य वैयर्थ्यं स्यात् । ववौ इति वेञ एचोऽशित्या णप् व्यधग्रहेति प्राप्तव्य-खेर्जिर्न स्यात् नवातो डौ । ववतुरिति व्यधग्रहेति खेर्ग्रंहस्वपाद्योरिति मूलधातो र्जिर्नाभूत् ॥६६२॥

उवाय व्यधग्रहेति खेर्जिः ऊयतुरिति व्यधग्रहेति खेर्ग्रंहस्वपाद्योरिति मूल-धातोश्च जिः ॥ ६६३ ॥

वेञो यस्यासम्भवात् तदादेशस्य वय एव यकारस्येत्यर्थः ॥ ६६४ ॥

## ६६६। जिं वान्यः किति।

जिं २।, वा ।१।, अन्य' १।, किति ७।।

ह्वेर्व्येञोऽन्यो भागो जिं वा प्राप्नोति व्याम् किति। विव्यतुः विव्ययतुः विव्ययिथ।

[१४१] ह्वेञ् स्पर्द्धायां शब्दे च। अह्वत् अह्वत अह्वास्त।

## ६६७। ह्वो हे जिः।

ह्व ६।, हे ६।, जिः १।।

हेर्ह्वो जिः स्यात्। जुहाव जुहुवतुः।[१४२]ऐ वसौ निवासे।

## ६६८। स त् स्यरे।

स ।६।, त् ।१।, सि ७, अरे ७।।

सस्य त स्यात् अरे से परे। अवात्सीत् अवात्ताम्, उवास ऊषतुः।

[१४३] वदे वाचि। अच्छवदति। [५७४] व्रजवदेति व्रिः। अवादीत् उवाद ऊदतुः।

[१४४] टु ओश्वि इर् गतिवृद्ध्योः।

[५६५] शासुक्लिद्द्यु दिति ङः वा। अश्वत्।

६१२। जिश्वोत्यङ् वा। अशिश्वियत् अश्वयीत्।

---

व्येञेहताविव्यस्य ठ्यां एचोऽसिव्येति आकारो न स्यात्। ठ्यामित्युपादानं कितीत्यस्य वाशब्दस्य च निवृत्त्यर्थम्। विव्याय ञ्णित्यन्ते जुङ्तोरिति वृद्धि ॥ ६६५ ॥

विव्यतुरिति मूलधातोर्जौ क्ते भ्रुभ्वोरिति य । पक्षे विव्ययतुरिति यलावेति अयादेश । उभयत्र खेर्नित्य जि । विव्ययिथेति सृजदृशीत्यत्र व्येवर्जनान्नित्य-मिम्। अह्वदिति वक्तव्यसख्येति ङे उसेचीत्याकारलोप.। अह्वत अह्वास्तेति लिव्ष्यस्तु मे इति ङी वा ॥ ६६६ ॥

जे पुनरुपादानात् ठ्या किति वा इति नयाणा न [illegible]वृत्ति । ह्वयतेर्यत्र द्वित्व तत्र खेर्मूलधातोश्च द्विर्निमित्तको जि. स्यात् इत्यर्थः। [illegible]था जुहाव अजूहवत् जुहूयति जोहूयते ॥ ६६७ ॥

स इति लुप्तषष्ठ्येकं त इति लुप्तप्रथमैकम्। अरे कि [illegible]दाद्दे। अवात्तामिति

## ६६९ । श्वेर्जिर्वा यङ्ठ्योर्अङ्सनोः ।

श्वे ६।, जि. १।, वा ।१।, यङ्ठ्री ७॥, अङ्-सनो ७॥ ।

**श्वे र्जिर्वा स्यात् यङि ठ्याम् ञे: परे अङि सनि च ।**

**शुशाव शिश्वाय शुशुवतु: शिश्वियतु:। श्वयिता । शूयात् ।**

**इति श्विपाद: ।**

**इति श्वाद्यध्याय: ।**

---

अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ सस्य तकारे पश्चात् सेर्लोप' जौमरा अप्येवम् । न च आदौ सेर्लोपेऽपि त्यलोपे त्यलक्षणमिति न्यायात् वृद्धिवत् सस्य तकारेण भाव्यमिति वाच्यम् । तस्य लोपे सति त्यस्वरूपेण विहित यत् कार्य्यं तदेव स्यात् न तु त्यस्य वर्णविहितमिति । तेन सौ विहितत्वात् वृद्धि' सकारे विहितत्वात् सस्य तकारो न स्यात् इति । अन्यथा अवुद्ध इत्यादौ सेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् सकारे परे झभान्तस्येत्यादिना बकारस्य भकारापत्ति' । रामानन्दकाशीश्वरौ तु प्रत्ययलोपस्य बलवत्वादादौ सेर्लोपे सकारपरत्वाभावात् सस्य तकाराभावे आवास्तामित्याहतु । तद्धेयम् । एकन्यायादबलवता सिलोपेन न्यायाद्बलवत्तरस्य तकारादेशस्य बाधितुमशक्यत्वात् अच्छवदतीति व्याच्छस्येति समास. । अवादीदिति व्रजवदेति त्रि । अश्वदिति टुओश्वि शासलिदद्युदिति ङ वच्यस्श्वि पतामिति श्व' । अश्वयीदिति पक्षे व्या सौ नेमेकाजेत्यत्र श्विवर्जनादिमि सेर्लोपे व्रजवदित्यत्र श्विवर्जनात् न त्रि ॥ ६६८ ॥

यङ् च ठी च यङ्ठ्यौ तयो' । अङ् च सन् च अङ्सनौ । ञे: परावङ्सनौ तयो' । अत्र वाशब्दस्य व्यवस्थावाचित्वात् श्वेर्यङादौ द्वयोरेव जि. स्यात् पक्षे द्वयोरेव जिर्न स्यात् इत्यर्थ: । अन्यथा अशूशवदित्यादौ प्रागच्कार्य्यादिति नियमादादौ द्वित्वे श्वेर्जिर्न स्यात् । यथा शुशाव शिश्वाय इत्यादि एवं शोशूयते शेश्वीयते अशूशवत् अशिश्वयत् शुशावयिषति श्वयितेति नेमेकाजेत्यत्र श्विवर्जनादिम् । शूयादिति ग्रहस्वपाद्योरिति जि: घोंऽज्यरे इति दीर्घ: ॥ ६६९ ॥

इति श्विपाद. । इति श्वाद्यध्याय: ।

---

# प्रथमः पादः—अदादिः ।

---

[ १४५ ] अद्लृ भक्षणे ।

## ६७० । लुगद्भ्योऽपः ।

लुक् ।१।, अद्भ्य ५।॥, अप ६। ।

अदादेः परस्य अपो लुक् स्यात् । अत्ति ।

## ६७१ । हुझसो हेर्धिः ।

हु झस ५।, हेः ६।, धिः १। ।

होर्झसाच्च परस्य हेर्धिः स्यात् । अद्धि ।

## ६७२ । हसाद्भ्यां दिसिर्लोपामौ ।

हस्-अद्भ्या ५॥, दि-सि ६।, लोपामौ १॥ ।

हसात् परयोर्दिस्योर्लोपः स्यात् अदः परयोः अम् स्यात् । आदत् आदः ।

---

बहुवचन गणार्थम् । चे अपि इत्यत्र अदादिवर्जनेनैवेष्टसिद्धौ अदादे अपं विधाय तत् लुक् करण कदाचित् अदादे. अप स्थित्यर्थं तेन सर्वा एवाहनत् प्रथगिति चक्षीत्यादि सिद्ध्यति । वस्तुतस्तु रुधिर् रुद रोदने तुर्लि वेगे इत्येताभ्यां क्तेभावादि ढे वोदुडोऽव्रत इत्यनेन गुणविकल्पे रोदितं रुदित तेन तोरित तुरित तेन इत्यादि सिद्ध्यर्थम् । लुक् करणात् युत युवन्ति इत्यादौ न गुण ॥ ६७० ॥

यथा जुहुधि रुधिधौं ज रुन्धि अद्लृ अद्धि । वशलु उड्ढि च अत्र ग्रस्छ्राजेति षड् झप्झसोरिति षस्य ड । धौ पिषल्ह पिण्ढि चकास्ह चकाद्धि इत्यादि । परत्वाद्विशेषत्वाच्च तातयादेशेनाय बाध्यते । तेन त्वम् अन्तमत्तादित्यादि ॥ ६७१ ॥

दिसिवित्येकवचन यथासङ्ख्या निरासार्थं दिसेरिति ध्या एव टग्राम्तु सिव्यवधानादसम्भवः । यथा अलेट् अहन् अभुनक् अवट् अपिनट् इत्यादि ॥ ६७२ ॥

## ६७३। घस्लृ सन् घल् घञि।

घस्लृ ।१।, अद ६।, सन् टी-अल् घञि ७।।

अदो घस्लृ स्यात् सनि ट्याम् अलि घञि च। (५६५) लित्त्वात् ङः। अघसत्।

## ६७४। ठ्यां वा।

ठ्या ७।, वा ।१।।

जघास आद। [ २२० ] हनगमेत्युङ् लोपः। जक्षतु:, आदतुः जघसिथ आदिथ। [१४६ प्सा ल भक्षणे। प्रणिप्साति।

## ६७५। द्विषविदातोऽनुस् वा।

द्विष विद आत ५।, अन् ।१।, उस् ।१।, वा ।१।।

द्विषेर्वेत्तेरादन्ताच्च परोऽन् उस् स्याद्वा। अप्सु: अप्सान्। [ १४७ ] वश ल कान्तौ। वष्टि। [ ६६१ ] ग्रहस्वपाद्यो-रिति जिः। उष्टः उशन्ति। अवट्। उवाश।

---

सन् च टी च अल् च घञ् चेति तस्मिन्। जिघत्सति अघसत् हनगमेत्यत्र उवर्जनात् न उङ् लोपः। प्रघस घास ॥ ६७३ ॥

अदो घस्लृ स्यात् वा ठ्याम्। जक्षतुरिति हनगमेत्युङ् लोपे झप्झसोरिति घस्य कत्वे शासवसघसेति षत्वम्। अत्र अदौ भक्षे लृघसौ पचे इति द्वाभ्यामेव आद जघास इत्यादि सिद्धावपि ठ्या वेति सूत्रविधान ज्ञापयति घसतेरपि अद-तुल्यत्व स्यादिति। तेन सृजदृशेत्यत्र अदो वर्जनादेव घसो वर्जने सिद्धे जघसिथेत्यत्र इमि विकल्पाभावे नेम्सृमिति नियमात् वसोऽरसेति नित्यमिम्। न च स्थानिवत्त्वादेव अदतुल्यत्वमिति वाच्यम्। धात्वादेशाना स्थानिवत्त्वानङ्गीकारात्। अन्यथा अजधातो: स्थाने जातस्य वीधातो सेमत्वापत्ते। हनस्थाने जातस्य वधधातोरनिमत्वापत्तेश्च। प्रणिप्सातीति गदनदेति णत्वम् ॥ ६७४ ॥

अद्विषु अद्विषन् अविदु अविदन् उस्येचोत्याकारलोपे अप्सु अप्सान् अन् इति ट्या एव ट्यान्तु द्विष. सकारव्यवधानान्न प्रसङ्ग। अद्विक्षन्। विदधातोस्तु

[ १४८ ] हन् लौ हिंसागत्योः।

६७६। वनतनाद्यनिमां ञम्लोपो झस्यप्यतिक्यणौ।

वन तनाद्यनिमां ६।॥, ञम्लोप १।, झस् यपि ७।, अतिकि ७।, अणौ ७।।

एषां ञम्लोपः स्यात् अणौ झसि यपि च, न तु तिकि। प्रणिहतः। [ १८९ ] हनो ङ्णो घ्नः। घ्नन्ति। प्रहण्वः प्रहन्वः प्रणण्मः प्रहन्मः।

६७७। जह्येधि-शाधि हन्यस्ति-शास्ति हिना।

जहि एधि शाधि।१।, हनि अस्ति शास्ति।६।, हिना ७।।

एषां हियुक्तानां क्रमादेते स्युः। जहि।

६७८। हनो बधष्टीव्यलि टीमे तु वा।

हन ६।, बध १।, टीव्यलि ७।, टीमे ७।, तु।१।, वा।१।।

हनो बधः स्यात् व्याम् व्यामलि च, टी मे तु वा। अबधीत्।

---

अनुस्सिद्धेरिति नित्यमुसि अवेदिषु असासिषु। वष्टीति वशलुम्हि शक्राजेति षड्। अवट् इति हसाद्गामिति दिस्योर्लोपे शक्राजेति षड् षोड फे॥७५॥

नास्ति इम् यस्मात् सोऽनिम्। वनश्च तनादिश्च अनिम् चेति ते तेषाम्। ञमो लोप ञम्लोप। झसश्च यप् च झसयप् तस्मिन्। न तिक् अतिक् तस्मिन्। नास्ति णुर्यस्मिन् सोऽण तस्मिन्। वनव्यापृतौ। यत वति प्रवत्य। तत तति प्रतत्य। चत चति. प्रचत्य। हत. हति प्रहत्य। गत गति प्रगत्य। झसि कि वन्यते इत्यादि। अणौ कि ववन्ति इत्यादि। अतिकि कि वन्तिरित्यादि। प्रहण्व इत्यादि वस्य प्रत्ययत्वात् दन्त्यत्वे झसत्वाभावात् ञमो लोपाभावे मवान्तहन इति वा णत्वम्॥ ६७६॥

जहिश्च एधिश्च शाधिश्चेति। हनिश्च अस्तिश्च शास्तिश्चेति जहीति पक्षे तातङ्ङऽपि हतात्॥ ६७७॥

टी च ढी च अल् चेति तस्मिन्। ट्यादौ हन्ते. प्रयोग निषिध्य बधहतार्विति

## ६७९। खेर्हो घो ञ्णिति च।

खि ५।, ह ६।, घ १।, ञ्णिति ७।, च ।१।,

खेः परस्य हनो हस्य घः स्यात् ञिति णिति च।

जघान, जघ्नतुः। हन्ता। वध्यात्। प्रहणिष्यति।

[१४९] द्युलभिसर्पणे।

## ६८०। रपिङ्हस्युतोऽद्वेर्व्रिः।

र पित्-हसि ७।, उत ६।, अद्वि ६।, व्रि १।।

अद्वेर्धोरुकारस्य व्रिः स्यात् पिति हसे रे। द्यौति द्युतः द्युवन्ति।
[१५०] यु ल मिश्रणे अमिश्रणे च। यौति यविता। [१५१]
नु ल स्तुतौ। अनावीत् अनौवीत्। नुनुविव। [१५२] क्ष्णु ल
तेजने। क्ष्णविता। [१५३] ष्णु ल प्रस्नुत्याम्।
[५७९, स्नुक्रमोऽमे इतीम्। अस्नावीत्। [१५४] इन ल गतौ।

## ६८१। यिनोऽच्यणौ।

य।१।, इन ६।, अचि ७।, अणौ ७।।

इनो यः स्यात् अणौ अचि। यन्ति।

---

औवादिक प्रयुज्यत इत्यय.। तेन अवधीदित्यादौ नधनातीरौदित्वाभावादहसी-
ऽरस्येतीम् हसादि मेम इत्यत्र बधवर्जनात्र व्रि। एव बध्यात् बध्यास्ता बध टौमे
तु आबधिष्ट आहत॥ ६७८॥

चकारादर्थद्वयम्। खे परस्य हनो हस्य घ स्यादित्येकोऽर्थ। हनो हस्य
घ स्यात् ञिति णिति च परे इत्यपरोऽर्थ। खे परस्य यथा जघनिय जिघांसति
जङ्घन्यते। ञिति घातयति णिति अघानि घातक घात घात प्रहणिष्यतीति
स्यस्यईन इति इम् नादिह्नर्मीभेति णत्वम्॥ ६७९॥

रश्चासौ पिच्चासौ हस् चेति रपिङ्हस् तस्मिन्। न द्वि अद्वि तस्य। यौति
रौति। अद्वि कि जुहोति। यवितेति नेमेकाजेत्यत्र युवर्जनादिम्। अनावी-
दित्यादि वेमूदितीम् नुनुविवेति अठया इत्युक्तेर्नित्यमिम्। क्ष्णवितेति नेमेकाजेत्यत्र
क्ष्णुवर्जनादिम्॥ ६८०॥

## ६८२। गा ञ्याम्।

गा ।१।, ट्याम् ७। ।

इनो गा स्यात् ञ्याम्। अगात् इयाय।

## ६८३। खे: क्तितिर्घ:।

खे ६।, क्निति ७, र्घं १। ।

इन: खे: र्घ: स्यात् क्निति ञ्याम्। ईयतु:।

## ६८४। अगेढ्याम्।

अगे ६।, ञ्याम् ७। ।

अगेरिनो र्घ: स्यात् क्निति ञ्याम्। ईयात्। अगे: किम्? अन्वियात्। [१५५] अधीक ल स्मरणे।

## ६८५। इन्वदिक:।

इन् वत् ।१।, इक ६। ।

इन् इव इक: कार्य्यं स्यात् रूपञ्च तद्वत्।

[ १५६ ] या ल गतौ। प्रणियाति।

एवं [१५७] वा ल गमनहिंसयो:।

[१५८] द्रा ल स्वप्ने पलायने च।

[१५९] ख्या ल ख्यातौ कथने च। अख्यत्। [ १६० ] मा ल माने। प्रणिमाति। मेयात्।

---

गुर्ध्वारिति प्राप्तयस्य इयो बाधक अस्य नकारो भूस्थापिवेत्यादिषु विशेष ज्ञापनार्थ ॥ ६८१ ॥

अगादिति भूस्थापिर्येति सि लुक् ॥ ६८२ ॥

डिभूतादिनघातौ ढ्या. अन्यत्र क्तितोऽसम्भवादेव ढ्यामिति व्याख्यात ईयतु-रिति यिनोच्चणाविति यकारेऽनेन खेर्व. ॥ ६८३ ॥

नियमोऽय ढ्या क्निति अगेरिन एव दीर्घ न तु समेरिति। ईयात्। अगे, किम् अन्वियात् समियादित्यादौ पौऽच्य्यरे इत्यनेनापि न दीर्घ ॥ ६८३ ॥

अधील् स्मृत्यामिति अयं धातु. कातन्त्राद्यैरिकस्मरणे इति पठ्यते तन्मतमवलम्ब्य

[११६१] विद ल ज्ञाने।

## ६८६। वेत्तेः कीपं ठीपं वा।

वेत्ते ५।, कीपं १।, ठीप १।, वा ।१।।

विदः परस्य क्याः पस्य ठ्याः पं स्याद्वा।

वेद विदतुः विदुः, वेत्थ विदथुः विद, वेद विद्व विद्म। पक्षे सुगमम्।

## ६८७। ङाम् वा ठ्यां ग्यान्तु क्रनु।

ङाम् ।१।, वा ।१।, ठ्या ७।, ग्या ७।, तु १।, क्र ।१।, अनु ।१।।

वेत्तेः ठ्या ङाम् वा स्यात् ग्यान्तु क्रञ एवानुप्रयोगः।

## ६८८। तन्भ्यः शुप् रे घे।

तन्भ्य' ५॥।, शुप् ।१।, रे ७।, घे ७।।

विदाङ्करोतु वेत्तु।

## ६८९। क्रञोऽदणौ रे।

क्रञ ६।, अत् ।१।, अणौ ७।, रे ७।।

क्रञोऽकार उः स्यात् अणौ रे। विदाङ्कुरुताम्। वित्ताम् अविदुः अविदन्।

---

इक् इत्युक्तम्। अधिकग्रहणमन्यपूर्वस्य केवलस्य च प्रयोगनिरासार्थम्। यथा अध्येति अधीतः अधियन्ति अध्यगात् अधीयाय अधीयतुरित्यादि। अधीयादियादौ तु सह यों र्घ इत्यनेनैव दीर्घं। एवं गमिनिङीरित्यादावपि अधिजिगमिषति इति बोध्यम्। समीतयोः राघवयोरधीयन्निति भट्टौ। अधीयन्निति तु आतिदेशिकमनित्यमिति न्यायात् इन्वदिक् इत्यस्यानित्यत्वात् यिणोऽच्यणावित्यस्याप्राप्तौ शुध्वोरिति इयि कृते सिद्धम्। प्रणियातीति सोद्दनवायेति णत्वम्। अस्यदिति वक्ष्यस्येति ङे ससेचीत्यालोपः। प्रणिमाति पतपददामेति णत्वम्। मेयादिति दामागे इति ङे॥ ६८५॥

स्थानिवदादेश इति न्यायात् ठीपस्य कीपतुल्यत्वान्न ङित्वम्। न ङाम् न वा वेत्थेत्यादाविम्॥ ६८६॥

ङित्वान्न गुणः क्रनु इत्यनेन असभुवोरनुप्रयोगो निषिद्धः॥ ६८७॥

तनोति सनोति॥ ६८८॥

## ६९०। घ्यां सौ र वा दधोः।

व्या ७।, सौ ७।, र।१।, वा।१।, द-धी ६॥।

दधो. रेफः स्यात् वा सौ घ्याम्। अवेः अवेत्, अवित्तम् अवित्त। विदाम्बभूव विवेद। [१६२] अस ल भुवि।

## ६९१। लोपोऽस्त्यसोर्ङिद्रसो रघ्याम्।

लोप १।, अस्ति-अ-सी ६॥, ङित् र सौ ७॥, अघ्याम् ७।।

अस्तेरकारस्य ङिति रे, सस्य च से, लोपः स्यात्, न तु घ्याम्। स्तः सन्ति, असि, एधि, आसीत् आस्ताम्।

---

अत् उ इत्युभय लुप्तप्रथमैकम्। विदाङ्कुर्वतामिति विद ता डामि क्नोऽनुप्रयोगे शपि गुणे अकारस्य उ। रामानन्दकाशीश्वरौ तु क्नोऽकारस्य शपाव्यपहितस्यैव सम्भवाद्व्यवहितेऽपि स्यादित्याहतु। रामतर्कवागीशो न किमप्याह। केचित् अणो परे रे परे यस्मात् परोऽणुर्भवति तस्मिन् रे परे क्नोऽकार उ स्यादित्याहु। वस्तुतस्तु तथा वक्तव्ये पु स सन् खप्यस्परे इतिवत् क्नोऽणपरे रे इत्येवाददिष्यत्। किञ्च नास्ति णर्यस्य स्थाने सोऽण तस्मिन् अणाविति रे इत्यस्य विशेषणम्। शपी गुणाभावादत शवेव अगुणी र इत्यर्थ। अविदन्नित्यादि डिपविद्दीति उस वा॥ ६८९॥

अवेरिति शपी लुकि हसाद्यामिति सेर्लोपे त्यलोपे त्यलक्षणमिति दकारस्य रेफपक्षे विसर्गे। एव रुधिर्धेञ्जि अरुणरित्यादि एवञ्च गृधिर्यु इत्यस्य यङ् लुकि घ्या सौ जरीगृध इत्यस्मात् हसाद्यामिति सेर्लोपे विराममाश्रित्य झभान्तस्येति गस्य घत्व त्यलोपे त्यलक्षणमिति न्यायात् गुणे अजरीघर्ध इत्यस्य धकारस्यानेन रेफे ढ्रौढ्रौति पूर्वरेफस्य लोपे तत्पूर्वस्य दीर्घे रेफस्य विसर्गे अजरीघा रीणो रिगिरणि च कृते अजरिघा अजर्घा। एव वृधु अवरीवा अवरिवा अवर्वा घोऽनित इति दीर्घे तर्द अताता नर्द अनाना स्पर्द्धङ् अपास्पा. पक्षे दधोरेफाभावे तु अवेत् अरुणत् अजरीघर्त् अवरीवर्त् अतातर्त् अपास्पर्त् इत्यादि॥ ६९०॥

अश्च स च असौ अस्तेरसौ अस्त्यसौ तयो। ङिच्चासौ रश्चेति ङिद्र ङिद्रश्च स च ङिद्रसौ तयो स इत्यनुकारान्तग्रहणात् सि से ख इति तयोर्ग्रहण तेन आसि व्यतिसे व्यतिस्व इत्युभयत्र ङिद्रपरत्वादकारस्य सकारपरत्वात् सस्य च

## ६९२ । भूररे ।

भू १।, अरि ७। ।

अस्तेर्भूः स्यात् अरे । अभूत् ।

## ६९३ । प्रादुर्गीकः सः षोऽच्ये ।

प्रादुर् गि इक' ५।, स ६।, ष १।, अच्-ये ७। ।

प्रादुःषन्ति प्रादुःष्यात् निषन्ति । [१६३] मृजू ल ष शुद्धौ ।

## ६९४ । मृजोऽकङिति त्रि वा त्वच्यणौ ।

मृज ६।, अकङिति ७।, त्रि १।, वा ।१।, तु ।१।, अचि ७।, अणौ ७। ।

अकङिति मृजो त्रिः स्यात् अणौ अचि तु वा । मार्ष्टि मृष्टः, मार्जन्ति मृजन्ति । [१६४] वच्लौ वाचि ।

[६५२] वचस्य ख्यिपतामिति वोच । अवोचत् । उवाच ऊचतुः ।

---

लोप । ङिद्रस्योरिति लिपिकरप्रमादपाठ. । किञ्च अरेर्भूः आदेशेनैव बाधितत्वात् ङित्ग्रहणेनैवेष्टसिद्धौ रग्रहण ज्ञापयति कदाचित् अरेर्भूः आदेशो न स्यादिति। तेन लावण्य उत्पाद्य इवास यत्न इति कालिदास । एधीति जह्येधीति एधिरादेश अध्या कि आसीत् आस्ता आसन् ॥ ६९१ ॥

विषयसप्तम्या से. सम्भावनाया भूरादेश । ठ्यामनुप्रयोगादन्यत्राप्यस्ते भूभावं केचित् नेच्छन्तीति धातुप्रदीप । अतएव लावण्य उत्पाद्य इवास यत्न इति कालिदास । केचित्तु असजदीप्ताविव्यस्य रूपम् । आस दिदीपे इत्यर्थ इत्याहु । अभूदिति भूस्थापिवेति सेर्लुक् ॥ ६९२ ॥

गेरिक् गीक् । प्रादुश्च गीक् च प्रादुर्गीक् तस्मात् । प्रादुरो गेरिकश्च परस्य अस्ते. सस्य य स्यादचि ये च परे । अच्ये कि प्रादु स्य. निस्य ॥ ६९३ ॥

कङावितौ यस्य स कङित् न कङित् अकङित् तस्मिन् । मृज इति मृजलूष शुद्धौ मृजुषकितु भूये चेति द्वयोर्ग्रहणम् । मार्ष्टि मार्जयति मार्जति किति मृज्यते ङिति मृष्ट । मृजोऽणौ त्रिरित्युक्तेऽपीष्टसिद्धौ अकङितीति कथमिति चेत् न सनि अनिम् पचे गुर्नानिमीति गुणनिषेधे मिमार्चतीत्यादौ वृद्धेरप्रसङ्गात् वच्लौ

[१६५] रुदिर् ल घ रोदने।

## ६९५। रुद्भ्योऽयो हस्रस्येम्।

रुद्भ्य ५॥, अय ६।, हस् रस्य ६।, इम् ।१।।

रुदादेः परस्य अयस्य हसस्य रस्य इम् स्यात्।

रोदिति रुदितः। अयः किं? रुद्यात्।

## ६९६। दिस्योरम् वा।

दिस्यो ६॥, अम् ।१।, वा ।१।।

रुदादेः परयोः दिस्योः अम् स्यात् वा। अरोदत् अरोदीत्, अरोदः अरोदीः। [१६६] ञि ष्वपौ घ लु स्वप्ने।

विस्वपिति। [६२५] सवत्वात् न षः विसुष्वाप टु'षुषुपतुः।

[६२५] निर्वस्वात् षः [१६७] अन घ लु स्वप्ने।

प्राणिति प्रानिति [१६८] श्वस घ लु प्राणने।

श्वसिति अश्वसीत्। [५७६] चणादित्वात् न ञिः।

[१६९] जक्ष च लु घभक्षहासयोः। जक्षिति।

---

इति वचौ वाचीत्यस्मादन्यस्तोर्न प्रयोग इति वक्तव्यम्। अवोचत् इति वक्ष्यतेति ङ वच्यस्म्वीति वोच्॥ ६९४॥

बहुवचन गणार्थं गणस्तु रुदाद्यस्तीत्यवोक्त। न य अय तस्य अय। हस् चासौ रश्चेति हस तस्य। अय कि रुद्यात्। हस कि रुदन्ति। अप्राप्तौ विधिरय रोदिष्यतीत्यादौ वसोऽरसेति इम् स्यादेव॥ ६९५॥

रुदादे परौ दिरिति घ्या एव ध्यान्तु सिव्यवधानादसम्भव। दिसाहचर्य्यात् सिरपि घ्या एव। अन्यथा घ्या कृतस्य सिप्रत्ययस्यापि प्रसजेत्। अरोददित्यादि। पक्षे रुदाद्यस्तीत्यनेन ईम्। ध्यान्तु इरित्वात् वा ङ अरुदत् अरोदीत् अरुद अरोदी.। विसुष्वापेत्यत्र टग्रस्थादेरिति नियमात् खेर्न षत्वम्। खिनिमित्तक मूलधातोः षत्व क्विलादित्यनेन स्यादेवेति गोयीचन्द्रादय। टु.षुषुपतुरित्यत्र बलवत्वादादौ जौ कृते षत्वे च कृते द्वित्वमिति। प्राणिति इत्यत्र वालननिंसेति णत्व वा॥ ६९६॥

## ६९७। अन्तोऽद्धेः।

अन्त ६।, अत् ।१।, द्वे ५। ।

द्वेः परस्यान्तोऽत्स्यात्। जक्षति। [५६३] अनुस्सिद्वे॰रिति, अजक्षुः। [१७०] जागृ क्ष लु जागरणे।

## ६९८। णुरुस्यठ्याम्।

णु १।, उसि ७।, अठ्याम् ७। ।

हेरुसि परे णुः स्यात् न तु ठ्याम्। अजागरुः अजागः। अजागरीत्। जागरामास जजागार।

## ६९९। जाग्रोऽणव्वीण्ङिति क्वसुकाने तु वा।

जाग्र ६। अ णप्-वि इण् ङिति ७।, क्वसु-काने ७।, तु ।१।, वा ।१। ।

जागर्तेर्णुः स्यात् न तु णपि वौ इणि ङिति च, क्वसौ काने तु वा। जजागरतुः। [१७१] दरिद्रा क्ष लु दुर्गत्याम्।

## ७००। दरिद्रो ङिर्हसेऽणौ हाम्भ्योस्तु वा।

दरिद्र ६।, ङि १।, हस्-रे ७।, अणौ ७।, हाम्भी ६॥, तु ।१।, वा ।१। ।

दरिद्रातेर्ङिः स्यात् अणौ हसे रे परे, हाम्भ्योस्तु वा। दरिद्रितः।

---

अन्त इति षष्ठ्रेक हसन्तनिर्देशादन्ति अन्तु इत्यादीनामपि। जक्षति जक्षतु ददति ददतु। चिकीर्षन्तीत्यादौ अपौ लोपे स्थानिवत्वान्नान्तोऽत्॥ ६९७॥

अजागरुरिति जक्षादित्वात् हिसञ्ज्ञाया अनुस्सिद्वेरिति अन उसि अनेन गुणः। ठ्यान्तु जुहवु। अजाग इत्यादौ गुणे सेर्लोपे रेफस्य विसर्गः। अजागरीदित्यत्र अजिश्विजागुरित्युक्तेर्न त्रि॥ ६९८॥

जाग्र इत्यत्र सूत्रत्वात् ऋतो ञ्णौ डुर्न स्यात्। णप् च विश्च इण् च ङिच्चेति णव्वीण्ङित् न णव् वीण्ङित् अणव्वीण्ङित् तस्मिन्। ञ्णौ जागरयति घञि जागर णमि जागर् जागर यकि जागर्य्यते यपि प्रजागर्य्य ढीपे जागर्य्यात्। णवादौ तु जजागार जागृवि: अजागारि अजागारिषीष्ट जागृत: जाग्रति। क्वसौ जजागर्वान् जजागृवान्। काने जजागराण, जजाग्राण.॥ ६९९॥

## ७०१ । आद्व्योरालोप्योऽणौ हसे त्वाद्दः ।

आ-द्व्यो ६॥, आ ।१।, लोप्य १।, अणौ ७।, हसे ७।, तु ।१।, ई ।१।, अद. ६। ।

आ इत्यस्य द्वेश्च आ लोप्यः स्यात् अणौ हसे तु दावर्जे मी स्यात् । दरिद्रति ।

## ७०२ । दरिद्र आलोपोऽसनकानेऽरे ध्यान्तु वा ।

दरिद्र ६।, आलोप. १।, अ-सन् अक अने ७।, अरे ७।, ध्यां ७।, तु ।१।, वा ।१। ।

दरिद्र आलोपः स्यात् अरे, न तु सनि अके अने च, ध्यान्तु वा । अदरिद्रीत् अदरिद्रासीत् दरिद्रामास ददरिद्र । ददरिद्रौ इति केचित् । दरिद्र्यात् । [१७२] चकास्ट च लु दीप्तौ ।

[६७१] हुझ्भसोर्हेर्धिः चकाधि । [६४] झप्झसोरिति सस्य दः । चकाद्धि ।

## ७०३ । ध्यां दौ त सः ।

घ्या ७।, दौ ७।, त ।१।, स ६। ।

ध्यां दौ परे सस्य त स्यात् । अचकात् ।

---

दरिद्रित. दरिद्रिथ । हसि किं दरिद्रति । अणौ किं दरिद्राति । हाग्म्योस्तु जहित जहीतः विभित विभीत ॥ ७०० ॥

रे इत्यनुवर्त्तते तेन यङि आख्यायते इत्यादौ न प्रसङ्ग । यथा क्रीणन्ति क्रीणते जहति मिमते ददति ददते दधति दधते दरिद्रति । हसे तु क्रीणीते जिहीते मिमीते अणौ किं क्रीणाति जहाति । दावर्जनात् दत्ते धत्ते ॥ ७०१ ॥

सन् च अकश्च अनश्चेति सनकान न सनकानम् असनकान तस्मिन् । न रोऽर' तस्मिन् । दरिद्रात् दरिद्रणीयम् अदरिद्रीत् पक्षे यमरमेति इम्सनौ । एवम् अदरिद्रि अदरिद्रायि । ददरिद्र इति क्षपि अन्तरङ्गत्वादादौ आकारलोपे आदन्तत्वाभावात् न डौ । नौमरास्तु डौ आदेश बलवन्त मत्वा ददरिद्रौ इत्युदाहरन्ति । दरिद्रामासेति दरिद्राकाश्चेति वाम् । सनादौ तु दिदरिद्रासति दरिद्रायकः दरिद्राणम् । चकाद्धीति द्वेर्धौ झप्झसोरिति सस्य द पक्षे धि सलोपो दा चकाधि ॥ ७०२ ॥

सुगमम् ॥ ७०३ ॥

## ७०४। सौ वा।

सौ ७।, वा ।१। ।

**अचकात् अचकाः। [१७३] शास च्च लु शासने।**

## ७०५। शासुङिद्वस्ङेऽणौ क्तौ त्वाशासश्च।

शास उङ् ।१।, इत् ।१।, ह्वस्ङे ७।, अणौ ७।, क्तौ ७।, तु ।१।, आशास ६।, च ।१। ।

**शास्तेरुङ इत्यादणौ ह्वसे ङे च, क्तौ तु शास आशासश्च। शिष्टः शाधि अशिषत्।**

**[१७४] चच्च ङ ल वदे। चष्टे।**

---

सस्य त स्याद्वा घ्यां सौ परे। अचकात् अचका ॥७०४॥

शास उङ् शासुङ् ह्वस् च ङश्चेति ह्वसुङ तस्मिन्। क्तौ त्वाशासश्चेति ग्रहणात् शासु इति शासच्च्लु शासने इत्यस्यैव ग्रहण तेन आशासु लङ इत्यस्य आशास्ते। शासु यथा शिष्ट' शिष्यते शेशिष्यते। क्तौ तु मितशी' आशी। शिष्ट इति आकारस्य इकार. शासवसघसेति षत्वम्। शाधीति ह्विसहितस्य शाध्यादेश। अशिषदिति शासलिद् द्यु दिति ङ ॥ ७०५ ॥

चच्चिङ् तृतीयस्वरानुबन्धोऽयमिति प्राञ्च'। अस्य इकार उच्चारणार्थ इति केचित् छन्दसि नुणागमार्थ इति केचित्। वेदेषूच्चारणभेदार्थ इति केचित्। वह-वस्तु तृतीयस्वरानुबन्धो लिपिकरभ्रमकारित एव किन्तु चतुर्थस्वरानुबन्धोऽय निष्ठाया इम् निषेधार्थ.। तेन वर्जनार्थे ख्याञ् क्साञादेशयोरप्राप्तौ आचष्ट वर्जनमित्याहु.। वस्तुतस्तु अस्येदनुबन्धो गणकृता नित्यत्वज्ञापनार्थ। तेन वचोऽपि परुषाक्षरं न च पदेषु ससज्जते इति शाकुन्तले। पथि यदि विपथे वा यत्र याम. कदाचिन्न हि तरुणि रुदीते धिक् पराधीनवृत्तिरिति नैषधे। सन्त शृणुध्वं हृदये कुरुध्व-मुत्क्षिप्य बाहू परिवारयामीति कण्ठाभरणे। इत्यादौ परस्मैपदिन आत्मनेपदम्। तालैः शिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे इति मेघदूते इत्यादावात्मनेपदिन श्टप्रत्यय.। न विश्वसेत् पूर्वविरोधितस्येति पञ्चतन्त्रे। आश्वसेयुर्निशाचरा इति भट्टौ। अदादेः श्नप्श्वितिरित्यादि। चष्टे इति स्सादे. सो लोप. इति क्लोपः।

## ७०६ । चचः क्साञ्ख्याञऽरेऽत्यागोससने ।

चच ६।, क्साञ् ख्याञ् ।१।, अरे ७।, अत्यागोससने ७। ।

चचः क्साञ् ख्याञ् स्यादरे न तु वर्जने उसि असि अने च । अक्सासीत् अक्सास्त, अख्यत् अख्यत । त्यागे तु समचचिष्ट ।

## ७०७ । ठ्यां वा ।

ठ्या ७।, वा ।१। ।

चक्सौ चक्से, चख्यौ चख्ये चचचे ।

[१७५] ईड ङ ल स्तुतौ । ईट्टे ।

## ७०८ । सध्वो रस्येम् जनोड़ीशः ।

स ध्व ६।, रस्य ६।, इम् ।१।, जन ईड ईश ५। ।

एभ्यः परस्य सस्य ध्वस्य च रस्य इम् स्यात् । ईडिषे ईडिध्वे । [१७६] आस ङ ल उपवेशने ।

आस्ते । [५८२ विंजादौत्याम् आसाञ्चक्रे ।

[१७७ वस ङ ल आच्छादने । वसिता वस्ता ।

[१७८] निसि ङ ल चुम्बने । प्रणिस्ते प्रनिंस्ते ।

---

चचः क्साञ् । क्साञ् च ख्याञ् च तत् न रोऽर तस्मिन् । त्यागश्च उस् च अस् च अनश्चेति त्यागोससनं न त्यागोससनम् अत्यागोससन तस्मिन् । वर्जनेऽर्थे उसादौ प्रत्यये विषये च न स्यादित्यर्थ । अरे इति विषयसप्तमी । तेन विभक्त्युत्पत्ते पूर्वं क्साञ्ख्याञौ । तयोर्ञानुबन्धत्वादुभयपदमिति क्साञ इति तालव्यमध्य इति पाणिनिक्रमदीश्वरौ । दन्त्यमध्य इति केचित् । तत्र षत्वाभावस्तु दन्त्यवदादेशविधानसामर्थ्यात् । अक्सासीत् इति यमरमेति इम्सनौ । अक्सास्तेति एकाजादन्तत्वात् नेम् । अख्यदिति वत्यस्येति ङ उखेवौत्यालोप उसादौ तु अचु. नृचचा विचचण. ॥ ७०६ ॥

चचः क्साञ् ख्याञ् च स्याद्वा ठ्याम् । विषयसप्तमीयम् । तेन आदावादेशे ञानुबन्धत्वादुभयपदम् । चक्सौ चक्से चख्यौ चख्ये चचचे । ईट्टे इति शपो लुक् झप्झसोरिति डस्य टत्वे ष्टुभिरिति तस्य टत्वम् ॥ ७०७ ॥

[१७९] षू ङ ल प्रसवे। सूते।

७०९। सूतेर्न णु र्ग्याम्।

सूते ६।, न ।१।, णु १।, ग्याम् ७।

सुवै। [५७३] वेमूदितीम् वा। प्रसविष्ट प्रसोष्ट।

[१८०] शी ङ् ल शयने।

७१०। शीङो रे णुः।

शीङ ६।, रे ७।, णु १।।

शेते शयाते।

७११। मान्तो रम् विदस्तु वा।

मान्त ६।, रम् ।१।, विद ५।, तु ।१।, वा ।१।।

शीङ. परस्य मस्यान्तो रम् स्यात्, वेत्तेस्तु वा।

शेरते। अशयिष्ट। [१८१] अधी ङ् ल अध्ययने। अधीते।

७१२। गीङ ष्टौध्योर्वा।

गी ।१।, इङ ६।, ठौ ध्यो ७॥, वा ।१।।

इङो गी स्यात् वा टौध्योः परयोः। घत्वात् न णुः।

अध्यगीष्ट अध्यैष्ट।

---

जन इति जन्मलि चेत्यस्य ग्रहणम्। जनीत्यस्य श्नना व्यवधानात्। व्यतिजज्ञिष्व व्यतिजज्ञिध्वम् ईडिषे ईडिध्वे ईशिषे ईशिध्वे। अप्राप्तौ विधिरयं न तु नियमः। तेन जनिता ईडिता ईशिता इत्यादौ वसीरसेतीम् स्यादेव वस्ता वसितेति वेमसहेतीम् वा। प्रचिस्ते इति वालननिसनिन्देति वा षत्वम् ॥७०८॥

सूङल धातोर्णुर्न स्यात् ग्याम्। सुवै इति भ्रुभ्वोरित्युव् ॥ ७०९ ॥

अगुणनिमित्ते गुणनिमित्ते च रे इत्यर्थ ॥ ७१० ॥

मस्यान्त मान्त तस्य। शेरते सविद्रते सविदते। समोगमृच्छेत्यादिना आत्मनेपदम्। शीङ् साहचर्य्यात् विद इति अदादिक एव। तेन धौ विदङ् मीमासे इत्यस्य विन्दते इत्यस्य न स्यात्। अशयिष्टेति नेमेकाजेत्यव शीवर्जनादिम् ॥७११॥

## ७१३। ठ्यां गा अाङसनोस्तु वा।

ठ्या ७।, गा ।१। अाङ् सनी ७॥, तु ।१।, वा ।१।।

इङो गा स्यात् ठ्या, ञेः परे अङि सनि च वा।

अधिगजे अध्यगीष्यत अध्यैष्यत।

[१८२] दीधी ङं च्लु देवने दीप्तौ।

## ७१४। दीधीवेव्योन णुः।

दीधी वेव्य ६।, न ।१।, णु १।।

दीध्यै।

## ७१५। लोप्योऽन्तो य्योः।

लोप्य १।, अन्त' १।, य्यो. ७॥।

दीधीवेव्योरन्तो लोप्यः स्यात् यकारिवर्णनोः। अदीधिष्ट एवं [१८३] वेवी ङं च्लु ई ल-वत्। [१८४] द्विषी ञ ल वैरे।

[६७५] द्विषविदातोऽनुस् वा अद्विषुः अद्विषन्। अद्विष्ट अद्विक्षत्। [१८५] दुही ञल दोहने।

अधुक्षत् अधुक्षत अदुग्ध। एव [१८६] दिही ञल लेपने। प्रणिदेग्धि अधिक्षत्।

---

धंत्वान्न णु प्रथमोपस्थितङ्गस्य परित्यज्य दीर्घकरणादित्यर्थ। अध्यैष्टेति भूयोऽमिति पुनरम्॥ ७१२॥

अङ् च सन् च अङ्सनौ ञेरङ्सनौ अाङ्सनौ तयो। अाङ्सनोस्तु अध्यजीगपत् अध्यापिपत् अधिजिगापयिषति अध्यापिपयिषति॥ ७१३॥

दीधी च वेवी चेति समाहारे दीधीवेवी तस्य। दीधीवेव्य इति षष्ठ्येक अन्यथा परसूत्रे यथासख्य स्यात्। एतयोर्णुर्न स्यात् सर्वत्र दीध्यै एव दीध्यनीय-मित्यादि। वेव्यै इत्यादि॥ ७१४॥

य च इश्च यी तयोः। दीध्यते अधीधिष्ट दीर्वे तु दीधीत इत्यादौ अन्तलोपा-भावे अुध्वोरिति यकारापत्ति. स्यात्। एव वेवीङ्। ईलुग्य्योरित्यनेनैवेष्टसिद्धौ

[ १८७ ] ऊर्णुं ञ आच्छादने ।

## ७१६ । वोर्णोः पिद्धसे णुः ।

वा ।१।, ऊर्णो ६।, पित् हस् रे ७।, णु. १।।

ऊर्णोर्णुः स्यात् वा पिति हसे रे। ऊर्णोति ऊर्णौति (६८०) रपिद्धस्युत इति त्रिः ।

## ७१७ । घ्याम् ।

घ्याम् ७। ।

ऊर्णोर्णुः स्यात् पिति हसे घ्याम्। और्णोत् ।

## ७१८ । णूव्त्रिष्घ्याम् ।

णु उव् त्रि १। घ्याम् ७। ।

ऊर्णोर्णुः उव् त्रिः एते स्युः घ्याम् ।

और्णवीत् और्णुवीत् और्णावीत् ।

## ७१९ । नाजन्तादेरादिर्द्विः ।

न ।१।, अजन्तादेः ६।, आदि १।, द्विः १। ।

अन्तादिस्थिताचो धो-रादिर्द्विर्न स्यात् ।

---

लोप्योऽन्तो य्योरिति कृत ज्ञापयति दीधीवेव्योर्न कुत्रापि वृद्धिरिति तेन णके आदीध्यक आवेव्यक इति। एतयोर्वैदिकयोरपि पदसाधन सर्ववर्म्मानुरोधात्। अविष्टेति लविषौ ञ वेरे ञित्वात् आत्मनेपद स्यात् अविच्चदिति ह्रस्व इति सक् अधुक्षत अदुग्धेति गुहदुहदिहेति न सि सक् वा ॥७१५॥

ऊर्णोतेर्णु स्यात् पिति हसे रे। पिति किं ऊर्णुतः। यङ्लुकि। प्रोर्णोनोति प्रोर्णोनौति ॥७१६॥

नित्यार्थं विधानम् ॥७१७॥

णुश्च उव् च त्रिश्च णूव्त्रि.। सूत्रत्वात् पुंस्त्वम् ॥७१८॥

अचौ अन्तादौ यस्य सोऽजन्तादि. तस्य। यथा अटिटिषति इटिटिषति उचिखिषति इत्यादौ ॥७१९॥

## ७२०। स्थादौ नवद्रोऽये।

स्थादौ ७।, न-व द-र. ७॥, अये ७।।

स्थादौ स्थिता न व दरा द्विर्न स्यु र्न तु ये। ऊर्णुनाव।

## ७२१। ङिदिम् वोर्णोः।

ङि त् ।१।, इम् ।१।, वा ।१।, ऊर्णो ५।।

ऊर्णोः पर इम् ङित् स्यात् वा। ऊर्णुविता ऊर्णविता।

[१८८] ष्टु ञ ल स्तुतौ।

## ७२२। पिद्धस्रस्येम् ब्रुवो यङ्लुग्रुतुस्तोस्तु वा।

पित् हस्-रस्य ६।, ईम् ।१।, ब्रुव ५।, यङ्-लुक् रु-तु-स्तो ५।, तु ।१।, वा ।१।।

ब्रुवः परस्य पिता हसो रस्य ईम् स्यात् यङ्लुगादेस्तु वा। स्तवीति स्तौति, अभिष्टौति न्यष्टावीत् न्यस्तावीत्। अस्तोष्ट तुष्टुव। स्तविता स्तोता।

[१८९] टु क्षु ल क्षुते। क्षविता।

[१९०] रु ल ध्वनौ। रवीति रौति। रविता रोता।

---

स्थ संयोग. तस्यादि संयोगादि. तस्मिन् नश्च वश्च दश्च रश्च ते। न यः अय. तस्मिन्। संयोगादौ स्थिता नवदरा द्विर्नस्यु। यथा उन्दिदिषति उब्जिजिषति अड्डिडिषति अर्चिचिषति। अये इति यकारे परे ये नवदरा. ते यकारेण योगे संयोगादिस्थिता अपि द्वि. स्युरेवेत्यर्थः। यथा ऋ अरार्य्यते अर्य्यमाख्यातवान् आरिर्य्यत् इत्यादौ रेफस्यापि द्वित्वम्। अत्रापि अजन्तादेरित्यनुवर्त्तते। तेन अन्तादिस्थिताची र्धो स्यस्यादौ स्थिता ये नवदरास्ते द्विर्न स्युरित्यर्थः। अन्यथा द्राल दद्रौ दिद्रासति इत्यादावपि दकारस्य द्वित्वनिषेधः स्यात्। ऊर्णुनावेति ऊर्णुञादीनां नकार आदौ दन्त्य आसीत् पश्चात् रेफयोगात् मूर्द्धन्य। तेन रेफं हित्वा णु इत्यस्य द्वित्वे पूर्व्वनकारस्य तथैव स्थिति परनकारस्य तु निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् पुनर्दन्त्यत्वमिति॥ ७२०॥

ऊर्णुवितेति इमो ङित्वपक्षे स्नुभ्रोरित्युव्॥ ७२१॥

[१९१] तु ल वृत्ति-हिंसापूर्त्तिषु।

तौति तवीति। तोता तविता।

[१९२ ब्रू ञ्ल उक्तौ। ब्रवीति।

७२३। पञ्चतिप्पञ्चणब्वाहश्च।

पञ्च ।१॥, तिप् ।१॥, पञ्च ।१॥, णप् ।१॥, वा ।१। आह १।, च ।१। ।

ब्रुव' परेषां पञ्चानां तिबादीनां पञ्च णबादयो वा स्युः, ब्रुवश्चाहः स्यात्। आह आहतुः आहुः।

७२४। हस्त थि।

६।, त ।१।, थि ७। ।

आहो हस्य तः स्यात् थे परे। आत्थ आहथुः। पक्षे सुगमम्।

७२५। वचोऽरे।

वच १।, अरे ७। ।

ब्रुवो वचः स्यात् अरे। अवोचत् उवाच ऊचे।

---

पिञ्चासौ हस् चासौ रश्चेति पिङ्हस्र तस्य। यङ् लुक् यस्मात् स यङ्लुक् यङ्लुक् च रुश्च तुश्च स्तुश्चेति तस्मात्। वीभवीति वोभोति रवीति रौति तवीति तौति स्तवीति स्तौति। रुतुस्तूना छन्दस्येवेत्येके। अभिष्टौतीति गीरु इति षत्वम्। न्यष्टावीदित्यादि सुस्तुधीरितीमि निविपरिस्तनृजेति वा षत्वम्। पे किं अस्तोष्ट इत्यत्र आदौ गुणे ऋस्वपरत्वाभावात् न सिलोप.। तुष्टुवेति नेमसुमिति न इम्। स्तोतेत्यादि वेम्सहेतीम् वा चवितेति नेमेकाजेत्यत्र चुवर्जनादिम्। रौतेत्यादि रुदसुनीस्तब्ध्या इति वेम्। तोतेत्यादि वेम् सहेतीम् वा॥७२३॥

पञ्चाना तिपा समाहार पञ्चतिप् पञ्चाना णपा समाहार पञ्चणप् आहादेशो णबाद्यादेश पञ्च एव। स्थानिवदादेश इति न्यायात् णबादौ न द्वित्व यपश्च नेम् नाप्यतीतकालप्रतीति। तथाच प्राह स्म रामं भरतोऽपि धर्म्मग्रमिति भट्टि.॥७२३॥

पिङ्हस्रेस्येमित्यत्र ब्रुव स्वरूपग्रहणात् आत्थ इत्यत्र न इम्॥७२४॥

अरे इति विषयसप्तमी। तेन व्या वचादेशे सति वक्त्यस्य स्येति डप्रत्ययो

## ह्वादिः ।

---

[१९३] हुलि होमे ।

**७२६ । ह्वादिः रे द्विः ।**

ह्वादि १।, रे ७।, द्वि १। ।

ह्वादिर्द्विः स्यात् रे परे । जुहोति ।

**७२७ । ह्वो वच्यणौ ।**

ह ६।, व ।१।, अचि ७। अणौ ७।, ।

होरुकारस्य व् स्यात् अणौ अचि रे । जुह्वति जुहुधि ।

---

भविष्यतीति सम्भाव्य डप्रत्ययप्राप्तेः पूर्व्वमेव वचादेशः । अन्यत्र अरप्रत्ययोत्पत्तिसम्भाव्ये वचादेशः ; तत एवत्र ञ्णोञानुबन्धत्वात् उभयपदमिति । यथा अवोचत् अवोचत उवाच ऊचे ऊच्यात् वक्षीष्ट इत्यादि । विब्रूतिः कटको ब्राताजनैरिति तु अरविहितकार्य्यस्यानित्यत्वात् । एवं ब्रह्मी. कभाव इत्यनेन कप्रत्यये ब्राह्मणं ब्रूते ब्राह्मणब्रुवः । अतएव सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शतसाहस्रमसङ्ख्यं वेदपारगे इति पठन्ति ॥७२५॥

---

ह्वादिर्द्विः स्यात् रे परे । जुहोतीति रपिद्रस्युत इत्यत्र द्विवर्जनात् न त्रिः । ह्वादिस्तु । हुलि होमे ञिलिभी तु भये स्यात् ह्रील्नि तु लज्जे पृलि रच्चणे स्यात् । भीक्रहालि त्यजने ऋलि गत्या घृलि तु सेके दीपनक्षत्याम् । हलि बलात्करणे लिरु गत्या भल नि भर्त्सनकरणे द्युत्याम् । कित लि किलि ज्ञाने कथितस्तु निर्भावनकर्म्मणि विदित । धन लि धान्ये धिष लि ध्वनने जन्मलि च तु विदितौ जनने । निजिरलिर्ञो शौचे पोषे स्यात् विजिरलिञौ तु पृथग्भावे स्यात् । विषिर्लिञो तु व्याप्तौ व्याप्त्या दाञ लि दाने धाञ नि धृत्याम् । भृञ लि तु पोषणकर्म्मणि धृत्या माङलि शब्दे हाङलि गत्याम् । गालि स्तुत्या ह्वादौ पठिता विद्वद्भिरिति पञ्च च बुधविदिता इति ॥७२६॥

होरु. हुः तस्य । उवो बाधकोऽयम् । जुह्वति । अणौ कि जुहानि रे कि

## ७२८। पश्याम् वा भी ह्री भृ ह्वो श्न्याम्।

पश्याम् ।१।, वा ।१।, भी ह्री-भृ ह्वो ५।, श्न्याम् ७।।

एभ्य पश्याम् वा स्यात् श्न्याम्। जुहवामास जुहाव।

[१९४] ञि भी ङि भीत्याम्। बिभेति।

[७००] दरिद्रो ङिरित्यादि, बिभीतः बिभितः बिभ्यति बिभयामास बिभाय। [१९५] ह्री लि लज्जायाम्।

जिह्रयामास जिह्राय। [१९६] पृ लि पूर्त्तौ।

## ७२९। पॄभ्रादे ङिः खे रे।

पृ-ऋ-भृ आदे ६।, ङि १।, खे ६।, रे ७।।

पृ-ऋ भृ माङ-ह्वाङा खेङिः स्यात् रे। पिपर्त्तिः।

## ७३०। पुर्घौ वा।

पु' ६।, र्घ १।, वा ।१।।

पिपूर्त्तः पिपृतः। पपरतुः पप्रतुः।

[५७९] गुणत्वात् न एः। [१९७] ओहा कलि त्यागे।

जहाति जहितः जहीतः, जहति।

---

जुहवु। ननु ह्वो वचीति क्वतेऽपि गुणविधेर्विशेषत्वेन बलवत्वात् जुहवानीत्यादौ गुणस्यैव प्राप्तौ अणाविति सुखार्थमिति काशीश्वर। वस्तुतस्तु हुधातुसम्बन्ध्युकार-स्थानिकत्वादज्भावनिमित्तकत्वाच्च विशेषविधिना ह्वोवचीत्यनेन इङस्थानिक-त्वादज्झस्निमित्तकत्वाच्च सामान्यस्य गुर्घूङ्श्चेत्यस्य बाधित्वात् जुहवानि इत्यादौ वकारस्यैवापत्तिरिति अणाविलुक्तम्॥ ७२७॥

शिक्षाद्रसन्नाया विल पिलाद्गुण। बिभयामास बिभाय जिह्रयामास जिह्राय बिभरामास बभार जुहवामास जुहाव। बिभ्यतीति अन्तोऽद् वे॥ ७२८॥

पृश्च ऋश्च भादिश्च तत्तस्य। भादिस्तु भृप्रभृतिह्वादिगणसमाप्तिपर्य्यन्त इत्यत आह भृ माङ् ह्वाङामिति। पिपर्त्ति इयर्त्ति बिभर्त्ति मिमीते जिहीते। रे किं पपार इत्यादि॥ ७२९॥

पुरिति षष्ठेरकम्। खे रे इति च नानुवर्त्ततेऽनिष्टत्वात् पृलि पालने इति

## ७३१ । ह्राकोऽन्तलोपः ख्याम् ।

ह्राक ६।, अन्तलोप. १।, ख्याम् ७।

जह्यात् ।

## ७३२ । हौ ङा वा ।

हौ ७, ङा ।१।, वा ।१।।

ह्राको ङा स्याद्वा हौ । जहाहि जहिहि जहीहि । हेयात् ।

[१९८] ऋलिं गत्याम् । इयर्त्ति ।

[१९९] जन मलि ङ जनने । जज्ञिषे जज्ञिध्वे ।

[२००] निजिरौ ञ लि पोषणे शोधने च ।

## ७३३ । निजां खि रे गुः ।

निजा ६॥, खि: ६।, रे ७।, गु १। ।

निजविजविषां खेर्गुः स्यात् रे । नेनेक्ति नेनिक्तः ।

---

ऋखान्तस्य दीर्घ. स्याद्वा एव सर्वत्र । स्वमते ञिपॄलि तु पालने इति दीर्घान्ते स्थितेऽपि दीर्घविधानमस्य सर्वसम्मतत्वात् । पिपूर्त्त इति दीर्घ क्ते ऋदिरणा-विलुरिर्व्यंनच् तयीति दीर्घ । ऋखान्तमेव केचित् दीर्घान्त पठन्ति तेन पृथग् धातु-र्नोयम् । अतएव ऋखान्तग्रहणेनैवास्य ग्रहणात् पॄभादेरिति खेर्ङि । पपरतुरिति दीर्घपचे ऋतो गु । जहित इति दरिद्री ङिरिति ङि । जहीत इति आद्वो रिति ई । जहतीति अन्तोऽद् ई ॥ ७३० ॥

ह्राको ह् ख्यामिति क्तेऽपीष्टसिद्धौ अन्तलोपगौरव ज्ञापयति ह्राको ह्नसे रे परे आदौ द्वित्व पश्चात् कार्य्यान्तरमिति । तेन जह्यादित्यत्र आदौ द्वित्वे भभख-येति खेराकारस्य अकारः । अन्यथा प्रागच्कार्य्यादचि द्विरिति नियमेन पश्चात् द्वित्वे खेरदन्तत्वं न सम्भवतीति । एव जहित. जहीत इत्यादावपि आदौ द्वित्वे पश्चात् दरिद्रो ङिरिति ङि आद्योरिति ईश्च इति ॥ ७३१ ॥

जहाहीत्यादि आदौ द्वि: पश्चात् ङा ङि: ईश्च । इयर्त्तीति ऋलिं गत्यां पॄभादेरिति खेर्ङि· खेर्य्योरिति इय् मूलधातोर्गुण । एव इयृत इयृति । द्विपि ऐय: ऐयृताम् ऐयरु. । जज्ञिषे इत्यादि वैदिकत्वेन व्यत्ययादात्मनेपदे सर्व्वोरसे-डीम् ॥ ७३२ ॥

## ७३४। न ह्वुग्रङोऽचि।

न।१।, ह्वुग्रङ ६।, अचि ७।।

ह्वेरुङो णुर्न स्यादचि रे। नेनिजानि। रे किम्। निनेज।

एवं [२०१] विजिरौ ञ लि विवेके।

[२०२] विषि लिं व्याप्तौ। अविषत् अविचत्।

[२०३] डु दा ञ लि दाने।

प्रणिददाति। अद इत्यक्तोरालोपः। दत्ते।

## ७३५। ह्वो र्दा-धोर्दे-धे ह्वौ।

ह्वो ६॥, दाधी ६॥, दे धे।१॥, ह्वौ ७।।

ह्वेर्दाञो ह्वेर्धाञो दे धे च स्यात् ह्वौ। देहि।

## ७३६। स्था-दोर्डिंष्टौमे नणुः।

स्थादो ६॥, डि, १।, टौमे ७।, न।१। णु, १।।

स्था-दो डिः स्यात् टौमे, तस्य च न णुः। अदित अदिषाताम्।

[२०४] डु धा ञ लि धारणे पुष्टौ। प्रणिदधाति।

---

बहुवचनं गणार्थं गणश्च ह्वाद्युभयपदिसमापकपर्य्यन्त इत्यत आह निजविजविषामिति। किन्तु विजिर्लिं ञौ इति जान्तो यो धातु स विचिर्लिंञौ इति चान्त कैश्चित् पठ्यते। तेन विजग्रहणेनैव विचः प्राप्तौ विचोऽपि खेर्णुरिति बोध्यम्। नेनेक्ति वेवेक्ति वेवेष्टि। रे कि निनेज विवेज विवेच विवेष ॥७३३॥

नेनिजानि वेविजानि वेविचानि वेविषाणि। एवं यङ् लुकि लेलिह्वीति मोमुचीति नर्त्तीति। उङ कि जिह्रयाणि जुह्वानि पिपवानि यङ् लुकि नेनयीति बोभवीति चर्करीति। रे कि निनेज इत्यादि। अचि कि नेनेक्तीत्यादि। अविषदिति विषिर्लिंञौ शासलिद्द्युदिति ङ। पचे ह्वशष इति सक् अविचत्। प्रणिददातीति गदनदेति णत्वम् ॥७३४॥

दाधोरिति डुदाञलि डुधाञलि इति द्वयोर्ग्रहणम् अन्यथा ह्वौ परे दिला-

## ७३७। धो द धोऽन्तलोपे तथि।

ध ६।, द ।१।, धः १।, अन्तलोपे ७।, त थि ७।

धाञो दस्य धः स्यात् तथयोः परयोः, अन्तलोपे सति। धत्ते। धेहि। अधित। [२०५] टु डु भृ ञ लि भृतिपुष्ट्योः। बिभृतः बिभ्रति। बिभरामास बभार। [२०६] मा ङ लि शब्दे। प्रणिमिमीते मिमाते मिमते।

एवं [२०७] ओ हा ङ लि गतौ।

अदादि-पादः।

---

सम्भवात्। देश धेश देधे इति लुप्त प्रथमाद्विवचनान्त यथासङ्ख्यार्थम्। देहि धेहि ॥७३५॥

अत्र दासञ्चैव। प्रास्थित प्रास्थिषाताम् अदित अदिषाताम् अधित अधिषाता अणिदधातीति गदनदेति णत्वम् ॥७३६॥

धत्ते इति आहग्रोरित्याकारलोपे खेर्दस्य ध.। एव धत्तः धत्थ: इत्यादि धत्से धद्वे इत्यादौ तु झभान्तस्येत्यादिना दस्य ध'। धो द धोऽणौ तथि इति क्तेऽपीष्टसिद्धौ अन्तलोपे इति गौरवं कथमिति चेन्न यङ् लुकि दाधीत. दाधीतवान् इत्यत्र दा मा गै इत्यनेन ङौ आदेशे क्तेऽपि दस्य धकारापत्तेः। बिभरामासेति पञ्चामि खेङि। प्रणिमिमीते इति आहग्रोरिति ईः खेङिः पतपददामेति णत्वम्। एवम् आते—,मिमाते अन्ते—, मिमते। एव ह्वाङ लि जिहीते जिहाते जिहते ॥७३७॥

इति अदादिपाद.।

[२०८] दिव्‌ु क्रीडायाम्

७३८। दिव सु तुद रुध क्र्यादे र्यन् न्वनण्नाः शिद्घे रे ।

दिव—क्र्यादे ५।, यन्—ना १।।।, शित् ।१।।।, घे ७।, रे ७।।

एभ्यो घेऽर्थे यन् नु श्न नण् ना एते रे परे क्रमात् स्युः, ते च शितः। दीव्यति। [२०९] षिव्‌ु तन्तुसन्ततौ। निषीव्यति। न्यषेवीत् न्यसेवीत्। [२१०] नृती य नर्त्तने।

७३९। नृत् कृत् चृत् छृत् तृदोऽरसोऽसेरिम् वा।

नृत्—तृद ५।, अरस' ६।, असे ६।, इम् ।१।, वा ।१।।

एभ्यः परस्यारस्य सिवर्जस्य सस्य इम् स्यात् वा। नर्त्तिष्यति नर्त्स्यति। सौ तु अनर्त्तीत्। [२११] त्रसी य भये।

---

दिवश्च सुश्च तुदश्च रुधश्च क्रीश्चेति ते आदयो यस्य तस्मात्। यन् च नुश्च श्नश्च नण् च नाश्च ते। शित्करणात् रसज्ञाया अपिद्रत्वात् ङित्त्वे श्नादौ परे न गुणः। एते शपो बाधकाः। श्नषिति मूर्द्धन्यणकारानुबन्धो रुधादेरन्त्यादचः परो भवन्नपि शपं बाधते। अत्र प्रकृतिप्रत्यययोरर्थाभिधाने साहचर्य्यस्य अनेनैव सिद्धत्वात् शपबाधकानां श्यनादीनां साहचर्य्याच्च श्नोऽनुरोधात् क्र्यादेरित्यस्य षष्ठ्यन्तत्वेन वक्तुमुचितत्वेऽपि श्यनादीनामनुरोधात् पञ्चम्यन्तत्व विरुद्धधर्म्मसमवाये भूयसा स्यात् सधर्म्मकत्वमिति जैमिनिसूत्रात्। दीव्यति श्यनोऽङित्वात् गुणाभावे व्यंनच्तयोरिति दीर्घः। निषीव्यतीति षीक इति षत्वम्। न्यषेवीदित्यादि निविपरिस्वन्जेत्यादिना षत्वं वा ॥ ७३८ ॥

[५९४] क्रमक्लमेति श्यन् वा, त्रस्यति त्रसति। तत्रास त्रेसतुः तत्रसतुः। [२१२] जॄ इय्यं जरायाम् ।

जीर्य्यति। अजरत् अजारीत्। जेरतुः जजरतुः। जरीता जरिता।

[२१३] शो य निशाने।

## ७४० । यन्योशमादिमिदो लोपघंणु ।

यनि ७।, ओ-शमादि-मिदः ६।, लोप घं णु १। ।

ओकारस्य लोपः शमादेर्घो मिदेर्णुः स्यात् यनि। श्यति। अशात् अशासीत्। एवं [२१४] एवं छो य लूनौ।

[२१५] षो य नाशे। प्रणिष्यति। न्यषात् न्यषासीत्। सेयात्

[२१६] दो य छेदने। प्रण्यदात् देयात्।

[२१७] राध्यौ ण हिंसे।

रेधतु ररराधतुः। वधार्थः किम्, आरराधतुः।

[२१८] व्यध्यौ ताड़े। विध्यति। विव्याध, विविधतुः।

[२१९] पुष्यौल्ट पोषणे।

[५६५] शासुलिद्दुत् पुषादेर्ङष्टौपे इति ङः। अपुषत्।

[२२०] श्लिष्यौ ञ्लिट श्लेषे। अश्लिषत्। आलिङ्गने तु अश्लिक्षत्।

---

नृत् कृत्। नृतीय नर्त्तने कृती ध वेष्टे कृतीश्प छिदि इति द्वयम्। चृत् श हिंसे ग्रन्थे चृत् कि सन्दीपने इति द्वयम्। छृदुञधि दैवने छृद कि सन्दीपने इति द्वयम्। ऋदुञधिर्नादरे च। नर्त्तिष्यति नर्त्स्यति कर्त्तिष्यति कर्त्स्यति चर्त्तिष्यति चर्त्स्यति छर्दिष्यति छर्त्स्यति तर्दिष्यति तर्त्स्यति सौतु अनर्त्तीदित्यादि। जीर्य्यतीति ऋदिरप्याविति इर् व्यंनचतयीति दीर्घः। अजरदित्यादि शासलिट्-दुदिति ङे हृश्रोरिति गुणः। पक्षे सौ पे वृद्धिः। जजरतुरित्यादि ऋतोयः पक्षे खिलोपादि। जरीतेति वृतो वेम इति दीर्घः॥ ७३९ ॥

ओश्च शमादिश्च मिद च तत्तस्य। लोपश्च घंश्च णुश्चेति। श्यति दाति स्यति

[२२१] रध्यू ल्ट पाकहिंसयोः।

७४१। नुण् रधो मुचां नश्मस्जो रभलभोऽनठीमच्ये झस्यरठ्यचि।

नुण् ।१।, रध ६।, मुचा ६॥।, नश् मस्ज. ६।, रभ' लभः ६।, अनठीमचि ७।, ए ७।, झसि ७।, अरठ्यचि ७।

रधष्ठीवर्जेम्वर्जेऽचि। मुचादेरत्ये, नश मस्जोर्झसे, रभलभोरठोवर्जेऽचि, नुण् स्यात्। अरन्धत्। रधिता रद्धा। ठ्यान्तु ररन्धिव रेध्व, ररन्धिम रेध्म। [२२२] तृप्यूञिल्ट प्रीणने। अतर्पीत् अत्राप्सीत् अताप्सीत् अतृपत्। एव [२२३] दृप्यु ञिं हर्षाहङ्कारयोः। [२२४] मुह्यू ञिल्ट वैचित्त्ये।

मोहिता [१७८] मुहां घङ्वाभौ। मोग्धा मोढा।

---

स्यति शमादिश्च। शमु श्रमू दमुश्चापि चमु तमु भमुश्च क्लमुमदीति च मनीषिभिर्निगदित शमादिर्गण। शाम्यति श्राम्यति दाम्यति चाम्यति ताम्यति भाम्यति क्लाम्यति माद्यति। मिदस्तु मेद्यतीति। अशादित्यादि येशाच्छासाघ्रेति. सेलुक्। पचे यमरमेति इम् सनौ। प्रणिष्यति इति दामासीहन इति णत्वात् गौक इति षत्वम्। न्यषादित्यादि येशाच्छासाघ्रेति से पेलुक् वा अभ्यपीति षत्व सेयादिति दामा गे इति ङे प्रखदादिति भूस्थापिबेति सेलुक् पतपददामेति षत्वम्। देयादिति दामागे इति ङे। रेधतुरिति अनेकार्थत्वादिह राधेर्वधार्थत्वे विधिबलादातोऽप्येत्वम्। अरराधतुरिति। आराध्यते सेवार्थत्वात्। विध्यतीति ग्रहस्वपाद्योरिति जि.। विव्याधेति व्यथग्रहेति जि। विविधतुरिति व्यथग्रहेति खेर्जि ग्रहस्वपाद्योरिति मूलस्य जि। अश्लिषत् इति पुषादित्वात् ङ। अश्लिचदिति हशष इति सक् ॥७४०॥

न ठी अठी अश्चा इम् अठीम् नास्ति अठीम् यत्र अनठीम् अनठीम् चासौ अच्चेति अनठीमच् तस्मिन्। अनठीमचि रश्च ठी च रठ्यौ न रठ्यौ अरठ्यौ तयोरच् अरठ्यच् तस्मिन्। अनठीमचीति रध्यते ठीमि सामान्ये अचि च नुण् स्यादित्यर्थ। यथा ररन्धिव ·ररन्धिम ठ्या अचि ररन्ध अन्याचि रन्धयति अरन्धि रन्धनम्। अठीमिति तु रधादित्वादिमि रधिष्यति रधिता रधितव्यम्। किञ्च ठीमचि

[२२५] नशल्ट य नाशे ।

७४२ । नश नेश वा ङे ।

नश ।१।, नेश ।१।, वा ।१।, ङे ७। ।

प्राणेशत् प्राणशत् । नशिता प्रनंष्टा प्रनंष्टा । [५४९] अशान्तत्वात् न ण । [२२६] शम् श्य इर् उपशमे । प्रणिशाम्यति । [२२७ क्लम्य् भिर् ग्लानौ । क्लाम्यति क्लामति । [२२८] अस्यु इर् क्षेपे । आस्थत् । [२२९] यस्यु इर् यत्ने ।

यस्यति यसति, संयस्यति संयसति । अन्यत्र । प्रयस्यति । [२३०] लुभ्य इर् गार्द्ध्ये । लोभिता लोब्धा । [२३१] जीर् य मिदा स्नेहे । [मिद्यति । [मिदेर्गुः] [२३२] सू यो ङ सूतौ । असविष्ट असोष्ट । [२३३] ओ दीङ य क्षये ।

---

इत्युक्तोऽपीष्टसिद्धौ अचलादेव ठौम प्राप्तौ ठीमौ ग्रहणादेव अनिमौ वर्जने च त गौरव ज्ञापयति रध्यते पुषादित्वात ङे नुगि क्ते हसुङ न इत्यनेन नस्य लोपो न स्यादिति । तेन अरन्धदित्येव न च नुण्करणसामर्थ्यान् नलोपो न स्यात् इति वाच्य रन्धयतीत्यादौ नुण सामर्थकत्वात् मुचामिति बहुवचन गणार्थम् । गणश्च मुञ्चति लुम्पि लिम्पौ च विन्दि सिञ्चति क्वन्ततौ । खिन्दति. पु सतिश्चैव मुचादावष्टधातव इति । मुचादेरत्वे इति तुदादित्वात् जाते शप्प्रत्यये परे इत्यर्थः तेन मुञ्चनि इत्यादि । अन्यत्र घञि मोकः । नशमस्जोर्झसे नंष्टा नङ्क्ष्यति मङ्क्ता मङ्क्तु मङ्क्ष्यति । रमलभोस्तु रम्भयति अरम्भि आरम्भ. लम्भयति अलम्भि आलम्भ रठ्या रठौतु रभते रेभे लभते लेभे । अतार्प्सीदित्यादि ञ णि तृप्यू प्रीणने दि क्षणस्वेति सिपक्षे ऋकारस्य वृद्धिः । वद्रोऽकिदिति रेफपक्षे अत्राप्सीत् रधादित्वात् इम् गुणपक्षे अतर्पीत् पुषादित्वात् ङे अतृपत् । मोह्रितेति रधादित्वादिम् वा । पक्षे मुह्रादित्वात् घङि मोग्धाघङोऽप्राप्तिपक्षेऽन्तरङ्गत्वात् परत्वाच्चादौ गुणे ह्रोढौभाविति हस्य ढे ढभात्तथोर्धो ध इति तकारस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रि इति ढलोपे पूर्वङ्गस्वत्वाभावान्न दीर्घ मोढा ॥ ७४१ ॥

नश । नश् ल नाशे इत्यस्य नेश् स्याद्वा ङे । प्राणेशत् इत्यादि शान्तनशेति णत्वम् । नशितेति रधादित्वात् इम वा । पक्षे नशमस्ज इति नुमि शक्ताजेति

## ७४३। दीङश्च्यां यन् यबृणौ ङा सनि तु वा।

दीङ ६।, च्या ७।, यन् ।१।, यप्णौ ७।, ङा ।१।, सनि ७।, तु ।१।, वा ।१।।

दीङः च्या यन्, यपि णौ च ङा, सनि तु वा स्यात्। अदास्त दिदीये। [ २३४ ] जनी स्य ङ प्रादुर्भावे। जायते।

## ७४४। जनवधः सेममोऽक्रमवमाचमो-ञ्णित्क्रादिणि स्वोऽमयम विश्रमस्तु वा।

जनवध ६।, सेमम. ६।, अ-क्रमवमाचम ६।, ञ्णित् क्रादिणि ७।, स्व १।, अम-यम-विश्रम ६।, तु ।१।, वा ।१।।

जनो वधः सेमोऽमन्तस्य च क्रमवमाचम वर्जस्य स्वः स्यात् ञ्णिति क्रति इणि च, अम यम विश्रमस्तु वा। अजनि अजनिष्ट जज्ञे। [ २३५ ] दी पी ङ्य ऋ दीपने।

अदीपि अदीपिष्ट। एवं [ २३६ ] पूरी ङ्य प्यायने।

[ २३७ ] पद्यी ङ गतौ।

[ ६४२ ] पदस्तनीण् घे इति। प्रच्चपादि अपत्साताम्।

[ २३८ ] बुध्यौ ङ अवगमने। अबोधि अबुद्ध।

[२३९] नह्यौ ञ्य बन्धे। [२३७ नह्यो धड्भौ। अनात्सीत् अनद्ध।

इति दिवादिपादः।

---

षड् तस्य टत्वे प्रनष्टा। पक्षे तुणि मुह्यादित्वात् घडि दभादिति तस्य धे भाप् भसीरिति घस्य गौ नस्यानुस्वारे तस्य च ङकारे प्रनङ्धा अमान्तत्वात् न ण.। प्रणिशाम्यति इति वपवहभ्रमचौति णत्व शमादित्वात् दीर्घ.। क्राम्यतीति क्रमक्रमेति श्यनि शमादित्वात् दीर्घं। आस्यदिति असु इर चेपे वत्यस्येति ङे वच्यस्यस्विपतामिति अस्य। लोभ्या इत्यादि वेमसहेतीम् वा। मेद्यति इति यन्यौ अजादीति गुण। असविष्टेति वेमूदितीम् वा॥ ७४२॥

यप् च गुस्य यबृणु सूतत्वादेकत्व तस्मिन्। दिदीये दिदीयाते। यपि प्रदाय गुरिति गुणसाधनयोग्य'। अदास्त दास्यते दापयति दाता। सनि दिदासते दिदीषते। जायते इति ज्ञाजनेति जा॥ ७४३॥

---

[२४०] षु ञ न बन्धे ।

सुनोति अभिषुणोति सुनुतः सुन्वन्ति । [ ६३२ ] सुस्तु-धोरितीम् । व्यषावीत् । असविष्ट असोष्ट । सुषुविव । विसवि-ष्यति विसोष्यति । ५७२ स्यान्तस्त्वात् न षः ।

[ २४१ डु मि ञ न क्षेपे ।

७४५ । मिम्योर्यण्णौ ङाऽखललि लियस्तु वा ।

मिम्यो ६॥, यण्णौ ७, ङा ।१।, अ खल अलि ७।, लियः ६।, तु ।१।, वा ।१। ।

अमासीत् प्रण्यमास्त ।

---

जनश्च बध् च जनबध् तस्य कमश्च वमश्च आचम् च ते, न विद्यन्ते ते यत्र स तस्य । सेम् चासौ अम् चेति सेमम् तस्य । ञ च णश्च ञणौ ञणावितौ यस्य स ञणित् ञणिच्चासौ कृच्चेति ञणित्कृत् ञणितकृच्च इण् च ञणित्कृदिन् तस्मिन् । यथा व्यणि जन्य बध्य घञि जन बध णकि जनक इणि अजनि अवधि । सेमोऽमन्तस्य तु । घञादौ शम शमक अशमि । सेम कि गामुक अगामि । कामादेस्तु काम वाम आचाम । आचम कि चम विचम । अमादेस्तु अम आम यम याम विश्रम. विश्राम विश्रमग्रहणात् श्रम प्रश्रम इत्यादिषु नित्यम् । अजनीति पद स्तनीण् वे इति इण् । पक्षे स्यां सि अजनिष्ट जज्ञे इति हनगमेत्युङ् लोप । अदीपीति पदस्तनीण् वे इतीण् वा प्रण्यपादीति गदनदपतपदेति णत्वम् । ननु अमुड्ढेत्यादौ सेर्लोपे त्यलक्षणमिति न्यायात् भभान्तस्येत्यादिना वकारस्य भकार कथ न स्यादिति चेत् सत्य त्यलोपे सति त्यस्वरूपेण विहित कार्य्यं तदेव स्यात् न तु प्रत्ययस्य वर्णविहितम् इति । अनात्सीदिति अनिमत्वात् वृद्धि अनद्ध इति नद्धो धङ् भौ इति धङ् ॥ ७४४ ॥

इति दिवादिपाद ।

---

अभिषुणोति इति गीक इति षत्वे ष्रूर्ण इति णत्वम् । सुन्वन्ति य्वोरिति व । व्यषावीदिति सुस्तुधोरितीम् अस्यपीति षत्वम् । असोष्ट इत्यादि वेमुदितीम

[ २४२ ] चि ञ न चित्याम् ।

७४६ । चेः किर्वा सन् ठ्योः ।

चे' ६।, कि १।, वा ।१।, सन् ठ्यो ७॥ ।

चिकाय चिचाय । चिक्ये चिच्ये । [२४३] स्तृ ञ न स्तृतौ ।

७४७ । स्वादृ-ॠ-वृ-रस्कु वेंम् सन्मढीसेः ।

स्वादि-ऋत्-ॠत् वु' ५।, अस्कु' ५।, वा ।१।, इम् ।१।, सन्-मढीसि' ६। ।

स्कुवर्जं स्वाद्यृदन्तात् ॠदन्ताच्च वृञो वृङश्च सनो मे स्थितयोर्ढीस्योश्च इम् स्यात् वा । अस्तरिष्ट अस्तृत । स्तरिषीष्ट स्तृषीष्ट । [२४४] वृञ न वृतौ । अवारीत् । अवरीष्ट अवरिष्ट अवृत । ववरिथ ववृव । वरिषीष्ट वृषीष्ट । [२४५] धु ञ न कम्पे । [६२३] सुस्तुधोरितीम् । अधावीत् [२४६] हि न वर्द्धने गतौ । प्रहिणोति ।

---

सुषुविव इति रुदुसुनोख्व्या इति इम्निषेधात् नेमसुमिति नियमेन नित्यमिम् क्रिलादिति षत्वे भ्रुध्वोरित्युव् ॥ ७४५ ॥

डुमिञ् न क्षेपे मीङ्यतु मीञग् बधे मी कि गत्या विशेषानभिधानात् । एषां यपि गुणसाधनयोग्यप्रत्यये च ङा स्यात् । न तु खलि अलि च । लियस्तु यपि गुणसाधनयोग्ये च ङा स्याद्वा । यथा प्रमाय माता मानं मास्यति मापयति । खलवोस्तु दुर्मय मय लियस्तु प्रलाय प्रलीय लाता लेता इत्यादि ॥ ७४५ ॥

चे किर्वा स्यात् सनि ठ्याश्च । चिकाय चिचाय चिकीषति चिचीषति ॥७४६॥

स्व आदिर्यस्य स स्वादि स्वादिश्चासाहश्चेति स्वायृत् 'स्वायृच्च ॠच्च वृश्चेति स्वादृॠवृ तस्मात् । नास्ति स्कुर्यत्र सोऽस्कु तस्मात् । ढी च सिश्चेति ढीसि मे ढीसिः मढीसि । सन् च मढीसिश्चेति तस्य सर्वत्र पुत्त्वं सूत्रत्वात् । यथा तिस्तरिषति तिस्तीर्षति स्तरिषीष्ट स्तृषीष्ट अस्तरिष्ट अस्तृत । इगुडुरिति कित्त्वान्न गुणः । तितरिषति तितीर्षति तरिषीष्ट तृषीष्ट अतरिष्ट अतीर्ष्ट । विवरिषति वुवूर्षति विवरिषते वुवूर्षते वरिषीष्ट वृषीष्ट अवरिष्ट अवृत । अस्कु, कि सञ्चिकीर्षति सस्कृषीष्ट समस्कृत । अवारीदिति नेमेकाजा इत्यत्र वृवर्जनात् इम् । अवरीष्ट इति वृतो वें मी घं इति दीर्घः । ववरिथ इति नेस्तत स्थप इत्यत्र वृवर्जनात् इम् ।

### ७४८। ह्रेः खेरनङि घिः।

ह्रे. ६।, खे ५।, अनङि ७।, घिः १।।

खेः परस्य ह्रेर्घिः स्यात् न तु अङि। जिघाय।

[२४७] क्नवि न क्नतौ हिंसे।

### ७४९। क्नविधिव्योः क्नधी श्नौ।

क्नवि धिव्योः ६॥, क्न-धी १॥, श्नौ ७।।

क्नणाति अक्नखीत् [५६८] अतएबेदितो नुण्। चक्नख। क्नखिता क्नखग्रात्। [२४८] दन्भु न दम्भे। देभतुः ददम्भतुः।

### ७५०। श्रन्थ-ग्रन्थ-दन्भां थपि न-लोपो वा।

श्रन्थ-ग्रन्थ दन्भा ६॥, थपि ७।, नलोप १।, वा।१।।

देभिथ ददम्भिथ। [२४९] धिवि न प्रीतौ। धिनोति। [२५०] अशू ङ न व्याप्ति सङ्घत्योः। [५८०] स्यान्तादादिति खेरान्। आनशे।

इति स्वादिपादः।

---

जवर्वेति नेमसुम इति नित्य इमो निषध। अधावीदिति सुस्तुधीरिति इम्। प्रह्रि र्णोति इति मौनाह्निवानिति णत्वम् ॥ ७४७ ॥

जिघाय जिघीषति जेघीयते। अङि तु अजीह्वयत् ॥ ७४८ ॥

क्नविधिव्योर्विभक्त्युत्पत्ते पूर्वम् इदनुबन्धत्वात् नुणि क्नते तस्यापि धात्ववयवत्वात् श्नौ परे तत्सहितयोरादेश। क्नणोति इति ष्रुणं इति णत्वम्। अक्नखीदित्यादौ वकारस्य टृत्वत्लेन झसत्वाभावात् तस्मिन् मोर्नुरित्यनेनानुस्वारो न स्यात् ष्रुणं इति णत्वम्। देभतुरिति स्यात् ठ्रपिदिति कित्वपत्ते नलोपे दभभागलाभात् खि-लोपादि ॥ ७४९ ॥

एभ्यस्थप् कित् वेति क्नतेऽपीष्टसिद्धौ थपि नलोप इति गौरवम् कथमिति चेन्न दभिक्नोदे इति इदनुबन्धचुरादेर्नैरनित्यपत्ते देभिश्च इत्यत्र थप किदेति पत्ते इदि-त्नातोर्नलोपनिषधात् ह्मुङ् न इत्यस्याप्राप्तौ चुरादेर्नैरनित्यत्ववीजं चुर्भ्यो जिरित्यत्र द्रष्ट्य स्पष्टायम्। श्रथिथ शश्रन्थिथ ग्रेथिथ जग्रन्थिथ देभिथ ददम्भिथ ॥ ७५० ॥

इति स्वादिपाद.।

[२५१] तुदौ ञ श व्यथे । तुदति तुदते ।

[२५२] भ्रस्जौ ञ श पाके । भृज्जति अभ्राक्षीत् ।

## ७५१ । भ्रस्जोऽरे णौ भर्ज वा ।

भ्रस्ज ६।, अरे ७।, णौ ७।, भर्ज ।१।, वा ।१। ।

बभर्ज बभ्रज्ज बभर्ज्ज बभ्रज्जे ।

[२५३] मुच लौ ञ श प मोक्षे ।

[७४१] नुण् रध इति नुण् । मुञ्चति । अमुचत्, अमुक्त ।

[२५४] ञि लिपौ ञ श प लेपने ।

अलिपत् । अलिपत अलिप्त । [२५५] षिचौ ञ श प क्षरणे ।

निषिञ्चति । न्यषिचत्, न्यषिचत न्यषिक्त । निषिषेच ।

[२५६] कृतौ शप छिदि ।

[७३८] नृत्कृदितीम् वा, कर्त्तिष्यति कर्त्स्यति ।

[२५७] यू श क्षेपे । विषुवति व्यषावीत् ।

[२५८] व्रश्चू श च्छेदे ।

वृश्चति । अव्रश्चीत् अव्राक्षीत् । वव्रश्च वव्रश्चतुः ।

---

तुदतोत्यादि शप्रत्ययस्य ङित्त्वात् न गुणः । भृज्जतीति ग्रहस्वपाद्योरिति जिः अभ्राक्षीदिति स्वादे सलोपे भ्रस्जाजेति षडि षढो कः से अनिमत्वाद् वृद्धि ॥७५०॥

भ्रस्जो भर्ज वा स्यात् अरे गुणसाधनयोग्ये । भ्रस्जधातोः परेऽप्रत्यये ञिणिते गुणिनो रस्यासम्भवात् एव णौ इत्युक्तेऽपि अरप्राप्तौ अरे इत्युक्त ज्ञापयति क्वचित् अरे गुणिन्यपि भर्जादेशो न स्यादिति तेन ट्राम् अभ्राक्षीदित्यादिकमेव । बभर्ज इति ठ्रा एकारस्य स्यात् व्यपित् किदेति कित्त्वाभावपक्षे गुणसाधनयोग्यत्वे सति भर्जादेश. पक्षे बभ्रज्जे कित्त्वेऽपि ठ्रा नवे प्रच्छामिति जेर्निषेध. । मुञ्चतीति मुचादित्वात् नुण् । अमुचदिति ऌदित्त्वात् ङ । अमुक्तेति आत्मनेपदे ङस्याप्राप्तौ सि. । औदित्वादिमोऽभावे इगुङ्करिति सेः कित्त्वान्न गुण ततः सेर्लोप. ।

[ २५९ ] ऋच्छश गमनमोहकाठिन्येषु ।

**७५२ । ऋच्छो णुठ्राम् ।**

ऋच्छ: ६।, णु: १।, ठ्राम् ७।।

आनर्च्छ । [ २६० ] कॄश विक्षेपे । [ ६२८ ] ॠदिरणाविति इर् । किरति । चकरतु: । करीता करिता ।

**७५३ । प्रत्युपोपात्क: सुम् हिंसाच्छेदे ।**

प्रति उप उपात् ५।, क. ६।, सुम् ।१।, हिंसा च्छेदे ७। ।

प्रत्युपाद्धिंसायाम् उपाच्छेदे किरते: सुम् स्यात् । प्रतिस्किरति उपस्किरति ।

---

अलिपदिति वक्त्यस्येति ङ. । अलिपत अलिप्तेति लिब्ध्यस्तु मे इति वा ङ । निषिञ्चति इति मुचादित्वात् नुण् गीक इति षत्वम् । न्यषिचतेति लिब्ध्यस्तु मे इति ङी वा निषिषेच दशस्यादेरिति षत्वम् । विषुवति इति गीक इति षत्व ञुध्वोरित्युव् । व्यषावीदिति वेमूदित्यत्र सूतिसूयग्रहणात् अस्मान्नित्यमिम् । व्रश्च तीति ग्रहस्वपाद्योरिति ञि. । अव्राक्षीदिति इमोऽभावपक्षे शक्रुजेति षडि निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायात् चकारनिमित्तकस्य शस्य पुनर्दन्त्यत्वे स्यादे सोलोप षढो क से इति के क्तिलादिति षत्वे अनिमत्वात् वृद्धि । वव्रश्चतुरिति ठ्रा नवेप्रच्छाम् इति ञेर्निषेध ॥ ७५१ ॥

ऋच्छो णु स्यात् ठ्राम् । सर्वत्र णपादौ बलवत्त्वादादौ क्षोऽच इति द्विर्भावे लघूङोऽभावात् अतुसादेश्च कित्त्वादप्राप्तौ ठौमात्रविधिरयम् । न च प्रकृते पूर्व पूर्वं स्यात् अन्तरङ्गतर तथा इति न्यायात् गुणस्यैव बलवत्त्वमिति वाच्यम् । विच्छायति इत्यत्र गुणादपि विशेषत्वेन द्विर्भावस्य बलवत्त्वदर्शनात् । आनर्च्छ आनर्च्छतु आनर्च्छुरित्यादि । चकरतुरिति ऋतो णु कित् ठ्राम् इति गुण । करीतेति वृतोवेमोर्घोऽठीति वा दीर्घ. ॥ ७५२ ॥

प्रतिश्च उपश्च प्रत्युप प्रत्युपश्च उपश्च प्रत्युपोप तस्मात् । हिंसा च छेदश्च हिंसाच्छेद तस्मिन् । प्रतिस्किरति हिनस्तीत्यर्थ । परि नि वि सेवसुसेति उक्तोर्न स्य उपस्किरति हिनस्ति छिनत्ति वेत्यर्थ. ॥ ७५३ ॥

[ २६१ ] तृन्प श प्रीणने ।

७५४ । तृन्पां न-लुक् वा श-णौ ।

तृन्पां ६।।।, न ।१। लुक् ।१।, वा ।१।, श-णौ ७। ।

तृन्प तुन्प तृन्फ तुन्फ रिन्फ गुन्फ दृन्भ उन्भ शुन्भां नकारस्य लुक् वा स्यात् शे णौ च । तृपति तृम्पति [२६२] चृती श प हिंसे । चर्त्तिष्यति चर्त्स्यति । [२६३] प्रच्छी श ज्ञीप्से । पृच्छति । अप्राक्षीत् । पप्रच्छ पप्रच्छतुः ।

[ २६४ ] सृजी श विसर्गे ।

अस्राक्षीत् । ससर्जिथ सस्रष्ठ । [२६५] टु मस्जी श स्नाने । मज्जति अमाङ्क्षीत् । [ २६६ ] स्पृशी श स्पृशि । अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । [ २६७ ] विच्छ श गतौ । विच्छायति विच्छति । अविच्छायीत् अविच्छीत् । [ २६८ ] मृशी श स्पृशि । अम्राक्षीत् अमार्क्षीत् अमृक्षत् ।

[ २६९ ] इषु श वाञ्छे ।

इच्छति [ ६०६ ] वेमसहेतीम् वा, एषिता एष्टा ।

---

बहुवचनं गणार्थं गणश्च । तृन्पतिस्तृन्फतिश्चैव तुन्फतिस्तुम्फतिस्तथा । गुम्फति-दृंन्फतिश्चैव रिन्फति शुन्भतिस्तथा । उन्भतिश्चैव विज्ञेयस्तृन्पादिर्नवभिर्गणः । एषां नस्य लुक् स्याद्वा शप्रत्यये परे गुणसाधनयोग्यप्रत्यये परे च इत्यर्थः । शे यथा तृपति तृम्पति तृफति तृम्फति तुपति तुम्पति तुफति तुम्फति गुफति गुम्फति दृफति दृम्फति रिफति रिम्फति शुभति शुम्भति उभति उम्भति । णौ यथा तर्पयति तृम्पयति तर्फयति तृम्फयति तोपयति तुम्पयति गोफयति गुम्फयति दर्फयति दृम्फयति रेफयति रिम्फयति शोभयति शुम्भयति ओभयति उम्भयति । गवि कर्त्तरि प्रात्तुन्-पतेः सुम्वक्तव्यः । प्रस्तुम्पति गौः । अन्यत्र प्रतुम्पति अश्वः । पृच्छतीति ग्रहस्वपाद्यो-रिति जिः । अप्राक्षीदिति अक्ष्राजीति षडि षढो. क. से कौ अनिमत्वात् वृद्धि । पप्रच्छतुरिति ठ्या नवेप्रच्छाम् इति जेर्निषेधः । अस्राक्षीदिति सृजदृशोस्तु नित्यमिति स्रद्र. । ततो वृद्धि. । ससर्जिथ इत्यादि सृजदृशेति वेम् । अमाङ्क्षीदिति नुषं रध,

[ २७० ] कुट श्नि कौटिल्ये ।

७५५ । कुटां णुञ्री ञ्णिति ।

कुटा ६॥, णु-ञ्री १॥, ञ्णिति ७।

कुटादेर्णुर्ञ्रिश्च स्यात् ञिति णिति च, नान्यत्र । अकुटीत् चुकोट । [ २७१ ] व्यच श्नि व्याजे ।

विचति । विव्याच, विविचतुः ।

---

इति नुण् स्यादे सीलोपं चुङ्ङिति कुडि नस्यानुस्वारे ञपे ञमौ । असाचीदित्यादि क्षषम्रषस्पृशेति सिर्वा वद्रीऽकिदिति ऋद्री वा सेरप्राप्तौ सक् । विच्छायतीत्यादि विच्छास्तुतिपण इति बाय । आयान्तत्वात् सनञ्याद्दिर्धु पुनर्धातुसञ्ज्ञाया तिप्शपौ आयस्याप्राप्तिपक्षे श एव । तेन विच्छायन्तो कुले स्त्री वा इत्यत्र अपयन इति नुण् । विच्छती विच्छन्ती कुले स्त्री वेत्यत्र आदीपोरिति नुण् वा । असाचीदित्यादि पूर्ववत् इच्छतीति स्यादानेति इच्छादेश ॥ ७५४ ॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य ञ्णित् तस्मिन् । ञित्णितौ, परयो गुणवृद्ध्यो सिद्धौ पुनर्विधान नियमार्थम् । तेन कुटादीना ञित्णिद्भ्याम् अन्यत्र गुणवृद्धी न स्त इति नियम । ञित्णितोस्तु गुणसामग्र्या गुण वृद्धिसामग्र्या वृद्धि स्यादित्यर्थ । यथा कुट श्नि कौटिल्ये इत्यादीना अकुटीत् कुटिष्यति कुटनमित्यादौ न गुणं । नू श्नि स्तवने इत्यादीनाम् अनुवीदित्यादौ न वृद्धिर्न च गुणं । अगुणत्वादुव् च । एवं नुविष्यति नुवनमित्यादौ च बोध्यम् । ञित्णितोस्तु कोटयति चुकोट इत्यादौ गुण एव । नावयति नुनाव इत्यादौ वृद्धिरेव । कुटादिश्च कुटि घुटि चुटि तुटि पुटति च्छुटयस्तुटि मुटि लुठि कुडति गुडय, घुडि चुडि तुडि थुडि भ्रुडति द्रुडय. स्फुडि वुडि लुडति स्थुडति स्फुडयः । व्यचश्निव्याजे कुचि गुजि हुडयं चुलि गुरति च्छुरति पुडि भ्रुडयः । स्फुरति स्फुलती क्रुड क्रुडि रुफयः । कूगूनूदीर्घा, सकला: कुवतिर्गुवतिध्रुवतिश्चैते ङसान्ता इति धीरो-क्तौ । द्वाचत्वारिंशत्सङ्ख्याता धातव एव कुटादावुदिता । लिखतिर्मिलतिश्चोविद्व कश्चित् व्यख्यातामिति वदति विपश्चित् । तेन लिखितुं विश्वस्रजोऽपि अक्षिहानिरित्यादि एवं लिखन लेखन लिखितव्य लेखितव्यम् इत्यादयः प्रयोगाः । एवं मिलिष्यति । महापातकिनः सम्मिलितव्य न तै, सह इत्यादि । एवञ्च

## ७५६ । व्यचो ञिरञ्णि दसि ।

व्यच ६।, ञिः १।, अञ्णिदसि ७। ।

विचिता । [ २७२ ] त्रुट श्रि च्छेदे । त्रुट्यति त्रुटति ।
[ २७३ ] स्फुर श्रि स्फूर्त्तौ । निष्फुरति निस्फुरति ।
एवं [ २७४ ] स्फुल श्रि स्फूर्त्तिं चलनयोः ।
[ १७५ ] नू श्रि स्तवने । अनुवीत् । नुनाव ।
[ २७६ ] मृ ङ श्र मृतौ ।

## ७५७ । मृङष्टीध्ये मम् ।

मृङ ५।, टीध्ये ७।, मम् १। ।

व्या व्यामत्ये च मृङो म स्यात् । [ ६२० ] ऋद्रिः श्रयक् ढीपे । म्रियते, अमृत, मृषीष्ट । एषु किम् । ममार, मरिष्यति ।

---

व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीर इति जयदेव' । विचतीति ग्रहस्वपाद्योरिति जि विविचतुरिति व्यथग्रहेति खेर्जि. ग्रहस्वपाद्योरिति मूलस्य जि ॥७५५॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् । ञ्णिच्च अस् च ञ्णिदस् तस्मिन् । व्यचो जि. स्यात् न तु ञिति णिति असि च । विचिता विचिष्यति विच्यते विव्याच विविचतु' । ञ्णिदसि तु व्याचयति व्याचक' उरुव्यचा त्रुट्यतीति क्रमक्लमेति श्यन् वा । निष्फुरति विस्फुर्भ्नेति षत्व वा । अनुवीदिति कुटादित्वात् गुणवृद्ध्योर्निषेधेऽस्नुध्वोरित्युव् ॥७५६॥

टी च ढी च अत्र टीध्य' तस्मिन् विषयसप्तमीयम् । मृङो ङित्वेऽपि व्या व्याम् अत्ये च विषये म स्यादिति नियम । म्रियते म्रियेत अमृत मृषीष्ट अन्यत्र ममार मर्त्ता मरिष्यति अमरिष्यत् केचित्तु मृङो ङानुबन्धाभावेऽपि टीध्ये मविधानादन्यत्र परस्मैपदे सिद्धे ङित्करणादात्मनेपदस्य प्राप्तौ परस्मैपद कुत्रचिद्भवति । आत्मनेपदमिच्छन्ति परस्मैपदिना क्वचिदिति न्यायो लभ्यते तेन स एवाय नागः सहति कलभेभ्य. परिभवमिति । विद्या धन मनुष्याणा मृतेऽप्यनुगच्छते इत्यादि सिद्धमित्याहु. ॥७५७॥

[ २७७ ] ओ विजी ङ श भी-कम्पे ।

७५८। विजेर्णुर्नेमि ।

विजे ६।, णु १।, न ।१।, इमि ७।।

विजेणु: न स्यात् इमि । अविजिष्ट ।

इति तुदादिपादः ।

इति प्रथम चतुर्गणाध्यायः ।

---

अथ द्वितीय चतुर्गणाध्यायः ।

## प्रथमः पादः—रुधादिः ।

[ २७८ ] रुधिरौ ध ञि आवरणे । रुणद्धि ।

७५९। नणो न्रेऽणौ ।

नण ६।, न् ।१।, रे ७।, अणौ ७। ।

नणो नकारः स्यात् अणौ रे । रुन्धः रुन्धन्ति । अरुणत्, अरुणः अरुणत् । अरुधत् अरौत्सीत् । [ २७९ ] छृदु ञ धिर् देवने । [ ७३९ ] छर्दिष्यति छर्त्स्यति । एव [२८०] तृदु ञ धिर्नादरे ।

---

इति प्रथम चतुर्गणाध्याय ।

विजे' किदिमित्यनेनैवेष्टसिद्धौ णुर्नेमीति गौरव स्पष्टार्थम् । अविजिष्ट विजिष्यते विजिता ॥७५८॥

इति तुदादिपाद ।

---

रुणद्धीति रुध तिप् नण् ढभात्तथोरिति तस्य धे झप्झसीरिति धस्य दः ष्र्र्णं इति णत्वम् ।

अरे नणोऽसम्भवात् रे इति स्पष्टार्थम् । रुन्ध इत्यादौ दकारस्य वा लोप' । इति पूर्वमुक्तं नयाणामेकवर्ग्याणा मध्यमस्तत्र लुप्यते इति प्रमाणात् । णत्वाभाव-वीजन्तु ष्र्र्णं इत्यत्र लिखितम् । अरुणदित्यादि हसाङ्ग्रामिति सिर्लोपे झप्झसो-रिति धस्य तो दो वा । पक्षे घ्यां सौ रवादधोरिति धस्य रेफे रेफस्य विसर्गः। उभयत्र ष्र्र्णं इति णत्वम् । अरुधदित्यादि इरित्त्वात् ङौ वा । पक्षे स्या सौ औदित्त्वान्नेम् अनिमत्त्वात् वृद्धिः । छर्दिष्यतीति ऋतच्छदितीम् वा ॥७५९॥

[२८१] तृह धि हिंसे।

७६०। तृहः इण् पिद्धसे।

तृह ६।, इण् ।१।, पित् हस् रे ७।

तृहो नण इण् स्यात् पिति हसे रे। तृणेढि तृण्ढः तृंहन्ति। अतर्हीत् अतृक्षत्।

[२८२] हिंसि धि कि हिंसे।

७६१। नणो न लोप्यः।

नण ५।, न ।१।, लोप्य १।

हिनस्ति [२८३] अन्‌ज्‌धि ञि व्यक्ति गति म्रक्षणे। अनक्ति।

७६२। अञ्जः सेरिम्पे।

अन्‌ज ५।, से ६।, इम् ।१।, पे ७।

अन्‌जः परस्य से' इम् स्यात् पे। आञ्जीत् आनञ्ज।

[२८४] ञि इन्धी ङ धि दीप्तौ। इन्धाञ्चक्रे।

इति रुधादिपादः।

---

पिच्चासौ हस् चासौ रश्चेति पिद्धस तस्मिन्। अत्राप्यरे नणोऽसम्भवात् रे इति स्पष्टार्थम्। तृणेढीति तृह हिंसे तिप् नण् अनेन नणोऽन्त्याच' पर इण् तृणेहि इति स्थिते हो ढी भौ ढभात्थो ष्टुभिरिति ढ्रोढ्रौति। तृण्ढ इति नणोर्न्ऽणो इति नकारे ष्टुभिरिति णत्वम्। अतर्हीदिति नित्यमिम्। अस्योदित्त्व तुदादि-एव एव न रुधादिपत्ते अतएव कातन्त्रगणे रुधादौ तृहहिंसि हिंसाया इति तुदादौ तु तृ हू ङ् तृह तृनह्न हिंसार्था इति। कविकल्पद्रुमे तृहध् तृणह्न धि हिंसे इति रुधादिपत्तेऽप्यूदनुबन्ध केषाञ्चिदनुरोधात् ॥७६०॥

ननो न परो नकारो लोप्य स्यात्। हिंसि धि कि हिंसे हिनस्ति एव भञ्जधौ भनक्ति उन्दधौ उनक्ति अञ्जूधञि अनक्ति ॥७६१॥

ऊदित्त्वाडेमत्वे नित्यार्थं विधानम् आञ्जीत् से अन्यत्र अञ्जिष्यति अङ्‌क्ष्यति अञ्जिता अङ्‌क्ता आनञ्जेति स्यान्तादादीति खेरान्। इन्धीञिधङ इन्धे इन्धाञ्चक्रे इति विंजादीत्याम् ॥७६२॥

[ २८५ ] तनु ञ द विस्तृतौ।

तनोति तनुतः तन्वन्ति, तन्वः तनुवः तन्मः तनुमः।

## ७६३। सेर्लुक् त-थासो स्तन्भ्योऽकुर्वा।

से ६।, लुक् ।१।, त-थासो ७॥, तन्भ्य ५॥।, अकु ५।, वा ।१।।

कुवर्जात् तनादेः सेर्लुक् स्यात् वा त-थासोः परयोः। अतत अतनिष्ट, अतथाः अतनिष्ठाः। [ २८६ ] षनु ञ द दाने।

सनोति। असात असनिष्ट, असाथाः असनिष्ठाः। सायात् सन्यात्।

[ २८७ ] क्षणु ञ द वधे। अक्षणीत्।

[ २८८ ] क्षिणु ञ द हिंसायाम्।

## ७६४। नोप्युङो णुर्वाल्वृतः।

न ।१।, उपि ७।, उङ ६।, णु १।, वा ।१।, तु ।१।, ऋत ६।।

क्षिणोति। [२८९] ऋणु ञ द गतौ। ऋणोति अर्णोति।

[ २९० डु कृ ञ द करणे। करोति।

---

तनोति इति तन्भ्य. ग्रमे घे इति ग्रप् तन्व इत्यादौ नुपोऽस्येति उकार-लोपो वा।

तश्च थास् च तथासौ तयो'। थास् साहचर्य्यात् तकार आत्मनेपदस्यैव ग्राह्य। अन्यथा तकारमात्रप्राप्तौ परस्मैपदस्य तां त त एषु अतानिष्टाम् अतानिष्टम् अतानिष्ट एष्वपि प्रसक्तं। किञ्च तयोरित्युक्तावपि यकारसाहचर्य्यात् आत्मनेपदीयत-कारस्यैव प्राप्तौ थास् ग्रहण स्पष्टार्थम्। अतत इत्यादि सेलुंकि वनतनाद्यनिसा अम् लोप.। लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायात् गुणि सौ परे विहितस्य कार्य्यस्य निषेधेऽगुणिनोस्तथासो परयो. अम्लोप'। अकु. किम्। अकृत अकृथा. उभयत्र इगुङुर्मढौसि. कित्वात् गुणाभावे झसस्वादिति सेर्लोप'। असा-तेत्यादि सेलुंकि खनसनजनामिति ङा। पक्षे सेरिम्। अक्षणीदिति ह्मादेः सेम इत्यत्र क्षणवर्जनात् न त्रि. ॥७६३॥

## ७६५। कुरुब्लोपो म्वोः।

कु ५।, उब्-लोप १।, म्वोः ७।।

कुर्वः कुर्मः, कुर्य्यात्। चकृव।

## ७६६। सम्परेः सुमुपात्तु भूषा-सङ्घ-प्रतियत्नविकृताध्याहारे।

सम्-परि ५।, सुम् ।१।, उपात् ५।, तु ।१।, भूषा-सङ्घ-प्रतियत्न-विकृताध्याहारे ७। ।

आभ्यां कृञः सुम् स्यात् उपात्तु भूषादावर्थे। संस्करोति, समस्कृषातां, सञ्चस्करिथ, सञ्चस्करिव, संस्क्रियात् सस्कृषीष्ट। परिष्करोति पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् उपस्करोति।

---

उपि परे उङ्गी गुणं स्यात् उङ ऋकारस्य तु वा। यथा चिणु दु ञ बधे चिणोति ऋतस्तु ऋणुदु ञ गतौ ऋणोति अर्णोति घृणुदु ञ दीप्तौ घृणोति घर्णोति तृणु दुञ भचे तृणोति तर्णोति। उङ् किं करोति॥ ७६४॥

म च व च य च म्वय्र तस्मिन्। कृञ परस्य उपो लोप स्यात् मे वे ये च। कुर्व इत्यादि वमयेषु उपो लोप.। व्यंनच् तयोःक इत्यत्र कुर्वर्जनात् न दीर्घ। करोमीत्यत्र स्वरादिग्रस्य बलवत्त्वात् गुण एव। चकृवेति नेमसुमिति निषेधात् नेम्॥ ७६५॥

सम् परिभ्यां कृञ सुम् स्यात्। अर्थानभिधानेऽपि भूषण एव कातन्त्रसचिन्नसारैकवाक्यत्वात्। भूषणादन्यत्र सकरोति परिकरोति। उपात् तु भूषणादौ भूषणमङ्गलकरण सङ्घ समूहः। प्रतियत्नो गुणान्तराधानं विकृत स्वरूपस्यान्यथात्वम् अध्याहारो वाक्यस्य अश्रुताकाङ्क्षितशब्दोपादानम्। समस्कृषाताम् इति स्याद्यूदृद्-रित्यत्र स्कवर्जनान्न वेम्। इगुङ्कर्मढौति सें किस्वान्न गुणः। सञ्चस्करिथेति नेमृतस्थप इत्यत्र स्कवर्जनादिम्। संस्क्रियादिति स्याद्यूर्त्तुग्रत इत्यत्र स्कृ स्कुव्यामेवेति उक्तौ गुणनिषेध ऋद्रि. श यकृढीपे इति रि। सस्कृषीष्टेति इगुङ्कर्मढौति से किस्वात् न गुणः। परिष्करोति इति परिनिविसेवेति षत्वम्। पर्य्यष्कार्षीदित्यादि निविप्ररिस्वनूजेति वा षत्वम्॥ ७६६॥

**७६७। हस्ते पाणौ प्राध्वं जीविकोपनिषदौ व्यस्य कृञि स-स्तिरो मध्ये पदे निवचने मनस्युरस्युपाजेऽन्वाजे साक्षादादेस्तु वा।**

हस्ते उपनिषद' ६।, व्यस ६।, कृञि ७।, स १।, तिरस्—साक्षादादे' ६।, तु।१।, वा।१।

हस्तेकरोति, तिरस्करोति करोति-तिरः।

इति तनादि पादः।

---

## तृतीयः पादः—क्र्यादिः।

---

[ २८१ ] डु क्री ञ ग द्रव्यविपर्य्यये।

क्रीणाति। [ ७८१ ] श्नाद्द्योरिति क्रीणन्ति।

[ २८२ ] स्कु ञ ग न उद्धृतौ।

हस्ते इत्यादिरुपनिषदन्तस्याऽव्ययस्य कृञ्धातौ परदे नित्य समासः स्यात् तिरःप्रभृतेस्तु वा। समासोऽप्येकपदीभावमात्रम्। न तु द्वन्द्वादिरेकतम। समासकरणञ्च पूर्वनिपातनियमार्थं क्त्वो यवर्थञ्च। हस्ते पाणौ स्वीकारे। हस्तेकृत्य स्वीकृत्य इत्यर्थः। ता हस्तेकृत्यमान्वसौरिति भट्टि। प्राध्वं बन्धनानुकूल्ये प्राध्वंकृत्य। जीविकोपनिषदौ उपमायाम्। जीविकाकृत्य जीविकामिव कृत्वा इत्यर्थः। तिरोऽन्तर्द्धाने तिरस्कृत्य। उरसि मनसि मध्ये पदे निवचने इति पञ्चानुपश्लेषे उरसिकृत्य उरसिकृत्वा। अनुपश्लेष इति किम्। उरसिकृत्वा हस्तं शेते पदे कृत्वा शिरः शेते श्वा। उपाजे अन्वाजे दुर्बलस्य बलाधानार्थे साक्षादादेरभूततद्भावे। साक्षात्कृत्वा साक्षात्कृत्य। साक्षादादिस्तु साक्षात् मिथ्या आस्था श्रद्धा अन्तर्द्धा प्रभाऽचला चिन्ता प्रमा प्रजा विजा रुजा रुहा मध्या नमस् आविस् प्रादुस् बहिस् इत्यष्टादश। अग्नौ वशे विकल्पने विहसने प्रपतनेऽर्थे इत्यादीनामपि वा समासमिच्छन्ति तोमराः। वशेकृत्य दशग्रीव मोदस्व वरमन्दिरे इति भट्टि॥ ७६७॥

७६८। स्कु स्कन्भु स्कुन्भु स्तन्भु स्तुन्भुभ्यः श्नुश्नौ घे रे।

स्कु—स्तुन्भुभ्य ५।॥, श्नु श्नौ १॥, घे ७।, रे।।

एभ्यो घेऽर्थे श्नुः श्ना च स्यात् रे परे। स्कुनोति स्कुनाति, विस्कभ्नोति [ ६२५ ] विस्कभ्नोति षः विष्कभ्नाति। एव विस्कुभ्नाति विस्कुभ्नोति, विष्टभ्नाति विष्टभ्नोति, व्यष्टभत् व्यष्टभ्नोत् वितष्टम्भ। स्तुभ्नोति स्तुभ्नाति। [ २९३ ] मी ञ ग बधे।

[ ७४५ ] मिम्योरिति ङा, अमासीत् अमास्त।

[ २९४ ] पू ञ गि शोधने।

७६९। प्वादेः ख्रो ने व्र्यादेस्तु वा।

पू आदे ६।, ख्र. १।, ने ७।, व्री आदे ६।, तु।१।, वा।१।।

प्वादीनां ख्रः स्यात् ना त्ये परे व्र्यादेस्तु वा। पुनाति।

[ २९५ ] कॄ ञ गि हिंसे।

अकरीष्ट अकरिष्ट अकीर्ष्ट। करिषीष्ट कीर्षीष्ट।

[ २९६ ] धू ञ गि कम्पे। धुनाति। अधावीत् अधोषीत्।

[ २९७ ] ग्रह ञ ग आदाने। गृह्णाति।

---

स्कु ञ अुद्धृतौ स्तन्भु स्कन्भु स्कुन्भु ञ रोधने इति चत्वार सौत्रा.। यः पूर्वधातुपाठे न दृश्यते सूत्रे दृश्यते स सौत्र.। विस्कभ्नातीत्यादि विस्कभ्नानिर्वेति सूत्रे श्नाप्रत्ययस्य ग्रहणात् विस्कुभ्नोतीत्यत्र न षत्वम्। विष्टभ्नातीत्यादि उभयत्र गौक इति षत्वम्। व्यष्टभदित्यादि। ग्रावखिदद्युदिति ङीवा उभयत्राप्यपीति षत्वम्। वितष्टम्भेति दम्भस्थादेरिति खिव्यवधाने षत्वम्। प्रमीणातीति णादि-ह्नमीनेति णत्वम् ॥७६८॥

ने श्नाप्रत्यये परे इत्यर्थ। प्वादिस्तु पूञगि शोधे लूञगि छेदे कॄञगि हिंसे, स्तॄञाच्छादे, धूञगि कम्पे, वृगिञ वरणे, भृगि स्तृगि ख्यातौ हनने। मृगितु धातुः कथितो इत्या पॄगितु रचे पूरणकत्याम्। वृगि व्रीगितु विदितौ हत्या दृगि विदारे

## ७७०। हसान्नानो हौ।

हसात् ५।, ना ।१।, आन १।, हौ ७।

हसात् परो ना आनः स्यात् हौ परे। गृहाण। अग्रहीत्।
जग्राह जगृहतुः जग्रहिथ।

## ७७१। ग्रहेरिमो घेंऽठ्याम्।

ग्रहे ५।, इम ६।, घं १।, अठ्याम् ७।

ग्रहेः परस्य इमो घः स्यात् न तु ठ्याम्। ग्रहीता।

[ २९८ ] शॄ ञ गि हिंसे।

## ७७२। शॄ पॄ द्रां स्वो वा कित् ठ्याम्।

शॄ पॄ द्रा ६॥।, स्व १।, वा ।१।, कित् ठ्याम् ७।

एषां स्वः स्यात् किति ठ्या वा। शशृतुः शशरतुः।

ञगितु नौत्या भृगित् भर्त्से जॄ वृद्धत्वे गॄगितु शब्दे ज्यागि जीर्णत्वे रीगि रेषणगतयोः क्रिगिगत्या लीगि श्लीगि श्लेषणक्रया व्रीगगि वरणे ल्वीगगि गत्या भ्रीगगि धातु कथितो भत्याम्। पञ्चाधिकविंशतिरिति गदिता प्वादिगणे धातव इह विदिता। इति। शेषास्त्रयो न प्वादय इति दुर्गसिंहः। प्वादय इति जैनेन्द्राः। उभयानुरोधात् त्र्यादेर्विकल्पः। ज्यागि जरायां इत्यस्य प्वादिफलन्तु जीनः जीनवानित्यत्र ल्वादित्वात् तस्य न। क्वचिन्नाप्रत्ययस्यापि ह्रस्व इति वररुचिः। स्मरणात् पुनते पापधारणात् पूर्वसञ्चितम्। दर्शनात् लभते मोक्षमेतद्योगस्य लक्षणमिति प्रयोग.। अकरीष्टेत्यादि स्वादृवृदृह्वुरिति इम् पक्षे वृतोवेम इति वा दीर्घः। इगुर्दृरिति से. किर्त्वे ऋकारस्य इरिव्यंनचतयोरिति दीर्घ। अधावीदित्यादि वेर्मूदिदितीम् वा॥७६९॥

ना आन इति चोभय लुप्तप्रथमैकं सूत्रत्वात् सिलुक्। गृहाणेति ग्रहज्यपाद्योर्गित त्रि.। आने कृते अकारादर्लोप.। एव पुषाण मुषाण इत्यादि। हसात् किं जानीहि। अग्रहीदिति हान्तत्वात् न त्रिः। जगृहतुरिति ग्रहज्यपाद्योरिति त्रिः॥७७०॥

ग्रहीता ग्रहीतुम्। ठ्यान्तु जग्रहिथ जगृहिव॥७७१॥

एवं (२९९-३००) ञि पॄ गि पालने, दॄ गि विदारे।
(३०१) ज्या गि जरायाम्। जिनाति जिज्यौ।
(३०२) व्री गि वृत्याम्। व्रिणाति व्रीणाति।
(३०३) ज्ञा ग बोधे। जानाति। (३०४) श्रन्थ ग मोचे।
श्रथ्नाति। श्रेथतुः शश्रन्थतुः श्रेथिथ शश्रन्थिथ।
एव (३०५) ग्रन्थ ग गर्भे। (३०६) कुष ग निष्कोषे।
(५७३) वेमूदितीम् वा, निरकोषीत् निरकुक्षत्।
(३०७) अश ग भोजने। अशिता अष्टा।
(३०८) वृङ ञ ग वरणे।
अवरीष्ट अवरिष्ट अवृत। ववृषे। वरिषीष्ट वृषीष्ट।
इति क्र्यादिपादः।

---

शॄगि हिंसने, ञिपॄगि पालने, दॄषगि विदारे एषां स्व स्याद्वा किति व्याम्। शशरतुरिति ह्रस्वाभावपक्षे ऋतो णु कित् ठ्रामिति गुण एव पप्रतु पपरतुः दद्रतु ददरतु.। व्रिणातीत्यादि ग्र्यादेस्तु वेति वा ह्रस्वः। जानातीति स्यादानेति जादेश'। श्रथ्नातीति हसुङ्न इति न लोप.। श्रेथतुरिति स्यात् ठ्रपिदिति कित् पक्षे न लोप खिलोपादिश्च। श्रेथियेति श्रन्थग्रन्थदन्भामिति न लोपपक्षे खिलोपादि। निरकुक्षदिति वेमत्वादनिम् पक्षे हशष इति सक्। अष्टेत्यादि वेमूसहेतीम् वा। अवरीष्टेत्यादि स्याद्वृदॄहु रिति इम् पक्षे वॄतीवेम इति वा दीर्घं। अनिम् पक्षे इगुङू रिति से. कित्त्वात् न गुण। ववृषे इति नेमसुमिति नेम्। वरिषीष्ट इत्यादि स्याद्वृदॄहु रिति वेम् इगुङु रिति कित्त्वात् न गुण.॥ ७७२॥

इति क्र्यादिपाद.।

# चतुर्थः पादः—चुरादिः ।

---

( ३०९ ) चुर ञि स्तेये ।

## ७७३ । चुर्भ्यो ञि र्वा ।

चुर्भ्यः ५।॥, ञि १।, वा ।१। ।

चुरादे र्ञिः स्यात् वा स्वार्थे । चोरयति चोरयते । अचूचुरत् । चोरयामास । चोर्य्यात् । पक्षे चोरति इत्यादि ।

---

वाशब्दस्य व्यवस्थावाचित्वात् चुरादिभ्यो ञिर्नित्यश्चुराद्यन्तर्गणाद् युजादेर्ञि र्वा स्यादित्यर्थः । यत्तु चुरधातोरपि पक्षे चोरतीत्याद्युदाहरणं तत्तु चुरादेर्ञेः कदाचिदनित्यत्वज्ञापनार्थम् । एतदेव काव्यकामधेनौ अकिम् लक्षणीत्यत्र स्फुटीचकार वोपदेवः । यथा सिद्धे नित्यणिजन्तत्वान्नित्यनुम्त्वे कितामिदित् । णिजनित्यत्वबोधार्थं न दृष्टोऽनुम् विधिः क्वचिदिति । अस्यार्थः—किता कानुबन्धधातुना नित्यणिजन्तत्वान्नित्यनुमन्वेऽगुणपरत्वाभावान्नलोपाभावे नित्यनकारवत्त्वे सिद्धे इदित इदनुबन्धकरणं णिचो ञे रनित्यत्वबोधार्थम् । किन्तु अनुम् विधिर्नाकारामाव क्वचिदपि न दृष्ट इति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात् चुरादेः स्वार्थे ञि । चुरादिभ्यो ञे र्ञित्वेऽपि उभयपदं न स्यात् अन्यथा यमञक् ञितर्कै इत्यादेर्ञानुबन्धो व्यर्थः स्यात् । तेन ञिच्चुरादेरात्मनेपदं ञितश्चुरादेरुभयपदम् उभयभिन्नचुरादेः परस्मैपदमिति । एवमेव धातुप्रदीपादयः । यत्तु चोरयति चोरयते इत्युभयपदोदाहरणं तद्धातुपारायणानुरोधार्थं कदाचित् प्रयुक्तस्यात्मनेपदस्य समाधानार्थञ्च यथा नालोकते यथेदानीं मामियं तेन तर्कये इति नैषधे । चोरयतीति चुर ञिः गुणः. धातुसञ्ज्ञायां तिप् शप् गुणाः । अचूचुरदिति चोरिभागात् टीविभक्तेर्दौ ञिश्रीत्यड् चोरीत्यस्य द्वित्वे रेर्लोपः. झभखयेति चेरोकारस्य उकारे अग्र्युङः स्व इति मूलधातोरोकारस्य ह्रस्वे स्वे सन्वदिति चेरुकारस्य दीर्घे ञेर्लोपः । चोरयामासेति विंञादीत्याम् । चोर्य्यादिति क्या ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् गुणः ॥ ७७३ ॥

[ ३१० ] कॄत क संशब्दे।

७७४। कीर्त्तः कॄतः।

कीर्त्त. १।, कॄतः ६।।

कॄतः कीर्त्तः स्यात् णौ। कीर्त्तयति।

[ ३११ ] गणत् क संख्याने।

७७५। हसाल्लोपोऽशित्यद्दयोः।

हसात् ५।, लोपं १।, अशिति ७।, अत् यो' ६॥।

हसात् परयोः अकार-यकारयोर्लोपः स्यादशिति। गणयति।

---

कॄत क संशब्दे इति धातु कीर्त्तः स्यात् सर्वत्र। कीर्त्तादेशस्य सार्वत्रिकत्वे कीर्त्तधातुपाठे नैवेष्टसिद्धौ कॄतधातु पठित्वा कीर्त्तादेशविधानं ज्ञापयति क्वचित् कीर्त्तादेशो न स्यात् इति। तेन अचीकृतदिति। क्रमदीश्वरोऽप्येवम् ॥७७४॥

अत च य च अद्यौ तयो'। अयोरिति लिपिकरप्रमादपाठः। अन्यथा इत् रहितेन अका सवर्णस्यावश्यग्राह्यत्वात् दास्यतीत्यादावाकारस्यापि लोपापत्तिः स्यात्। प्रकरणबलाद्धातुसम्बन्धस्यैव अकार यकारयोर्लोप तेन हसतीत्यादौ न स्यात्। हसात् किं? बीभूयिता अशिति किं ईर्ष्यति। अरे इत्यनेनैवेष्टसिद्धौ अशितीति गौरवं कथमिति चेन्न मव्यवन्धे इत्यस्य यङ् लुकि ण्या याति परे मंमव्यात् इत्यत्र यकारलोपानुपपत्तेः। गणयतीति अकारलोपे लोपोऽप्यादेश उच्यते इति न्यायेन स्थानिवत्त्वात् न वृद्धिः। एवं कुणत्क्वाभाषमन्त्रयोरित्यादीनां कुणयतीत्यादौ न गुणः। अतएव अल्लोऽपित्व स्थानिवत्त्व चादन्तत्वप्रयोजनम्। यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम्। तद्बलादन्त्यदीर्घश्च पुक्चेत्यज्ञापयत्यत इति वोपदेव'। अस्यार्थं अल्लोपित्व स्थानिवत्त्वञ्चेति उभयमदन्तत्वप्रयोजनम्। यथा अल्लोपित्वेन अजगवेषदित्यादौ न ह्रस्व सन्वद्भावौ स्थानिवत्त्वान्न गुणवृद्धी कुणयति गणयतीत्यादि यत्र तु एते न विद्येते अल्लोपित्वस्थानिवत्त्वयो प्रयोजनं न सम्भवतीति तत्र धातौ तद्बलात् अदन्तत्वस्वीकारबलात् अल्लोपविकल्पनम् अकारस्य स्थितिपक्षे 'दीर्घश्च पुक्च आदन्तत्वात् पण् च स्यादतोऽज्ञापयतीति सिद्धमिति केचित्। स्वमते तु अल्लोपित्वस्थानिवत्त्वयोः कार्य्यं येषु न स्यात् ते

## ७७६। वेङ्गणकथः खे ञंऽङि।

वा ।१।, ईङ् ।१।, गण कथ ६।, खे ६।, ञऽङि ७।।

गणकथयोः खेरीङ् स्यात् वा ञऽङि। अजीगणत् अजगणत्।

[ ६३९ ] अग्लोपित्वात् न इः।

[ ३१२ ] कथत् क वाक्यप्रबन्धे अचीकथत् अचकथत्।

इति चुरादिपादः।

इति द्वितीयचतुर्गणाध्यायः।

---

धातवो हसन्ता एव मन्तव्या'। तेन अङ्कापयतीति प्रयोग, स्वमतविरुद्ध इति बोध्यम्। न च स्वमतविरुद्धानां कामधेनौ उपन्यासोऽपि विरुद्ध इति वाच्यम्। अष्टाना मतान्यालोक्य कर्त्तव्ये परमतोपन्यासेऽपि दोषाभावात्। अन्यथा केषाञ्चिदसन्यमानस्य क्लञ् कृताविति भौवादिकस्यापि पाठो विरुद्ध' स्यात्। किञ्च यदि तन्मतेकवाक्यता क्रियते तदा अग्लोपविकल्पोऽल्यदीर्घश्च मनीषादित्वात् साध्य। यथा अङ्क ञि अकारलोपे अङ्कि टौविभक्तेर्दि अङ् नकारजावनुस्वारपञ्चमौ झलि धातुषु इति ङस्य न प्रकृतिकत्वे स्यादौ नवद्र इति ङकार छित्वा कि इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारत्वे तस्य च ञत्वे आञ्चिकदिति अत्र क्रसन्वद्भावयोरसम्भवात् नाग्लोपित्व' गुणवृद्ध्योरसम्भवान्न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽप्यकारलोपस्य स्थानिवत्त्व मन्वाना' क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत्कार्य्यमिति आञ्चकदित्युदाहरन्ति। अन्ये तु ङ्प्रकृति मन्वाना' ङ्कि इत्यस्य द्वित्वे कस्य लोपे आङ्किङ्कदित्याहु'। यकारलोपो यथा पापठ्य वावद्यादि यङन्तेभ्यः अस्यादः इति अप्रत्यये आदौ हसाल्लोप इत्यकार लोपे पुनस्तेनैव यकारलोपे पापचा वावदा इत्यादि॥ ७७५॥

गणकथयोः खि' गणकथखि, तस्य ईङ् स्याद्वा ञेः परेऽङि ङित्वा दन्त्यस्य स्थाने॥ ७७६॥

इति चुरादिपादः।

## प्रथमः पादः—अन्तः ।

---

### ७७७ । ञिः प्रेरणे ।

ञि १।, प्रेरणे ७।।

धो ञिः स्यात् प्रेरणेऽर्थे । कुर्वन्तं प्रेरयति कारयति । अचीकरत् । अशशासत्, अडुढौकत् । अशुशवत् अशिश्वयत् । व्यतस्तम्भत्, पर्य्यसोसिवत् । [ ५७२ साङ्गत्वात् न षः । अचीचकासत् अचचकासत् । औन्दिदत् औज्जिजत् आड्डिडत् आर्चिचत् अररम्भत् अललम्भत । अजीहयत्, [७४८] अनङ्गोत्युक्तेर्न घि. । अदिध्वनत् अध्वनयीत्, ऐलयीत् ऐलिलत्, आर्द्दयीत् आर्द्दिदत् औनयीत् औनिनत् ।

---

प्रेरणं त्वयैतत् क्रियतामिति क्रियासु नियोजनम् । यथा गुरुमन्न भोजयति भृत्यं ग्राम गमयति शिशु शाययति । अचेतने तूपचारः । यथा भोजनाभावो वायु वर्द्धयतीत्यादि । धोरिति व्याख्यान सर्वधातुप्राप्त्यर्थम् । तेन भवन्त प्रेरयति भावयति कामयमान प्रेरयति कामयति चिकित्सयति चोरयति चिकीर्षयतीत्यादि । प्रेरण ञे परोऽपि ञि । यथा पिता पुत्रेण शिष्य वेद पाठयति अत्र पुत्र पाठयतेरेव कर्त्ता न तु पठते तेन पुत्रस्य कर्म्मत्व न स्यात् ञित्त्वादुभयपद कारयति कारयते पूर्वसूत्रोक्तान्युदाहरति अचीकरदित्यादि । कुर्वन्त प्रेरित् इति ञौ अतएव ञौ द्वित्वे ञिरिति वक्ष्यमाणनियमात् द्विर्भावात् पूर्वं न वृद्धि । कृइ इति स्थिते धातुसञ्ज्ञाया दि अमागम ञिश्रीत्यडि कृइ इति वर्णद्वयस्य द्वित्वे खेराद्यच इति इकारस्य लोपे झभखयेति ऋकारस्य अकारे ककारस्य चकारे ञ्णित्यन्ते जुडतोरिति वृद्धौ आब्ध्युङ स्व इति आकारस्य ह्रस्वे. खे. सन्वद्धी इति सन्वत्त्वे स्यसेसनीति अकारस्य इकारे प्रीय खेर्ह्रस्वादेर्षश्चेति दीर्घे

७७८। स्मृदृत्वरप्रथम्रदस्तॄस्पशोऽङ्खेर्ञ्यङि चेष्टवेष्टो स्तु वा ।

स्मृ—स्पश ६।, अङ् ।१।, खे ६।, ञ्यङि ७।, चेष्टवेष्टौ ६॥, तु ।१।, वा ।१।।

एषां खेरङ् स्यात् ञ्यङि चेष्टवेष्टोस्तु वा। असस्मरत् अददरत् अतत्वरत् अपप्रथत् अमम्रदत् अतस्तरत् अपस्पशत् अचिचेष्टत् अचचेष्टत् अविवेष्टत् अववेष्टत् ।

ञेर्लोपे दस्य तकारो वा। एवं सर्वत्र। अशशासदिति ञ्यङ्ङ्ङ स इत्यत्र शासवर्जनान्न ह्रस्वः। अडुढौकदिति ऋदिद्वर्जनात् न ह्रस्व। अशूशवदिति प्रागच्कार्य्यादिति नियमादादौ द्वित्वे श्वेर्ञिर्वेत्यत्र वाशब्दस्य व्यवस्थया खेर्मूलस्य च ञिः ततो ब्वग्रादि पर्व न ञि'। व्यतम्नम्भदिति गुरुधात्वच्परत्वान्न सन्वद्भावादि माङन्तात् न ष। पर्य्यसीषवदिति साङन्तात्पर्य्यादिनिमित्तकं खे षत्वं न स्यात् खिनिमित्तकं मूलधातौ षत्वं क्वितादित्यनेन स्यादेवेति श्रीपतिदत्तः। एवं पर्य्यसीषहदित्यत्रापि बोध्यम्। अचचकासदित्यादि ऋदित्वादुङौ ह्रस्वाभावे अनेकाच्त्वात् सन्वद्भावादि विकल्पः। औन्दिददित्यादि उन्दभौ क्लेदे उज आर्जवे अदङ अभियोगे अर्चङ पूजे इति ञ्यन्तानां चतुर्णाम् उन्दि उजि अदृडि अर्चि इति स्थिते नाजन्तार्द्देरिति आद्यचरं द्वित्वा स्वादौ नवद्र इति न व द रांश्च द्वित्वा दि जि डि चि एषां द्वित्वम्। अररम्भदित्यादि तुण् रध इति तुण्वि गुरुधात्वच्परत्वात् न सन्वद्भावादि। अजीहयददिति ह्वेः खेरनङौत्यत्र अनङीत् उक्ते नंषिः। अध्वनयीदित्यादि मिध्वन रवे इलझ ध्रयी गतौ अर्दञ वधे ऊनक परिहाणे एभ्यो ञ्यन्तेभ्य श्वि धंट ध्वन्येत्यर्थ्यूनेस्तु वेति अङ् वा। पवे व्यां सौ अक्ङि श्विजागृञ्चिरिति निषेधात् न ञि ॥७७७॥

स्मृ स्मृतौ स्मृ म औत्के इति द्वयम्। दृयगि विदारे। ञिलर घमक्ष स्वदे। प्रथमयङ् चोदे स्तृङगि छादने स्पशञ ग्रन्थबाधयोः। एषां सप्तानां खेरङ् विधानसामर्थ्यात् स्यसेत्सनीति इ नं स्यात्। षीत्र सिर्द्दसादे षंसेत्यपि न स्यात्। चेष्टवेष्टोस्तु खेरङोऽप्राप्तिपक्षे गुर्वच्परत्वात् सन्वद्भावस्याप्राप्तौ तदेकयोगनिर्दिष्टत्वात् खेर्दीर्घोऽपि न स्यात् ॥७७८॥

७७९। भ्राज भास भास भाष दीप जीव मील पीड़ कण वण भण श्रण लप लुप लुट हेठां वोङः स्वः।

भ्राज हेठा ६॥, वा ॥१।, उङ ६।, स्व १।।

एषाम् उङः स्वः स्यात् वा ञ्रङि। अविभ्रजत् अबभ्राजत्।

७८०। वर्द्धुङो धुः।

वा ।१।, ऋदुङः ६।, धु १।।

ऋदुङो धोर्धुरेव स्यात् वा ञ्रङि। अवीवृतत् अववर्त्तत्।

७८१। स्वपो जिः।

स्वप ६।, जि १।।

स्वपो जिः स्यात् ञ्रङि। असूषुपत्।

---

भ्राज ङ ॠ टु भासि। भास ङॄ ऋटु भासि इत्यान्तस्तालव्यान्तोऽपि। भामॄ ङ दीप्तौ भाषङऋ वाचि। दीपीङय् दीपने। जीव ऋ प्राणे। मील ऋ निमेषे। पीड़ॄक बाधगाहे। कणॄ आर्त्तस्वरे। ॠवण शब्दे ॠभण शब्दे। श्रण क दाने। लप भावे। लुपॄ श्रप ऌ ञौ छेदे। ऋलुव्य विलोटविलोडयोः। हेठॄ ञ बाधे वोङ्क्षते। अविभ्रजत् अबभ्राजत् अबिभसत् अबभासत् अबीभसत् अबभसत् अबीभषत् अबभाषत् अदीदिपत् अदिदीपत् अजीजिवत् अजिजीवत् अमीमिलत् अमिमीलत् अपीपिडत् अपिपीडत् अचीकणत् अचकाणत् अवीवणत् अववाणत् अबीभणत् अबभाणत् अशिश्रणत् अशश्राणत् अलीलपत् अललापत् अलूलुपत् अलुलोपत् अलूलुटत् अलुलोटत् अजीहिठत् अजिहेठत्। कविकल्पद्रुमे भास-ङॄ ऋटु इत्यस्य सप्तमस्वरानुबन्ध श्रणक दाने इत्यस्य च अष्टमस्वरानुबन्धाभाव-कस्यचिदनुरोधात्। हेठे इत्यस्येह सूत्रे पाठः प्रमाणशून्य एव ॥७७९॥

ऋत् उङ् यस्य स ऋदुङ् तस्य। तस्य स्थाने तज्ञालादेशो ञ्रङि वा स्यादित्यर्थः। अवीवृतत् अववर्त्तत्। एवं अवीवृधत् अववर्धत् अमीमृजत् अममार्जत् अचीक्लिपत् अचकल्पत् कृति तु ऋदुङ् प्रकृतिकत्वात्। वा ग्रहणात् परत्र वाधिकारनिवृत्त्यर्थम् ॥७८०॥

## ७८२ । शा च्छा सा ह्वा व्ये वे पां औ यन् ।

शा—पां ६॥, औ ७।, यन् ।१। ।

एषां औ परे यन् स्यात् । शाययति पाययति ।

## ७८३ । ह्वेः पिवः पीप्यो ञ्राङि ।

ह्वे ६।, पिव ६।, पीप्य १।, ञ्राङि ७। ।

अपीप्यत् ।

## ७८४ । क्री व्ली रीक्नू य्यृ क्ष्माय्यातां पण् गुश्च औ ।

क्री—आतां ६॥, पण् ।१।, गु. १।, औ ७। ।

क्रेपयति व्लेपयति रेपयति क्नोपयति अर्पयति क्ष्मापयति स्थापयति ।

---

असुषुपदिति तु आदौ जि पश्चात् द्वित्वे घीश्च खेईसादेरिति दीर्घं. किलादिति ष. ॥७८१॥

शोय निशाने छोय लूनौ षोय नाशे ह्वेञ् स्पर्द्धे व्येञ वृतौ वेञ्वे स्यूतौ पा पाने पै शोषे इति द्वयम् । एषां सप्तानां औ यन् स्यात् निरवादन्ते । शाययति छाययति साययति ह्वाययति व्याययति वाययति पाययति ॥७८२॥

द्विभूतस्य पा पाने इत्यस्य पीप्य स्यात् ञ्राङि । पिवः किम् ? पै अपीपयत् । पाल रक्षणे अपीपलत् ॥७८३॥

क्रीञ् लज्जे व्लीगि गत्यां ओरीङष चरणे रीगि बधे गतौ इत्युभयम् । क्नूयीङ दुर्गन्धे ऋण हिंसे ऋर्लि गत्याम् ऋ प्रापे च इति द्वयम् । क्ष्मायीङ विधूनने इति एषामादन्तानाञ्च औ पण् स्यात् यथासम्भवं गुणश्च । क्रेपयतीत्यादौ यित्वादन्त्याच. परे पणि कृते पस्यापि धात्ववयवत्वात् लघूङीऽभावात् अप्राप्तौ गुणविधानम् । क्नोपयतीत्यत्र पकारात् परतया हलाल्लोप इति यलोप. । एवं क्ष्मापयतीत्यत्रापि । स्थापयति । आदिष्टादन्तानाञ्च ग्रहणात् दैङ् पालने दापयति डुक्रीञ् क्रापयतीत्यादि ॥७८४॥

## ७८५। स्थोङो अग्ङी:।

स्थोङ. ६।, अग्ङि ७।, इ १।।

तिष्ठतेः उङ इः स्यात् अग्ङि। अतिष्ठिपत्।

## ७८६। घ्रो वा।

घ्र ६।, वा ।१।।

अजिघ्रिपत् अजिघ्रपत्।

## ७८७। पाति-स्फायोर्लन्वङौ ञौ।

पाति-स्फायी ६॥, लन् वङौ १॥, ञौ ७।।

पालयति स्फावयति।

## ७८८। प्री-धूञोर्नन् वा।

प्री धूञी ६॥, नन् ।१।, वा ।१।।

प्रीणयति प्राययति, धूनयति धावयति।

---

स्था इत्यस्य उङ् स्थोङ् तस्य पथि कृते स्थाप इत्यस्य उङ इत्यर्थ। अतिष्ठिपदिति पथि कृते आकारस्य इकारे क्विलादिति ष ॥ ७८५ ॥

घ्राधातो, पथि कृते घ्रापभागस्य उङ इ' स्याद्वा अग्ङि। इकारे अजिघ्रिपदिति। इकाराभावपक्षे अग्ध्युङ स इति ह्रस्वे सन्वद्भावे खेरित्वे खेर्गुरुत्वात् दीर्घाभावे अजिघ्रिपदिति ॥ ७८६ ॥

पाल रक्षणे इत्यस्य लन् स्फायी ङ वृद्धावित्यस्य वङ् स्यात् ञौ ॥ ७८७ ॥

प्रीश्च धूञ्च प्रीधुवौ। प्रीधुवौ च तौ ञौ आनुबन्धौ चेति तयो। प्रीञ् तर्पणे प्रीणञ कान्तौ च इति द्वयो प्रीणयति प्राययति आनुबन्धग्रहणात् प्रीक तर्पणे इत्यस्य तु य प्राययन्ति कविसूक्तिरसायनानीति हलायुध। प्रीङय प्रीतौ चेत्यस्यापि प्राययति। धूञिक कम्पे इत्यस्य तु वायुर्विधूनयति केशरपुष्परेणूनिति हलायुध। अत्र स्वार्थविहितञेर्ञकारेण सम्बन्धात् नन। अन्यथा कम्प प्रेरणे धूनयतीत्यादि प्रयोगा न स्यु। धूनोत्यादीना साध्या इति चेत् तर्हि स्वभावात् कम्पप्रेरणार्थाना तेषा ञौ कृते कम्पप्रेरणस्य प्रेरणमेवार्थ स्यात्। किन्तु कम्पनाया धूनयतीत्यादीनामवश्यम्भावे अत्र वे सूत्रकार: प्राचीनमतानुरोधार्थ. ॥ ७८८ ॥

## ७८९। रुहः पङ् वा।

रुह ६।, पङ् ।१।, वा ।१।।

रोपयति रोहयति।

## ७९०। शदोऽगतौ तङ्।

शद ६।, अ-गतौ ७।, तङ् ।१।।

शातयति। गतौ तु गाः शादयति गोपः।

## ७९१। लाल्योर्लन् ननौ स्नेहद्रवे वा।

ला ल्यो ६॥, लन् ननौ १॥, स्नेहद्रवे ७।, वा ।१।।

लातेर्लन् लियो नन् स्यात् स्नेहद्रवेऽर्थे ञौ वा। विलालयति विलापयति। विलीनयति। [ ७४५ ] मिग्योरिति ङा वा, विलापयति विलाययति घृतम्। स्नेहद्रवे किं? लौहं विलाययति विलापयति।

## ७९२। वो जन् धूतौ।

व ६।, जन् ।१।, धूतौ ७।।

वातेर्जन् स्यात् कम्पने ञौ। वाजयति। धूतौ किं? केशान् वापयति।

---

रुजरुहौ जन्यामित्यस्य पङ् स्याद्वा ञौ। वा ग्रहणं परत्र वाधिकारनिवृत्त्यर्थम्। ननु रोहति रुह्य इर्विमोहे इति धौ रोहयति रोपयतीति सिद्धौ रुहः पङ् विधानं कथमिति चेन्न। रोपयतीति पदेन जननप्रेरणस्य बाधयितुमशक्यत्वात् ॥ ७८९ ॥

शदॢञौ शात इत्यस्य तङ् स्यात् ञौ न तु गतौ। शातयति वृक्षात् फलं लोकः पातयतीत्यर्थः। गतौ तु गाः शादयति गोपः अनेकार्थत्वाद्धातूनामयमर्थोऽपि ॥७९०॥

स्नेहस्य घृतादेर्द्रवो द्रवीकरणं स्नेहद्रवः। ला लय ग्रहे लीङ् द्रावणे इत्येतयोर्ग्रहणम् ॥ ७९१ ॥

वाजयति लता वायुः कम्पयतीत्यर्थः। धूतौ किं केशान् वापयति परिष्करोतीत्यर्थः ॥ ७९२ ॥

७९३। क्रीजीङोऽजा चि स्फुर प्रजनार्थवीनान्तु वा।

क्री जि इङ ६।, अच् ।१।, आ ।१।, चि-स्फुर-प्रजनार्थवी-नां ६।॥, तु ।१।, वा ।१।।

एषाम् अच आ स्यात्, औ च्यादेस्तु वा। क्रापयति जापयति अध्यापयति। अध्यजीगपत् अध्यापिपत्। चापयति चाययति। चपयति चययति। [७९८] मित्त्वात् ह्रस्व इति प्रक्रियारत्ने दृष्टम्। स्फारयति स्फोरयति। वापयति वाययति गाः पुरोवातो गर्भं ग्राहयति इत्यर्थः।

७९४। स्मिभ्यो घात् ध्वर्थे मश्च।

स्मिभ्यो ६॥, घात् ५।, ध्वर्थे ७।, म ।१।, च ।१।।

अनयोरच आ स्यात् घात् ध्वर्थे औ मश्च। विस्मापयते भापयते मुण्डः। घात् किम्। कुञ्चिकयैनं विस्माययति भाययति।

---

प्रजनो गर्भग्रहणम् अर्थो यस्य स प्रजनार्थः प्रजनार्थश्चासौ वीश्चेति प्रजनार्थवी। चिश्च स्फुरश्च प्रजनार्थवीश्च ते तेषां वीनामिति नुमागम सूत्रबात्। डुक्रीञ्ग द्रव्यविपर्य्यये जि जये अधीङ्ग् अध्ययने। एषामच आ स्यात् औ। च्यादेस्तु वा। अध्यजीगपदिति ण्या गा आङ् सनोस्तु वेति गादेशे पणि गापेर्द्वित्वे उङ्ह्रस्वादि। पचे इकारस्य आकारे आपि इति स्थिते नाजन्तादेरिति निषेधात् पि इत्यस्य द्वित्वे अध्यापिपदिति चापयतीत्यादि सुगमम्। स्फारयति स्फरतिनैवेष्टसिद्धौ स्फुरतेरुकारस्याकारविधान स्फरते कातन्त्राद्यसम्मतत्वात्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् सिद्ध्यते रिकारस्य औ परे आकार स्यात् अपारलौकिके। घट साधयति पद साधयति। अपारलौकिके किं? यज्ञ सेधयति॥ यावद् यते साधयितु तदर्थमिति रघौ। अपारलौकिकविवक्षया सिद्धम्। औमरास्तु लिखि वष्टि लस्जीना लिखाप वष्टाप लज्जाप औ वा। इत्यादिश्य लिखापयति लेखयति वष्टापयति वष्टयति लज्जापयति लज्जायति इत्याहु ॥ ७९३ ॥

विस्मयो भयञ्च यदि आत्मकर्त्तृहेतो प्रतीयते तदा अनयोरच आ स्यात् औ मश्च। मुण्ड इति मुण्डी मुण्डितमस्तको जन। एव विस्मापयते भापयते व्याघ्र। कुञ्चिकया एव जनं विस्माययति भाययति कुञ्चिका मत्स्यभेद एवं रूपेण त विस्माययति खड्गेन मा भाययति। विस्माययन् विस्मितमात्मवर्त्ती

## ७९५ । भीर्भीष् वा ।

भी ६।, भीष् ।१।, वा ।१। ।

भियो घ-भये भीष् स्यात् वा ञौ मश्च । भीषयते मुण्ड' ।

## ७९६ । दुषेरोदूः ।

दुषे ६।, ओत् ।१।, ऊ १। ।

दूषेरोकार ऊ. स्यात् ञौ । दूषयति ।

## ७९७ । चिद्विकारे वा ।

चिद्विकारे ७।, वा ।१। ।

दूषयति दोषयति चित्तम् ।

## ७९८ । घटादि जनी जृष क्नस रञ्जाम मारतोषनिशाननिशामार्थं ञ्णां स्वोऽकमामचमो ञौ्सामोस्तु घंश्च जागुश्च ।

घटादि—ञ्णा ६।।।, स्व १।, अकमामचम ६।, ञौ्सामों ७।।, तु ।१।, घं १। ।
च ।१।, जागु. ६।, च ।१। ।

घटाद्यादेरमन्तस्य माराद्यर्थं ञ्णश्च ञौ स्वः स्यात् न तु कमा-

---

।मर्द्दाकमन्व' निजगाद स्मित्ज इति रघौ । विस्माययन्निति विस्मायन विस्माय, विस्मायन करोतीति ञौ साध्यम् ॥ ७९४ ॥

भीषयते भापयते व्याघ्रः । घात् किं ? खड्गं न त भाययति ॥ ७९५ ॥

दृष्यौ वैकृत इत्यस्य ञिनिमित्तके गुणे कृत ओकारस्य ऊ स्यादित्यर्थः । अन्यथा दूषयं इत्यनेनैवेष्टसिद्धौ दुषेरोदूरिति गौरवं व्यर्थं स्यात् । यथा अधम्मात मन दूषयति दूषयामास दूषयिष्यति ञिनिमित्तके गुणे किं दोषण दोष घञ् दोष करोति दोषयति अत्र घञ्निमित्तकस्य ओकारस्य ऊत्वं न्यात् । दूषयमित्या दिकान्ं ञानास्य ॥ ७९६ ॥

चेततीति चित् मन. तस्य विकारश्चिद्विकार । तस्मिन्नर्थे दुषेर्ञौ कृते ओकार ऊ स्याद्वा । दूषयति दोषयति चित्त कोध इति शेष. ॥ ७९७ ॥

मचमा, ञेः परयोरिण् णमोस्तु घस्य जागुश्च ञ्णौ घः। घटयति व्यथयति प्रथयति, जनयति जरयति क्नसयति, रञ्जयति मृगान् रमयति, ज्ञपयति। कमादेस्तु कामयति आमयति चामयति।

---

मारश्च तोषश्च निशानञ्च निशामश्च ते। तेऽर्था यस्य स मारतोषनिशाननिशामार्थः। स चासौ ज्ञाश्चेति मारतोषनिशाननिशामार्थज्ञा। घटादिश्च जनोश्च जृषश्च क्नसश्च रञ्जश्च श्रमश्च मारतोषनिशाननिशामार्थज्ञाश्च ते तेषाम्। कम च अम च चम चेति कमामचम् न कमामचम् अकमामचम् तस्य इञ् च णम् च इणमौ। ञे परौ इणमौ ञेइणमौ तयो। घटषङ्म चेष्टे घटयति। घटक हिंसासङ्घातद्युतिषु इत्यस्य तु घाटयति कुलचन्द्राद्यनुरोधात् जनमलिचेत्यस्यापि मानुबन्धत्वे जनीति ग्रहणं प्राचीनमतानुवादार्थम्। जरयति जृषग्रहणात् जृगिकि ज्याने इत्यस्य जारयति क्नसुम्युङ्गतौ क्नसयति। रञ्जयति मृगानिति रञ्जमौञ रागे ञौ तु मृगरमणे इति नलोपे ञ्णित्यन्ते जुङ्तोरिति वृद्धौ ह्रस्व। रमयति एव गमयतीत्यादि सङ्क्रामयतीत्यादिकन्तु क्रम शत्प्रत्यये श्यपि क्रमः पेऽपीति दीर्घे सङ्क्रामन्त करोतीति ञौ टेर्लोपे साध्यम्। ज्ञपयति शत्रु शूरः मारयतीत्यर्थ। ज्ञपयति पुत्र पिता तोषयतीत्यर्थ। निशानं तीक्ष्णीकरणं ज्ञपयति खड्ग कर्म्मकार शीशासतीत्यर्थ। निशामो दर्शनप्रेरणं ज्ञपयति रूप कामिनी स्वीयगात्राणि दर्शयतीत्यर्थ। निशामो ज्ञानप्रेरणम् इति न्यासरक्षितौ। अतएव क्रमदीश्वरोऽपि जानातेर्घटादित्व विभाषया मन्यते तेन ज्ञापयितुं बोधयितुमिच्छमाणो ज्ञीप्समान इति पाणिनीयवृत्तौ ज्ञानप्रेरणेऽपि ह्रस्वे सनि ज्ञीप्समान इति सिद्धम्। एव विज्ञप्तिरेषा मम जीवबन्धो इत्यादिषु च विज्ञापनमेवार्थ। ञेइणमोस्तु अघटि अघाटि घट घट घाट घाटमित्यादि कमादेस्तु कामयते इति ञिङि रूपम्। प्रेरणञौ तु कामयति कामयते। जागुश्चेति जागर्त्तेर्ङस्य स्यात् पुनर्ङस्यैव दीर्घ स्यात् ञे. परयोरिणमोरित्यर्थ। यथा गुरुणा शिष्योऽजागरि अजागारि गुरु. शिष्य जागर जागर जागार जागार शेते। घटादिस्तु। घट यमङ चेष्टने नट् म नृतौ भट म भाषणे। वक्षोक्तौ गडम सेकेऽथ लभीन्मन्थनविह्वयोः। यपल्क चेपणे ज्ञाक्म मारणादौ श्रथम् बधे जृङ्दर्षम्यतु वृद्धत्वे दृगि दृम भये मतौ। श्राञ पाके स्मृमौल्कोऽथ व्यथञाङ भयादिषु।

## ७९९ । ज्वल ह्वल ह्मल ग्ला स्ना वन रम नमोऽगेर्वा ।

ज्वल—नम ६।, अ-गेः ६।, वा ।१। ।

एषामगीनां ह्रस्वः स्यात् वा ञौ । ज्वलयति ज्वालयति, ग्लपयति ग्लापयति । अगेः किम् ? प्रज्वलयति प्रग्लापयति ।

## ८०० । वा शम यम फण गिस्खदाम् ।

वा ।१।, शम-यम फण गि-स्खदाम् ६॥। ।

एषां ह्रस्वः स्यात् वा ञौ । शमयति शामयति यमयति यामयति, फणयति फाणयति, परिस्खदयति परिस्खादयति ।

ष्णिग ष्णम् नयने श्रम पाके कम्प क्रियासु तु । अक्राम वक्रगत्यान्तु कखम हासे वनम् गतौ । चकअङ् नृष्टकृसक प्रतीघाते कणम् गतौ । रम्म शब्दे नमे सङ्ग यग ष्टगसम स्थग । क्रग ह्रस्मे तु संहर्ष्यां खजि षजङ् गतौ त्यजि । रन्जरनजौ ञ रामेऽथ चणम् दाने श्रणम् तथा । हेड् मवेष्टे प्रथङ् ख्यातौ क्रथ क्लथ क्रथम वधे । कदक्रदक्लदखङ वैक्लव्यविकलत्वयोः । मदीमिर्यमदे स्नेपे छदकिञ्ज तूर्जने मतः । मदयङ् चोदने स्वदङ् विदारे चर्म हिंसने । जनीमङ् जनने जम्भलिकृत्पत्तौ ष्णपषङ् । कृपायां चप कम कल्के श्रपकृशसौ त्वरङ् सदे । ज्वरग्ने रोगे च लज् कम्पे ज्वलजमृचलनत्विषोः । कखकजीवेह्वलह्मलम चलने तु क्नसङ भये । अचिङ दाने दचमषङ हन्त्यर्थे क्रसुमुद्धृतौ । प्रसङ् प्रसवे तथा वनुम व्याप्तौ तथा । चहक शठतायां स्यात् घटादिस्तु विस्मृतिः । . चन्मि हिंसे गतौ चिकित्म चयने फणमिण् गतौ । ध्वन्मि शब्दे ष्टनस्तन्मि रवे स्वनमि तंसने । वपूष मिङ लज्जायां यतकिम परिवेशने । तदभावे दक्षिमेदे स्वञ्जि स्यात् चलने चये । मिलत्वास्य निवासस्य द्वयोर्मलमिङ स्मृतौ । इति त्रयोदश ख्याता धातवो वा घटादयः ॥७९८॥

ज्वलजम चलत्विषो ह्वलह्मल चाले स्नै क्षमै चाल शौचने वनुम व्याप्तौ । मजट्टुवमोद्गारे । नमौ शब्दनत्योः । स्नावीरप्राप्तौ अन्येषां नित्यप्राप्तौ विकल्पः । अगौ किं प्रज्वलयतीत्यादौ नित्यं ह्रस्व. । प्रस्नापयति प्रस्नापयतीत्युभयत्र न ह्रस्वः ॥७९९॥

## ८०१। हनस्तङ्ऽणबिणि ञ्णिति।

हन ६।, तङ् ।१।, अ णप्-इणि ७, ञ्णिति ७।

ञिति णिति च परे हन्तेस्तङ् स्यात् न तु णपि इणि च।

घातयति।

## ८०२। यिः सन् वेर्ष्यो द्विः।

यि १।, सन् ।१।, वा ।१।, ईर्ष्य ६।, द्वि १।।

ऐर्ष्यियत्।

इति अग्न्तपादः।

---

वामन्दस्य व्यवस्थावाचित्वात् समुभिर्यंमे इत्यस्य नित्य ह्रस्वः। ससयति रोग वैद्य.। मलङकालोचे इत्यस्य नित्य ह्रस्वाभाव। निशामयति कार्य्यं सुधीः प्रणिदधातीत्यर्थ। निशामय तदुत्पत्ति विस्तराद्गदतो मम इति। यमकमि परि वेशने तदभावे यमयति यामयत्यन्न गृहिणो। यमो उ विरतौ इत्यस्य तु नित्यं ह्रस्व। नियमयसि विमार्गप्रस्थितानात्तदण्ड इति शाकुन्तले। फणमिणगतौ फण-यति फाणयति फणणनि स्नेहे इत्यस्य फाणयतीत्येव। खदमषड विदारे परिखदयति परिखादयति अवखदयति अवखादयति अवपरिभ्या परस्यैव वा ह्रस्व इति कातन्त्राद्या अत्रापि अवस्थाने इति इति भीम। अन्य पूर्वस्य केवलस्य च प्रस्खद-यति खदयतीत्युभयत्र घटादित्वात् नित्य ह्रस्व ॥ ८०० ॥

णप् च इण् च णविण् न नविण् अणविण् तस्मिन्। ञ च ण च ञ्णौ ञ्णा-वितौ यस्य स ञ्णित् तस्मिन्। ञौ घातयति घञि घात. णमि घात घातम्। णविणोस्तु जघान अघानि ॥ ८०१ ॥

ईर्ष्यो यिरेव द्वि. स्यात् द्वित्वहेतौ सतीत्येकोऽर्थ। सनि कृते तु यिर्वा द्विः स्यात् सनि वा द्वि स्यादित्यपरोऽर्थ। यथा ईर्ष्यो ञौ कृते यलोपस्य नित्यत्वेऽपि येर्द्वित्वविधानज्ञापकत्वात् हसाल्लोप इत्यनेन यलोपाभावे इर्ष्यि इत्यस्य धातुसञ्ज्ञाया ञ्यामङ् नाजन्तादेरिति आदि हित्वा सादौ नवद्र इति रेफ हित्वा अनेन षकारञ्च हित्वा यि इत्यस्य द्वित्वे ञेर्लोपे ऐर्ष्यियदिति। सनि तु वसोरस्येतीमि द्वित्वे ईर्ष्यियिषति सनो द्वित्वे इर्ष्यिषिषति ॥ ८०२ ॥

इति अग्न्तपाद.।

---

## ८०३। सन्निच्छायाम्।

सन् ।१।, इच्छायाम् ७।।

धोः परः सन् स्यात् इच्छार्थे। अत्तुमिच्छति जिघत्सति। दिदासते दिदीषते, दिद्योतिषते, उतिच्छिषति उचिच्छिषति अधिजिगापयिषति अध्यापिपयिषति, शुश्रावयिषति शिश्वाययिषति जुहावयिषति।

यस्य धातोर्योऽर्थस्तद्विषयायामिच्छायां तद्धातोः सन्नित्यर्थः। इच्छायामिति सामान्योक्तावपि तुमर्गर्भायामेव। इत्यत आह अत्तुमिच्छतीति तुमर्गर्भायामिच्छाया सन्निति जौमराः। इच्छासनन्तात् न सन्। इच्छायामिच्छान्तरासम्भवात्। स्वार्थसनन्तात्तु स्यादेव। चिकित्सिषतीत्यादि। अचेतनस्य इच्छाया असम्भवेऽपि नदीकूलं[1] पिपतिषतीत्यादौ विवक्षायां सन् एव स्या मुमूर्षतीत्यादावपि विवक्षयैव सन्। पूर्वतो वाशब्दानुवृत्तौ पक्षे वाक्यस्यापि स्थितिः। सन्निति अकारान्तः। तेन अटगतौ अटिटिषतीत्यादौ नाजन्तादेरिति अकारादेर्न द्विः। जिघत्सतीति अद्लौ सन् घस्लृ इति घसादेशे सत् स्वरे इति सस्य त द्वित्वादि तिप् शप् लोपोऽत इति सनो अकारलोपः। दिदासते इत्यादि दीङ्ङ्क्षये यन्निति ङा वा। दिद्योतिषते [illegible] द्युत्स्वाप्योरिति खेर्जिः। उतिच्छिषतीत्यादि उच्छीग्रबन्धसमापने सन् इति उच्छिष इति स्थिते उकारं हित्वा छिष इत्यस्य द्वित्वे यस्य लोपे छिवजाद्योरिति छेच्छकारस्य तकारो वा। अधिजिगापयिषतीत्यादि अधीङ्ल अध्ययने ञ्यन्तात् सनि ङ्यां गा अरङ् सनोस्तु वेति गादेशे आदन्तत्वात् पण्। पक्षे क्रीजीङ इति आकारे पण सन् इमि आपयिष इति स्थिते पयिष इत्यस्य द्वित्वम्। शुश्रावयिषतीत्यादि टुश्वि ञ्यन्तात् सनि जौ द्वित्वे ञिरति नियमात् श्वेर्जि र्वेति जौ कृते द्वित्वं ततो ञि। जुहावयिषतीति ह्वयतेर्ञ्यन्तात् सनि जौ द्वित्वे ञिरिति नियमात् द्वित्वे सति ह्वोर्द्वि र्जिरिति जौ कृते ह्वाभागस्य अलाभात् आच्छासाह्वेति यणोऽभावे वृद्धिः॥ ८०३॥

## ८०४ । गुर्णानिमि ।

गु १।, न ।१।, अनिमि ७। ।

अनिमि सनि गुर्न स्यात् । विवृत्सति विवर्त्तिषते, निनृत्सति निनर्त्तिषति, तितरीषति तितरिषति तितीर्षति ।

## ८०५ । घौऽज्झनिङ्गमाम् ।

घं १।, अजझनिङ्-गमाम् ६।॥ ।

अजन्तस्य हन्तेः इङः स्थाने जातस्य गमस्य घं स्यात् अनिमि सनि । दुध्वूर्षति दिध्वरिषति । वुवूर्षति विवरीषति विवरिषति, सञ्चिस्कीर्षति, जिगीषति, चिकीषति चिचीषति जिघांसति ।

## ८०६ । गमीनिङोः ।

गमि ।१।, इन् इङो ६॥ ।

इनिङोः स्थाने गमिः स्यात् सनि । जिगमिषति, अधिजिगांसते ।

---

विवृत्सतीति वृञ्जी नेम् इति इम् निषेधे गुणनिषेध. । अनिमि कि ? विवर्त्तिषते । निनृत्सतीति नृत्क्लदित्यनेन इमोऽभावपक्षे गुणाभाव । तितरीषतीत्यादि स्वाद्यॄहृदुरिति वेमि वृतो वेम इति वा दीर्घ । अनिम् पक्षे गुर्णानिमि अगुणत्वादि व्यंनक्त्वर्थीति दीर्घ ॥ ८०४ ॥

इङो गम् इङ् गम् । अज्ञ हन् च इङ्गम् च ते तेषाम् । दुध्वूर्षतीत्यादि । ध्वृ कौटिल्ये स्वाद्यृदॄदुरित्यनेन अनिम् पक्षेऽनेन दीर्घं । ऋदिरणावित्युरि हसि परेऽच् कार्य्यात् पर द्वित्वमिति नियमात् ध्वूर्ष इत्यस्य द्वित्वमिति । वुवूर्षतीत्यादि वृञ् स्वाद्यृदॄदुरित्यनिम् पक्षे दीर्घे ऋदिरणावित्युरि द्वित्वम् । इम् पक्षे वृतो वेम इति इमो वा दीर्घं । सञ्चिस्कीर्षतीति स्वाद्यृदॄदुरित्यत्र स्कॄवर्जनात् न वेम् नेमिकाजेति इमो निषेधे दीर्घोऽगुणत्वादिर् । जिगीषतीति जेर्गि सनठ्योरिति जेर्गि घौऽज् झनिङ्गमामिति दीर्घ. चिकीषतीति चे. किर्वा । जिघांसतीति हन्तौ हिंसने खेर्ह्रौघोऽज्णिति च इति हस्य घ. अनेन दीर्घ । अनिम् सनोऽगुणत्वेऽपि वनतनेति न लोपाभाववीजं दभोया वित्यत्र लेख्यम् ॥ ८०५ ॥

८०७ । नेमुगुहग्रहः ।

न ।१।, इम् ।१।, उ गुह ग्रह ५। ।

उवर्णान्तात् गुहो ग्रहश्च सन इम् न स्यात् । जुहूषति बुभूषति जुघुक्षति ।

८०८ । ग्रहस्वपप्रच्छां जिः ।

ग्रह-स्वप प्रच्छा ६।॥, जि १। ।

एषां जिः स्यात् सनि । जिघृक्षति सुषुप्सति ।

८०९ । स्मिङ पूङ रन्जशू किर गिर द्रिय धिय प्रच्छ इम् ।

स्मिङ पूङ ऋ अन्ज् अशू—प्रच्छ ५।, इम् ।१। ।

एभ्य' परस्य सन इम् स्यात् । सिस्मयिषते पिपविषते अरिरिषति अञ्जिजिषति अशिशिषते चिकरिषति पिपृच्छिषति ।

गमधातुरादिश्यते जिगमिषतीत्यादि इण गतौ सनि गमादेशे गमोऽमे इति इम् । अधिजिगासते इति अधीङ्ध्ययने सनि गमादेशे धौज्झनिङ्गमामिति दीर्घः । गमधातुनैवेष्टसिद्धौ इणो गमादेशविधान विफलमिति इण गतावित्यस्य सनन्तस्य प्रयोगनिषेधार्थमिति चेत् । इगत्यामिति भौवादिकस्य प्रतियिषति इत्यादेरवश्यम्भावे तन्निषेधेनाप्यलम् । ततश्च इणगमादेशो ज्ञापयति ये गत्यर्थास्ते ज्ञानार्था इति न्यायेन बोधार्थस्येणधातोर्गमादेशो न स्यादिति । तेन इणधातोर्गमनार्थे जिगमिषति बोधार्थे प्रतियिषति इति सिद्धम् । उपास्तौ श्रवणेच्छाया श्रृणोते सन् विधीयते । गुरु शुश्रूषते शिष्य श्लोक शुश्रूषते गुणी ॥ ८०६ ॥

ह्रस्वोदन्तस्य यु युयूषति च्यु चुच्यूषति च्यु चुच्यूषति । दीर्घोदन्तस्य बुभूषति जुहूषतीति ह्वेञ. सनि द्वित्वे ह्वोर्ड इति जौ कृते धौज्झनिङ्गमामिति दीर्घः । जुघुक्षतीति गुह' सन् ह्रौ ढौ भाविति हस्य ढत्वे झभान्तस्येति गस्य घत्वे षढो क. से इति ढस्य कत्वम् ॥ ८०७ ॥

जिघृक्षतीति ग्रह. सन् पूर्वेण इम् निषेधे अनेन जिः हस्य ढे झभान्तस्येति गस्य घः । सुषुप्सतीति औदित्वात् नेम् जौ कृते दि. क्तिलादिति ष ॥ ८०८ ॥

स्मिङ् च पूङ् च ऋश्च अनूज च अशूश्च किरश्च गिरश्च द्रियश्च भियश्च प्रच्छ

८१० । भ्रस्ज श्रि स्वृ यूर्णु भर दरिद्रा सन तन पत ज्ञपर्द्धिदन्भिवो वा ।

भ्रस्ज—इव ५।, वा ।१। ।

एभ्यः सन इम् स्यात् वा । बिभर्जिषति बिभ्रज्जिषति बिभ्रक्षति, शिश्रयिषति शिश्रीषति सिस्वरिषति सुस्वूर्षति, यियविषति यूयूषति, ऊर्णुनविषति ऊर्णुनुविषति ऊर्णुनूषति, बिभरिषति बुभूर्षति दिदरिद्रिषति दिदरिद्रासति, सिसनिषति सिषासति तितनिषति तितंसति, तितासति इत्येके । पिपतिषति ।

चेति तस्मात् । सिङ्गी ङ्कार सुखाय सिड ऋ इ ध्र एषा नेमिकाजेत्यनेन पूङो नेमुगुहग्रहेति प्रष्क औदित्वादप्राप्तौ । अन्ज अश् एतयोरूदित्वात् । कॄ गॄ एतयो स्यायृद्दृ दुरित्यनेन वेमत्वं नित्यार्थमिम् विधीयते । सिस्मयिषते इति ञिस्मी खेरिति नियमान्मूलधातो षत्व न । पूङ् शौचे पिपविषते इति सनि अनेन इमि प्रागच्कार्य्यादिति नियमादादौ द्वित्वे गुणे सन्धौ च जयत्योरिति वक्ष्यमाणात् खेरुकार इ । ऋ गतौ अरिरिषतीति सनि इमि प्रागच्कार्य्यादित्यस्य पूर्वं वाशब्दीयव्यवस्थया आदौ गुणे नाजन्तादेरिति अकार हित्वा रिष इत्यस्य द्वित्वम् । अञ्जिजिषतीति अन्ज सन् इम् स्यादौ न वद्र इति अनभाग हित्वा जिष इत्यस्य द्वित्वम् । अशिशिषते इति अशूङ् सन् इम् अकार हित्वा शिष इत्यस्य द्वित्वम् । चिकरिषतीति कॄश विक्षेपे । जिगरिषतीति गॄश निगरणे दिदरिषते दृङ् आदरे दिधरिषते इति धृञङ स्थितौ । कॄङ्गि हिंसे गॄगि शब्दे दॄयगि विदारे दॄगि दॄनभिषि एषा स्यायृद्दृ दुरिति वेम् चिकरिषति चिकीर्षतीत्यादि । पिपृच्छिषतीति अनेन इमि पूर्वेण जि. ॥८०९॥

भ्रस्ज औश पाके श्रिञ सेवने स्वृञ शब्दोपतापयोः वेमोऽप्यस्यात्र ग्रहणं ज्ञापयति रुदुसूनूना वेमामपि सनि वेमत्व नास्तीति । अतएव रुदुसूनोत्स्क्या इत्यनेन एषा वेमत्वेऽपि नेमुगुहग्रह इत्यनेन इम् निषेधप्राप्ते रुरूषति दुदूषति सुसूषति नुनूषतीत्येव । युञ मिश्रणे ऊर्णुञवाच्छादने । भर इति ग्रहणात् पूरणार्थस्य भौवादिकभृञो बिभरिषति बुभूर्षति इति धारणार्थस्य जुहोत्यादि भृञो बुभूर्षतीति । दरिद्रा

८११ । मि मी मा दा रभ लभ शक पत पद हिंसार्थराधोऽचोऽनिम् सनोस्खिलोपश्च ।

मि—राध ६।, अच ६।, अनिम् सनि ७।, इस् ।१।, खिलोप १।, च ।१। ।

एषामच इस् स्यात् खिलोपश्चानिमि सनि । [२१३]

स्यादे. सोलोपः । पित्सति । जिज्ञापयिषति ।

८१२ । ज्ञपर्धापामीर्य्यः ।

ज्ञप ऋध—आपा ६।।।, ईर्य्य १।।। ।

एषामच ई ईर् ई एते क्रमात् स्युः खिलोपश्चानिमि सनि । ज्ञीप्सति । अर्हिधिषति ईर्त्सति । दिदम्भिषति ।

---

चलु दुर्गत्याम् । यनदुञ दाने तनदुञ विस्तृतौ पतल्लज पत्याञ्च ज्ञाक्स मारणादौ । ऋध्यु इर्द्धौ । दनुभ न दम्भे इव इति इवन्त । यथा चिव्यु निवासे दिव्यु जिगीषादौ । षिव्यु तन्तुसन्ततौ ष्ठिव्यु निवासे स्विव्यु शोषे गतौ । विभ्रज्जिषतीति अनेन इमि झप्झसोरिति सस्य दत्वे स्तुश्चुभिरिति दस्य ज । अनिम् पचे तु स्यादे सोलोप शक्राजेति षडि षढौ क से । भ्रिभ्रोषतीत्यादौ घोंज्झनिङ्कमामिति दीर्घं । यियविषतीति यु सन् इमि प्रागच्कार्य्यादिति नियमादादौ द्वित्वे ततो गुण सन्यौ च जयल्पोरिति खेरुकारस्य इ ऊर्णुनविषतीत्यादि नाजन्तादेरिति ऊकार स्यादौ नवद्र इति रेफं हित्वा द्वित्व डिदिम् बोर्णोरिति ङित् पचे गुर्ध्वोरित्युव् दिदरिद्रिषतीति उस्येवीति आकारलोप । अनिम् पचे दरिद्र आलोप इयव सन्वर्जनान्नाकारलोप । सिषासतीति खनसनजनामिति डा, तितसतीति अनिम्सनोऽगुणत्वेऽपि वनतनेति नलोपाभाववीज दर्भीयावित्यत लब्ध्यम् । एके इति पाणिनीयकौमरास्तनोतेरनिम् सनि वा दीर्घमिच्छन्तीत्यर्थ. ॥८१०॥

अस्य व्याख्या मित्सतीत्यादि पदसाधनकाले लेख्या । पीत्सतीति पतित् मिच्छतीति सन् अनिम् पचे अनेन खिलोपे अकारस्य इसि कृते स्यादे सोलोप. जिज्ञापयिषतीति ज्ञाक्स मारणादौ ञ्यन्तात् सन् असज अौति वेम् ॥८११॥

ज्ञपश्च ऋधश्च आप् च ते तेषाम् ईश्च ईर् च ईश्च ईर्य्यः। ज्ञीप्सतीति अनिम् पचे अकारस्य ई: खिलोपश्च ञ लोप. । अर्हिधिषति ऋध्यु ऋद्धौ असृजश्रीति

## ८१३। दम्भो यौ।

दम्भ ६।, यौ १॥।

दम्भेरच इ ई च स्यात् अनिमि सनि खिलोपश्च। धिप्सति धीप्सति। अनकारनिर्द्देशात्। दिदेविषति।

## ८१४। छ्वोः शूटावणौ असक्वौ यङ्लुक् वोस्तु वा।

छ्वो ६॥, शूटौ १॥, अणौ ७।, अस्—क्वौ ७।, यङ् लुक् वौ ७॥, तु १। वा १।।

छकार वकारयोः शकारोटौ स्याताम् अणौ असे क्वौ च, यङ्लुकि वे च वा स्तः। दुद्यूषति। मित्सति दित्सति धित्सति रिप्सते लिप्सते शिक्षति पित्सते, प्रतिरित्सति। हिंसार्थ. किम्? आरिरात्सति। ईप्सति।

---

सनो वेम् गुणे अधिंय इति स्थिते अरभाग द्विला धिय इत्यस्य द्वित्वम्। अनिम्-पक्षे ऋकारस्य ईर् खिलोपश्च झप्झसीरीति धस्य त। दिदम्भिषतीति दन्भु असजञीति सनो वेम् ॥८१२॥

धिप्सतीत्यादि दन्भु दम्भे सन् दभ इत्यनकारनिर्देशात् नलोपे अनेन खेर्लोपे अकारस्य इकारे च झभान्तस्येति दस्य धे झप्झसीरिति भस्य प। अत्र सुनाॅ-निमीत्यनेनानिस् सनोऽगुणत्वे ह्रसुङ्गीलोप इत्यनेनैव नकारलोपे सिद्धेऽनकार-निर्देशो ज्ञापयति अनिम् सनि दन्भ एव नकारलोपो नान्यस्य इति। तेन भन्जधौ मोटने विभङ्क्षति रन्जमौञ् रागे रिरङ्क्षतीत्यादौ न लोप। एव जिघांसति अधिजिगांसते तितंसतीत्येतेषामपि वनतनाद्यनिमामिति अनेन अम्लोपो न स्यादिति। दन्हृम हिंसे इत्यस्यापि अनिम् सनि नकारलोप इति जौमरा तिष्ठति। स्वमते तु ज्ञापकसिद्धमनित्यमिति न्यायात् न लोप। दिदेविषतीति इवन्तत्वादिम् ॥८१३॥

छ च व च छ्वौ तयो श च ऊट् च शूटौ अस् च क्विश्च असक्वि तस्मिन्। यङ्-लुक् च व च यङ् लुग्वौ तयो। यथा प्रच्छो प्रश्न विच्छश्च विश्न। दिव्यु द्यूतम्। दुद्यूषति। क्वौ अचक्षू। अणाविति पृथक्पदकरणाद्यङ्लुकि तत्सम्बन्धाभावे गुणनिमित्ते अगुणे च असे वा स। वकारे तु यङ्लुकि अन्यत्र च सर्वस्मिन्

## ८१५। मुचोऽढ़े हेर्मोच् वा सनि।

मुच ६।, अढे ७।, हे ६।, मोच ।१।, वा ।१।, सनि ७।

अढ़स्य मुचो हे: स्थाने मोच् वा स्यात् सनि।

मोक्षते मुमुक्षते।

## ८१६। जयल्पोः ख्योर्य्ये।

ज यल् पो ५।, ख्यो ६। इ ।१।, ए ७।।

खेरुवर्णस्य जकार-यल पवर्गात् परे अवर्णे परे इ: स्यात् सनि। जु गतौ। जिजावयिषति। रु रिरावयिषति।

बकारे वा ल इत्यर्थ। गुणनिमित्ते यथा वेवेश्मि वेवेच्मि देद्योमि देदेमि। अगुणे यथा वेविश्म वेविच्म, देद्यूम देदिम। बकारे तु वेविश्व, वेविच्व देद्यूव, देदिव विविश्वान् विविच्वान् दुद्यूवान् देदिवान्। मिमीमादित्यस्योदाहरति। मित्सतीत्यादि डुमिञ क्षेपे मीञगवधे मीकि गत्याम् एषामच इसि कृते खेश्च लोपे मत्स्यर इति सस्य तकारे मित्सतीति मा इति स्वरूपग्रहणात् मालच माने इत्यस्यापि मित्सतीति माङलिश्चन्दे माङयच मेङ प्रतिदाने मीङयतु च इति चतुर्थी मित्सते इति। ङित्वादात्मनेपद दा इति दासज्ञा। तेन दाल लुनौ दा तु दाने डुदाञलि दीपच्छेदे एषा दित्सतीति डुधाञलि धेट धित्सतीति देङ पालने दित्सते रभीङ रिप्सते लभीङ लिप्सते। शकयङ शक्लिङ शिक्षति: अस्य स्वमते वेमत्वेऽपि बहुवादिना मतेऽनिमत्वादिम् पक्षे उदाहरण न दत्त पतल्छ जन्या पित्सति पत्यङ ऐश्वर्ये पद्यौङ गतौ द्वयो पित्सते। प्रतिपूर्वराधौ सिद्धौ हिंसार्थ। प्रतिरित्सति। आङ्पूर्व सेवार्थ: आरिरात्सति ईप्सति आप ल्नौकि अपधापामीर्थ्य ॥८१४॥

इस्याभावोऽढ तस्मिन्। मोक्षते मुमुक्षते मुनि. पापात् स्वय मुक्तो भवित् मिच्छतीत्यर्थ। कर्म्मकर्तृत्वादात्मनेपद मोक्षते इति क्वचित् केवलो हि स्यादिति व्याख्यानात् सन हित्वा मुचधातोर्द्वित्वे मोचादेशे चुक्षिति कुब्जम्। अढे किम्? बन्धं मुमुक्षति गोप. ॥८१५॥

खेरु ख्यु तस्य इ इति लुप्तप्रथमैकम्। ए इति सप्तम्येकम् खेरुवर्णस्य जका रयलपवर्गात् परेऽवर्णे इ: स्यात्। अव्यवहितसनोऽसम्भवात् अवहिते सनीत्यर्थ.।

पू पिपावयिषति भू बिभावयिषति। जयल्पोः किं ? नुनावयिषति। अतएव ञौ द्वित्वे व्रिः।

८१७। श्रु स्रु स्नु द्रु प्रु प्लु च्युङां वा।

श्रु—चुङां ६।॥, वा।१।।

शिश्रावयिषति, शुश्रावयिषति।

८१८। व्युङोऽवो हसादेः सेमः क्त्वाच्च किद्वा रुदविदमुषस्तु नित्यम्।

व्युङ ५।, अव ५।, हसादे ५।, सेम ५।, क्त्वाच्।१।, च।१।, कित्।१।, वा, ।१।, रुद विद-मुष ५।, तु।१।, नित्यम् १।।

हसादे सेम उकारोङ इकारोङश्च वान्तवर्जात् सन् क्त्वाच्च कित् वा स्यात् रुदादेस्तु नित्यम्।

---

यथा जुङ् गतौ जिजावयिषति अव ञे सनि आदौ द्वित्वे पश्चात् वृद्धौ अनेन खेरुकारस्य इकार। एव यु यियावयिषति। रु रिरावयिषति। लु लिलावयिषति। पू पिपावयिषति। भू बिभावयिषति। मू मिमावयिषति। एवम् एषा ञेः परेऽङि आदौ द्वित्वे पश्चात् वृद्धौ जावि इति स्थिते ञान्युङ. स्व इति ऋस्वे खेः सन्वद्द घौ इत्यादिना खे सन्वत्कार्य्यातिदेशेऽनेन खेरुकारस्य इकारे घोश्च खेः हसादेर्वश्चेति दीर्घे अजीजवत् इत्यादि जयल्पो किम् ? कुङशब्दे चुकावयिषति। नु नुनावयिषति। सु सुषावयिषति हु जुहावयिषति इत्यादि। अतएवेत्यादि। ञौ द्वितीयचणे वृद्धे. कर्त्तव्यत्वेऽपि ञे परे भविष्यत् सन् विषये द्वित्वे सति वृद्धिः स्यादित्यर्थ ॥ ८१६ ॥

पृथग्योगात् जयल्पाविति नानुवर्त्तते। श्रु श्रवणे स्रु, गतौ स्नुल प्रस्नुत्या द्रु गतौ प्रुङप्लुङ गतौ च्युङ गतौ। एषा सप्ताना खेरुवर्णस्य अव्यवहितावर्णस्यासम्भवात् वर्णद्वयव्यवहितेऽवर्णे इ स्यात् वा व्यवहिते सनीत्यर्थ। यथा शिश्रावयिषति शुश्रावयिषतीत्यादि। एवम् एषा ञे परेऽङि आदौ द्वित्वे पश्चात् वृद्धौ ञान्युङः स्व इति ऋस्वे खे सन्वद्द घाविति सन्वत्कार्य्यातिदेशे अनेन खेरुवर्णस्य इकारे संयोगपूर्वत्वेन खेर्गुरुत्वात् दीर्घाभावे अशिश्रवत् अशुश्रवदित्यादि॥ ८१७ ॥

उश्च इश्च वौ। तावुङौ यस्य स व्युङ् तस्मात् उकारोङ् इकारोङ वर्ण्यवका-

रुरुचिषते रुरोचिषते लिलिखिषति लिलेखिषति। रुदादेस्तु रुरुदिषति विविदिषति मुमुषिषति। वान्तः किं? दिदेविषति।

**८१९। ञिस्त्वोः खेः सः षः षण्यऽस्वित्स्वत्सहः।**

ञि स्त्वो ६॥, खे ५।, स १।, ष. १।, षणि ७।, अ स्विद-स्वत्-सह' ६।।

खे: परस्य ञ्यन्त स्तौत्योः सस्य षत्वभूते षणि षः स्यात् न तु स्विदस्वत्सहाम्। सुष्वापयिषति तुष्टूषति। ञिस्त्वोः किं? सिसिक्षति। षणीति किं? तिष्ठासति। खेः किं? प्रतीषिषति।

इति सनन्तपादः।

---

वान्ताभावात् नास्ति दन्त्यवकारान्तो यत्र सोऽव् तस्मात् आकाङ्क्षाभावादत्र पूर्वस्थितानामनुकृष्यभाव चकारेण प्रकरणोपस्थित सन् एव आकृष्यते। यथा रुरुचिषते इत्यादि वर्णोऽरस्येति इमि कित् पक्षे न गुण। एवं रुचित्वा रोचित्वा लिखित्वा लेखित्वा। रुदादेस्तु रुरुदिषति विविदिषति मुमुषिषति रुदित्वा विदित्वा मुषित्वा। अव किं? दिदेविषति देवित्वा ॥ ८१८ ॥

नियमोऽयम्। षभूते सनि खिनिमित्तक मूलधातौ षत्व ञ्यन्तस्तौत्योरेव स्यात् नान्यस्येत्यर्थः। सुष्वापयिषतीति ञ्यन्तस्वाप्यर्थे खेरिः। किलादित्यनेन सन सस्य मूलधातोश्च षत्वम्। तुष्टूषतिस्तु सन् घीञ्झनिङ्क्रमामिति दीर्घ द्वित्वं किलादित्युभयत्र षत्वम्। सिसिक्षतीति षिचपञ्चौ च सन चुडिति कुडि किलादिति सन षत्वं ञ्यन्तस्तौति भिन्नत्वात् मूलधातोर्न षत्वम्। एवं सुसुषतीत्यादि। तिष्ठासतीति सन षत्वाभावात् नियमाभावे षत्वम्। प्रतीषिषति प्रत्येतुमिच्छतीति प्रतिपूर्वेङ् गत्यर्थेति भौवादिकात् सनि नाजन्तादेरिति इकारं द्विता सन एव द्वित्वं व्यस्यन्त नोतात्वं सन षत्वे मूलधातुनिमित्तक खे षत्व स्यादेव। ञ्यन्तत्वात् प्राप्तौ स्विदस्वदसहां निषेध। सिस्वेदयिषति सिसाह[illegible]ति ॥ ८१९ ॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां मुग्धबोधस्य टीकायां सनन्तपादः।

---

८२०। मूत्र सूत्र सूचाटशर्त्त्यूर्णु हसाद्ये-काचोऽशुभरुचो मुहुर्भृशार्थे यङ्।

मूत्र—एकाच ५।, अशुभरुच ५।, मुहुर्भृशार्थे ७, यङ्।१।।

एभ्य शुभरुचवर्जेभ्यो यङ् स्यात् पौनः पुन्ये अतिशये चार्थे।

८२१। गत्यर्थाद् गॄलुप सद चर जप जभ दन्श दहो वक्रगर्हे।

गत्यर्थात् ५। गॄ दह' ५।, वक्रगर्हे ७।

गत्यर्थात् वक्रे, गादेर्गर्हायां यङ् स्यात् न तु पूर्वोक्ते, तद्युक्ते तु स्यात्।

---

हसादिश्चासावेकाच्चेति हसाद्येकाच्। मूत्रश्च सूत्रश्च सूचश्च अट च अश च अर्त्तिश्च ऊर्णुश्च हसाद्येकाच्चेति तस्मात्। न विद्येते शुभरुचौ यत्र सोऽशुभरुच् तस्मात्। मुहुश्च भृशश्च मुहुर्भृशौ तयोरर्थ मुहुर्भृशार्थ तस्मिन्। मूत्रसूत्र-सूचानामदन्तत्वेन अनेकाचत्वात् अट अश अर्त्ति ऊर्णूनामजादित्वादप्राप्तौ पृथगुक्ति। यङ् अदन्त तेन अटाय्यते इत्यादौ नाजन्तादेरिति आद्यचर' हित्वा द्वित्वम् ॥८२०॥

गॄश्च लुपश्च मूर्द्धन्यादि सद च चर च जप च जभ च दन्श च दह चेति तस्मात्। लुपसाहचर्य्यात् गॄ इति तौदादिक एव ग्राह्य'। तेन पुन. पुनरति-शयेन वा गृणाति जेगीर्य्यते। वक्रञ्च गर्हा च वक्रगर्हे तस्मिन्। पृथक्पदकरणं वक्रगर्हाभ्या यथासख्यार्थम्। न पूर्वोक्ते मुहुर्भृशार्थयुक्ते वक्रगर्हे तु स्यादेवेति। यथा वक्र गच्छति जङ्गम्यते जेगिल्यते पुन पुनरतिशयेन वा गच्छति पुन-पुनरतिशयेन वा गिरति इत्यत्र न स्यात्। किञ्च पुन. पुनरतिशयेन वक्र' गच्छति जङ्गम्यते पुन.पुनरतिशयेन वा गर्हित गिरति जेगिल्यते अत्र तु स्यादेव ॥ ८२१ ॥

## ८२२। खेर्णुः।

खे. ६।, णु १।।

यङि परे खेर्णुः स्यात्।

पुनःपुनरतिशयेन वा मूत्रयति मोमूत्र्यते, सोसूत्र्यते सोसूच्यते।

## ८२३। घोंऽनितः।

घं १।, अनित ६।।

अ-नकारेतः खेः घंः स्यात् यङि। अटाट्यते अशाश्यते अरार्य्यते ऊर्णोनूयते। देदीयते मेमीयते जेगीयते जेह्रीयते पेपीयते सेषीयते तेष्ठीयते। शोशूयते शेश्वीयते, मास्मर्य्यते, चेक्रीयते सञ्चेष्क्रीयते विसेसिच्यते, यङन्तत्वात् न ष। वक्र व्रजति वाव्रज्यते।

सुगमम्। मोमूत्र्यते इति मूत्रत्व प्रस्रावे चुर्ष्यों ञि हसात्लोपे मूत्रीति धातो यङ् ञे र्लोपे द्वित्व खेरादयच परभागलोपे गुणः धातुसंज्ञायां यङो ङित्वादात्मनेपदं अपि लोपोऽतोऽदेचोरिति यङोऽकारलोप एव सर्वत्र॥ ८२२॥

नकार इत् येषां ते नित (नीन् नुन् गीन्) न विद्यन्ते नितो यस्य स्व सोऽनित् तस्य। अटाट्यत इति वक्रम् अटति पुन पुनरतिशयेन वा वक्रम् अटति इत्यर्थे यङ् नाजन्तादेरिति अकार हित्वा ट्य इत्यस्य द्वित्वे खेरादयच इति यकार-लोपेऽनेन दीर्घं। एवम् अशाश्यते अरार्य्यते इति ऋर्लिंगत्यां यङि स्याद्यन्त इति गुणे अर्य इति स्थिते स्यादौ नवद्र इत्यत अयो इत्युक्ते रेफसहितयकारस्य द्वित्वे खेरादयच इति यलोपे घोंऽनित इति दीर्घं। अनित किं? वनीवच्यते जंजप्यते मरीमृत्यते ऊर्णोनूयत इति यङि घोंऽज्यरे इति दीर्घे नाजन्तादेरिति उकार हित्वा स्यादौ नवद्र इति रेफं हित्वा नूय इत्यस्य द्वित्वे आदयच परभागलोपे खेर्गुणे रेफसम्बन्धाभावात् मूलधातोर्नकारस्य पुनर्दन्त्यत्वम्। देदीयते इति दास्व रूपाद यङि आदौ दामागै इति ङी ततो द्वित्वे खेर्णुः। मेमीयत इति मास्वरूपात् यङि दामागै इति ङी ततो द्वित्वादि। एवं जेगीयत इत्यादि पञ्च। शोशूयत

## ८२४। ग्रो र लः।

ग्र ६।, र।१।, ल १।।

गिरते रो लः स्यात् यङि। गर्हितं गिरति जेगिल्यते। लोलुप्यते सासद्यते।

## ८२५। कोश्चुर्वा।

को ६।, चु १।, वा।१।।

को' खेश्चुः स्यात् वा यङि। चोकूयते कोकूयते।

## ८२६। नीन् वन्च स्रन्स ध्वन्स भ्रन्श कस पत पद स्कन्दाम्।

नीन्।१।, वन्च—स्कन्दाम् ६।।।।

एषा खेर्नीन् स्यात् यङि। वनीवच्यते।

---

श्वेर्जिर्वा यङड्योरिति जिर्वा। सास्मय्यत इति स्याद्यर्त्तेत इति गुण। चेक्रीयत इति करोतेर्यङि यङ्ड्यक्ये चर्द्रौ। सचेस्क्रीयत इति सपर्ग सुमि कुस्तुठ्रामिति नियमात् न गुण। क्तिलादिति ष। विमेसिच्यते इति गिनिमित्तक खिनिमित्तकमपि षत्व न स्यादिति श्रीपतिदत्त। वा व्रज्यते इति घीऽनित इति दीर्घ ॥८२३॥

जेगिल्यते इति ऋर्दिरणावितीरि अनेन रेफस्य ल। वृत्तौ गिरतेरिति निर्देशात् गृणातेर्जेगीर्यते इत्येव। पर्य्यङ्कादै रेफस्य चूडादेर्डस्य च लो वेति वक्तव्यम्। पर्य्यङ्क पल्यङ्क निरय. निलय दुरयण दुलयन गिरति गिलति निगरण निगलन परिघ पलिघ परियोग पलियोग प्रत्यय प्लत्यय वार वाल. मूर मूल रघु लघु अङ्गुरि अङ्गुलि अरि अलि अरम् अलम् कपिरिका कपिलिका तपुरीक तपुलीक रोम लोम पांशुर पांशुल कर्म्म कल्म असुरि असुलि शुक्र शुक्ल. चूडा चूला वडभी वलभी जड जलम्। त्व समुद्रश्च दुर्वारो महासत्वौ सतेजसौ। अयन्तु युयवोर्भेद स जडात्मा पटुर्भवानिति दण्डी। लोलुप्यते इति गर्हित लुम्पतीति सासद्यत इति गर्हित सीदतीति वाक्यम् ॥ ८२४ ॥

मण्डूकप्लुत्या खे रित्यस्यानुवृत्ति.। केचित्तु कुङशब्दे इत्यस्यैवाय विधिरित्याहु ॥ ८२५ ॥

८२८ । जम जप जभ दह दन्श भन्ज पश शपोऽतो नुन् लवयस्तु वा ।

जम—शप ६।, अत ६।, नुन् ।१।, लवय ६।, तु ।१।, वा ।१। ।

जमन्तानां जपादीनां च अदन्तस्य खेर्नुन् स्यात् यङि, लवयान्तस्य तु वा । जञ्जन्यते जाजायते ।

८२८ । हनो वा घ्नी ।

हन ६।, वा ।१।, घ्नी ।१। ।

जेघ्नीयते जङ्घन्यते । जञ्जप्यते । चञ्चल्यते चाचल्यते, मम्मव्यते मामव्यते, दन्दय्यते दादय्यते ।

वन्चु गत्या स्रन्सु ध्वन्सु भ्रन्शु यङ् भ्रंशे ध्वन्सु गतौ भ्रंशे भ्रन्शु यङ् अध पात तालव्यान्त । कस ज गतौ पतलृ गत्यां पद स्थैर्ये पदौ ङ गतौ इति द्वयम् । स्कन्दिरौ शोषणे कसज गतावित्यस्य साहचर्य्यात् पतलृज गत्यामित्यस्यैव ग्रहणम् । तेन पत्ल ङै श्ये इत्यस्य पापत्यत इत्येव अतएव यङन्तचलपतसहवह कीत्यस्य पापति रिति स्वयमुदाहरिष्यति । वनीवच्यते इति इमुङ्, इति न लोप एव सनीस्रस्यते दनीध्वस्यते बनीभ्रश्यते चनीकस्यते पनीपद्यते चनीस्कन्द्यते ॥ ८२६ ॥

जमस्य जपस्य जभस्य दहस्य दन्शस्य भन्जस्य पशस्य शप चेति तस्य । नुरित्यनुस्वार । अन्यथा यंयम्यते रंरम्यत इत्यादावनुस्वारो न स्यात् नित्वादन्ते । जज न्यते इति वाल्लवपे इत्यनेनानुस्वारस्य यम् वा परेऽनुस्वारस्थिति । एवं सर्वत्र यञ्चे जाजायत इति खनसन जनामिति ङादेशे द्वित्वे चौऽनित इति दीर्घं । एव कणृ आर्त्तस्वरे चकण्यते शसुभियं शमे शंशम्यते । अदन्तस्य खेरिति किं तिम्य आर्द्रने तेतिम्यते । गर्हितं जपति ज जप्यते एव जं जभ्यते दंदह्यते दंदश्यते पुनः पुनरतिशयेन वा भनक्ति बंभज्यते एवं पंपश्यते शंशप्यते जंजन्यते इति खेर्दीर्घ इति ह्रस्व च ॥ ८२७ ॥

हनधातुर्घ्नी स्याद्वा यङि । जेघ्नीयते चंचल्यते इत्यादि चलजगतौ मव बन्धने ङिदयङ एषां खेर्नुन् वा । लयवीरन्त: पाठात् वकारोऽत्र दन्त्य: । तेन कर्ब गतौ इत्यस्य चाकर्ब्यते इत्येव ॥ ८२८ ॥

## ८२९। चरफलोरुच्चोङो न गुः।

चर फलो ६॥, उत् ।१।, च ।१।, उङ ६।, न ।१।, गु १।।

चरफलोः खेर्नुन् स्यात् उङ उकारश्च यङि, तस्य च न गुः।
चञ्चूर्य्यते पम्फुल्यते।

## ८३०। रीन्ऋत्वतः।

रीन् ।१।, ऋत्वत ६।।

ऋकारवतो धोः खेरीन् स्यात् यङि। नरीनृत्यते

## ८३१। व्ये-स्वप-स्यमो जिः।

व्ये स्वप-स्यम ६।, जि १।।

एषां जिः स्यात् यङि। वेवीयते सोषुप्यते सेसिम्यते।

## ८३२। न वशः।

न ।१।, वश' ६।।

वष्टेर्जिर्न स्यात् यङि। वावश्यते।

## ८३३। चायः कीः।

चाय ६।, की ।१।।

चायतेः की स्यात् यङि। चेकीयते।

---

खेरित्यनुवर्त्तते। यङ् लुकि चचूर्त्ति पफुलति इत्यादौ प्रसक्तस्य गुणस्य निषेधार्थं न गुरिति वचनम्। चचूर्य्यत इति व्यंनच् तयीति दीर्घ ॥ ८२९ ॥

ऋत् अस्त्यत्र ऋत्वान् तस्य ऋत्वत। ऋकारान्तस्य तु यङ् व्यक्ये चेत्यनेन ऋकारस्य रीभावे ततो द्वित्वे खेरीन्न स्यात्। यङलुकि तु चरीकर्त्तीत्यादौ स्यादेव। नरीनृत्यते इत्यादौ णत्वाभाव प्रागुक्त.। जरीगृह्यते परीपृच्छ्यते वरीवृश्च्यते वरीभृज्ज्यते एषु ग्रहस्वपाद्योरिति जौ कृते ऋकारवत्त्वात् खेरीन्॥ ८३०॥

ग्रहस्वपाद्योरिति सूत्रे स्वपादेः ङिति जिरिति नियमादप्राप्तौ विधिरयम् इष्टतो ह्यधिकाराणा प्रवृत्तिनिवृत्ती स्यातामिति खेरित्यस्यानुवृत्तिर्नास्ति। व्येञ् वृतौ ञि स्वपौ् लृशये स्यमु ध्वनने एषां जि. स्याद् यङि॥ ८३१ ॥

ग्रहादित्वात् प्राप्तौ निषेध.॥ ८३२ ॥

## ८३४ । घ्रा-ध्मोर्ङी ।

घ्रा ध्मो ६॥, ङी ।१।

जेघ्रीयते देध्मीयते ।

## ८३५ । शोङो ङय्येऽणौ ।

शोङ ६।, ङय् ।१।, ये ७, अणौ ७।

शाशय्यते ।

## ८३६ । यङो लुक् वाऽपो लुक् पं द्वित्वादि च धूक्तन्तु वाऽनि तु नित्यं नोतः ।

यङ ६।, लुक् ।१।, वा ।१।, अप ६।, लुक् ।१।, पं १, द्वि १, त्वादि ।१। च ।१।, धूक्तं १, तु ।१।, वा ।१।, अनि ७, तु ।१।, नित्य १, न ।१।, उत ५। ।

यङो लुक् स्यात वा, लुकि सति अपो लुक् प द्वित्व त्वेगु-रित्यादि कार्य्यञ्च स्यात्, धुग्रहणोक्तन्तु वा स्यात्, अनि तु नित्य लुक् स्यात् उदन्तात्त्वनि न स्यात् ।

---

सुगमम् ॥ ८३३ ॥

ई इति लुप्तप्रथमैकम् । रामानन्दरामतर्कवागीशौ तु घ्राध्मोर्ङीति पाठ कल्पयत । वस्तुतस्तु, घाध्मोरी इत्येव पाठ । अज्माबादेशे येन विधिस्तदन्तस्येति न्यायादन्त्यस्य स्थाने इत्यर्थ । अथवा आश्च आश्च औ घ्राध्मोरौ घ्राध्मौ तयोर्घ्राध्मोरिति समास ॥ ८३४ ॥

शाशय्यते इति यङि कृते द्वि । एव यकि शय्यते यपि सशय्य क्यपि शय्या । अणौ कि ? शैयम् ॥ ८३५ ॥

यङ्लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायेन प्राप्तव्यकार्य्यस्य लुकि न तवेति निषेधात् यङ् व्यक्ते चर्क्रीति स्याद्यत्त्यॄतो गुरित्यादि हसुङ् नोलोप इत्यादीनि न स्यु । तदन्तत्वेन विहित कार्य्यं स्यादेव। तेन धातुसञ्ज्ञा ठ्यामाम् च स्यात् । ततश्च यङन्तत्वेनैव द्वित्वे सिद्धे द्विरित्युपादान ज्ञापयति यङो लुक्यपि तस्मिन् परे विहितं किमपि कार्य्यं स्यादिति। तेन यङ्लुकि ग्रहादेर्जिः स्यात्। ग्रहजरीगर्द्धिज्या जेजेति व्यध वेवेद्धीत्यादि। त्वादीना यङि- परे

बोभवीति बोभोति, बोभूतः बोभुवति। अबोभवीत् अबोभोत् अबोभूताम् अबोभुवन् अबोभूत् अबोभुवीत् बोभुवाञ्चकार। वनीवञ्चीति वनीवङ्क्ति, वनीवक्तः, वनीवचति। जङ्गमीति जङ्गन्ति, जङ्गतः, जङ्ग्मति, जङ्गमति। जङ्गमीमि जङ्गन्मि जङ्गन्वः जङ्गन्मः। जङ्घनीति जङ्घन्ति, जङ्घतः, जङ्घ्नति जङ्घनति। चञ्चुरीति चञ्चूर्त्ति। चाखातः चङ्खन्त चङ्ख्नति चङ्खनति। जञ्जनीति जञ्जन्ति जाजातः जञ्जन्तः जञ्ज्नति जञ्जनति। देदिवीति देदेति देद्योति, देद्यूतः देदितः देद्यूवः देदिवः। वेविच्छीति वेवेष्टि, वेविश्वः वेविच्छः।

---

विहिताना लुकि न तत्रेति निषेधादप्राप्तौ वचनम्। अनि तु इति पचादित्वात् क्रतेऽनि परे नित्य लुक् स्यात्। यथा नेनीयते नेन्य लोलूयते लोलुव। नीत इति क्तस्योदन्तात्तु पचादित्वादनि परे लुक् न स्यात्। यथा रोरूयते रोरूय। बोभवीतीति मूलधातोर्जातमात्रस्य यङो लुकि द्विर्भावे खेर्गुणे बोभू इत्यस्य धातुसञ्ज्ञाया तिपि जातस्य शपो लुकि पिद्वस्येति ईमि गुण। ईमोऽभावपचे गुण एव। बोभूत इति तसो ङित्त्वात् न गुण। बोभुवतीति अन्तोऽद् हे य्वोरित्युव्। अबोभवीदित्यादि घ्या दीप् ईम् वा। अबोभुवन्निति अनुस्सिद्हेरित्यत्र भूवर्जनात् न उस्। बोभूवाञ्चकार इति यङ्लुक्य लोपे इति वक्ष्यमाणात् गुणनिषेधे य्वोरित्युव्। वनीवञ्चीतीत्यादि नीन् वञ्चेत्यादिना खेर्नीन् पिद्वस्येति ईम्। ईमोऽभावपचे चुङिति कुङ् नस्यानुस्वारे तस्य ङ। वनीवक्त इति हसुङो लोप इति नलोप। जङ्गमीति इत्यादि अमजपजमेत्यादिना खेर्नुन्। ईमोऽभावपचे मस्यानुस्वारे तस्य न। जङ्गत इति वनतनाद्यनिमामिति मलोप। जङ्ग्मतीत्यादि धूक्तत्वात् हनगमित्युङ लोपो वा। जगन्मीत्यादि धोर्मोन म्वम् वि इति मस्य न। जंघनीत्यादि खेर्हो ग्रोर्घिति चेति हस्य घ पचे ईम्। जघत इति वनतनेति न लोप। जघ्नतीत्यादि हनगमिलुङ् लोपो वा अन्तोऽद् हे। चञ्चुरीति इत्यादि चरफलोरिति खेर्नुन् उङ उकारे तेनैव गुणनिषेधे पचे ईमोऽभाव। चाखात इत्यादि धूक्तत्वात् खनसनजनामिति ङादेशे अमन्तत्वाभावात् खेर्न नुन् घोऽनित इत्येव। पचे अमन्तत्वात् खेर्नन्। आगमादेशयोरागमो विधिर्बलवानिति न्यायादादौ पिद्वस्येति ईमि खनसनजनामिति ङादेशाभावे चखनीति

## ८३७ । हाकः खेर्न घः ।

हाक ६।, खे ६।, न ।१।, घ १। ।

जहाति जहेति ।

## ८३८ । दन्शो नलोपो वा ।

दन्श ६।, नलोप १।, वा ।१। ।

दन्दष्टि दन्दष्टि दन्दशीति दन्दशीति ।

## ८३९ । जिर्न वा ।

जि १।, न ।१।, वा ।१। ।

सास्वपीति सास्वप्मि सोषोप्मि सोषुपीति ।

---

चखनीषि चखनोमि इति बोध्यम् । पक्षे चंखन्ति च ख सीत्यादौ तु खनसनजना-मित्यत्र वाशब्दस्य व्यवस्थावाचितया पिति भसे ङा न स्यादिति तत्रैव व्याख्यातम् । च खनतीत्यादि अन्तोऽद् हे हनगमित्युङ्लोपौ वा । जाजात इत्यादि खनसनेति ङा वा ज ज्ञतीत्यादि अन्तोऽद् हे हनगमित्युङ्लोपौ वा । देद्योतीत्यादि आदौ द्वित्वे तिबाद्युत्पत्तौ क्वौ शूटाविति ऊट् । खेर्णु ऊटो गुण ऊटोऽप्राप्तिपक्षे य्वोर्लोप इति वलोप गुणश्च । पक्षे ईमि नद्युडीऽचोति गुणनिषेध. । देद्यूत इत्यादि सुगमम् । वेविच्छीति इत्यादि छोऽच इति द्वित्वे झप्झसोरिति छस्य च पक्षे क्वौ शूटाविति छस्य शे शक्लाजेति षङ् ॥ ८३६ ॥

घोंऽनित इति प्राप्ते दीर्घस्य निषेध । जहेति इति ईम् सन्धि ॥८३७॥

दन्शो नलोप स्याद्वा यङ्लुकि । अनीम् पक्षे ददष्टि ददष्टि ददष्टि । ईमि तु ददशीति ददशीति ॥ ८३८ ॥

केवलयङ्निमित्तको व्येस्वपस्यमो जि. स यङ्लुकि पक्षे निषिध्यते । सकल-ङिन्निमित्तको ग्रहादीयौं जि' स तु यङो लुग्वेत्यत्र द्विरिति ज्ञापकात् नित्य एव स्यात् । सोषोप्तीति जौ कृते द्वित्वे षत्वम् । एव सास्वपीति सोषुपीति व्येञ् वेवेति वाव्याति स्यमु सेसेन्ति सास्यन्ति ॥८३९ ॥

## ८४० । रीनो रिन्रनौ वा ।

रीन' ६।, रिन् रनौ १॥, वा ।१। ।

**रीनः स्थाने रिन्रनौ वा स्तो यङ्लुकि ।**

**चरिकरीति चर्करीति चरीकरीति चरिकर्त्ति चर्कर्त्ति चरीकर्त्ति ।**

## ८४१ । यङ्लुक्-क्यलोपेऽरे न गु-व्री ।

यङ्-लुक्-क्यलोपे ७, अरे ७, न ।१।, गु व्री १॥ ।

**वेभिदिता मर्मृजिता । अरे किं ? वेभेत्ति मर्मार्ष्टि ।**

**इति यङन्त पादः ।**

---

## चतुर्थः पादः—लिधुः ।

## ८४२ । लेः काम्यक् स्वेच्छायाम् ।

लि ५।, काम्यक् ।१।, स्वेच्छायाम् ७ ।

**लेः परः काम्यक् स्यात् आत्मेच्छायाम् । आत्मनः पुत्रमिच्छति पुत्रकाम्यति ।**

---

रीन स्थाने रीन उत्पत्तिस्थल । तेन ऋकारवती धी खेरन्ते रिन्रनौ वा स्त इत्यर्थ । अन्यथा नित्त्वात् रीनोऽन्ते रिनरन् प्रसक्ति स्यात् । ईम् पक्षे रिनि चरिकरीति रनि चर्करीति । अनिम् पक्षे रिनि चरिकर्त्ति रीनि चरीकर्त्ति । एव वृत वरिवर्त्ति वृधू वरिवर्द्धीत्यादि ॥ ८४० ॥

यङो लुकि क्यस्य लोपे च गुव्री न स्यातामेव । पुनः पुनरतिशयेन वा भेत्ता वेभिदिता अत्र न गुण । पुन पुनरतिशयेन वा मार्जिता मर्मृजिता अत्र मृजाऽकाङिति इति न वृद्धि । क्यलोपे तु समिधिता समिधक इत्यादौ न गुण । दृषदक इत्यादौ न वृद्धि । जौमरास्तु यङलुगन्ताना जौ परे वृद्धेर्विकल्प कृत्वा नेनाययति नेन्ययति वोभावयति वोभुवयति पापाचयति पापचयति इत्युदाहरन्ति ॥८४१॥

इति यङन्तपाद ।

---

मुक्तिमिच्छति मुक्तिकाम्यति इत्यादौ कित्त्वान्न गुण । अन्यस्य अश्रुतत्वादेव स्वस्य इच्छाया प्राप्तौ स्वग्रहण ज्ञापयति । कर्त्तुरिच्छाया, कर्म्म पुत्रादिर्यदि अस-

## ८४३ । क्योऽम्व्यादश्च ।

क्य १।, अम्व्यात् ५।, ई ।१।, अ. १।, च।१।।

**मान्त-व्य वर्जात् ले: क्य: स्यात् स्वेच्छाया तस्मिन्नवर्णं ई स्यात् ।**

ज्ञानीयति । [ ४२३ ] ओदौतोऽज्वदिति । गव्यति नाव्यति । [ ४८७ ] यङ् ञ्यक्ये इति कर्त्रीयति [ २५८ ] क्यङ्ञ्चौ च । गार्गीयति ।

## ८४४ । नलोप: क्य ङ्ये ।

नलोप १,। क्य ङ्ये ७। ।

राजीयति ।

---

मस्तादिविशेषणात् सम्बन्धिपदाद्वा परो न स्यात्तदा तस्मात् काम्यक् स्यादित्यर्थ इति तेन महान्त पुत्रमिच्छति गुरो पुत्रमिच्छतीत्यादौ न स्यात् । समासे तु महापुत्र काम्यति गुरुपुत्रकाम्यतीत्यादौ स्यादेवेति । दुर्गसिंहोऽप्येव पुत्रकाम्यतीति पुत्र-मिति द्वितीयान्तात् काम्यक् तेर्लुक् त्ये चेति त्ये परे तेर्लुकि धातुसंज्ञाया तिप् शपौ ॥ ८४२ ॥

म च व्यश्च म्व्य नास्ति म्व्य यत्र सोऽम्व्य तस्मात् । ई इति लुप्तप्रथमैकम् । मान्तव्यवर्जात् ले क्यश्चकारात् काम्यक् च स्यात् स्वेच्छायाम् । क्ये सति अवर्णं ई स्यादित्यर्थ । ज्ञानीयति एव ज्ञानकाम्यति कन्यामिच्छति कन्यीयति कन्याका-म्यति । गामिच्छति गव्यति । ओदौतोऽज्वदिति क्यस्याज्वत्वे यवायवेत्यव् । क्ये परे दान्तत्वाभावाद्दावगोरिति नाव एव नावमिच्छति नाव्यति । कर्त्रीयति कर्त्तारमिच्छति इति क्ये यङ् ञ्यक्ये चर्त्री । गार्गीयति गार्ग्यमिच्छति इति क्ये क्यङ्ञ्चौ चेति यस्य लोप. ॥ ८४३ ॥

ननु तेर्लुक् त्ये चेत्यनेन तेर्लुकि दान्तत्वे नौलुप्फेधावित्यनेनैवेष्टसिद्धौ कथ-मिद लुपि कृते तदाद्यविधेनिषेधात् राजीयतीत्यादौ अवर्णस्य ईकारो न स्यादिति लोपविधानमिति चेत् तदा नौलुप्फेऽधौ क्यङ्ये तु लोप् इति तत्रैवावदिष्यत् । ततश्च न लोपविधान ज्ञापयति । लिघूना क्यङ्ययोर्विरामविहित किमपि कार्य्यं न स्यादिति । तेन विद्वांसमिच्छति विदस्यति अत्र सस्ध्वसेति न दङ् । लिङ

८४५। हसात्तयोर्वारे।

हसात् ५।, तयो. ६॥, वा ।१।, अरे ७।।

हसात् परयोः क्यङ्ययोर्लोपः स्यात् वा अरे। समिधिता समिध्यिता। अस्वरात् किम्? किङ्काम्यति स्वःकाम्यति।

८४६। धनोदकाशन-वृषाश्वलेर्ग्रहपानान्न-जाभार्थ ङा डनङ्ङा सन् सनसनौक्ये न षः॥

धन—लि ६।, ग्रह—अर्थे ७।, डा।१।, डनङ्।१।, ङा।१।, सन्।१।, सन्-असनौ १॥, क्ये ७।, न।१।, ष १।।

धनस्य ग्रहणे ङा, उदकस्य पाने डनङ् अशनस्य अन्ने ङा, वृषाश्वयोर्जाभे सन्, लेरर्थे काम्ये सन् असन् च स्यात् क्ये-स' षो न स्यात्।

धनायति उदन्यति अशनायति वृषस्यति अश्वस्यति दधिस्यति दध्यस्यति। ग्रहादौ किम्? धनीयति।

---

मिच्छति लिह्यति अत्र न हस्य ढ। दुहमिच्छति दुह्यति अत्र न हस्य घ। वाचमिच्छति वाच्यति अत्र न कुङ्। पुमांसमिच्छति पुंस्यति अत्र न संयोगान्तलुप्। नमः करोति नमस्यति अत्र न विसर्गः। सर्पिष्यति धनुष्यति इत्यादौ रङोऽभावे षत्व स्यात्। गीर्य्यति धूर्य्यतीत्यादौ व्यंनच्तयोरिति दीर्घं स्यादेव। राजीयतीति राजानमिच्छतीति क्य। एव दण्डिनमिच्छति दण्डीयतीत्यादि॥ ८४४॥

समिधितेत्यादि समिधमैष्टा इति वाक्यम् एव दृशदिता दृशद्यिता। हसात् किम्? ग्रामीयिता। अरे किम्? समिध्यति। द्वितीयसूत्रस्य प्रत्युदाहरणमाह। किङ्काम्यति स्वःकाम्यति एवम् उच्चैः काम्यति कृष्णवत्काम्यतीत्यादि॥ ८४५॥

वृषश्च अश्वश्च वृषाश्वम्। धनञ्च उदकञ्च अशनञ्च वृषाश्वञ्च लिश्चेति तस्य। ग्रहश्च पानञ्च अन्नञ्च जाभश्च अर्थश्च तत् तस्मिन्। ङा इति डनङ् इति ङा इति सन् इति चतुष्टय लुप्तप्रथमैकम्। सन् च असन् च सनसनौ। धनस्य ग्रहणे काम्ये ङा उदकस्य पाने काम्ये डनङ्। अशनस्य अन्ने भक्षणे काम्ये ङा। वृषाश्वयोर्जाभे मैथुने काम्ये सन्। लेरर्थे काम्ये सन् असन् च स्यात् क्ये परे इति सर्वत्र

## ८४७। ढ ङोपमानादाचारे क्यः।

ढ ङोपमानात् ५।, आचारे ७।, क्य १।।

ढात् ङाश्चोपमानात् क्यः स्यात् आचारेऽर्थे।

शिवमिवाचरति शिवीयति विष्णुं, विष्णाविवाचरति विष्णूयति शिवे।

## ८४८। घान्ङ्य-क्वौ स-लोपश्च वा गल्भ-क्लीव-होढात्तु मम्।

घात् ५।, ङ्य क्वौ १॥, स लोप १।, च ।१।, वा ।१।, गल्भ-क्लीव होढात् ५।, न ।१।, मम् १।।

घादुपमानादाचारेऽर्थे ङ्य क्वौ स्तः, सस्य च वा लोपः, गल्भादेस्तु क्वावपि मम्। कृष्ण इवाचरति कृष्णायते कृष्णति, स्वायते स्वति, स्वामास।

---

र्थोऽन्यम्। धनं गृहीतुमिच्छति धनायति उदकं पातुमिच्छति उदन्यति अश्यते यत्तत् अशनमन्नादि कर्म्मण्यनट्। अशनं भोक्तुमिच्छति अशनायति। वृषोऽव शुक्रलः पुरुषः। तथाच शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृष इत्यमरः। वृषेण जम्भ्नुमिच्छति वृषस्यति कामुकी अश्वेन जम्भ्नुमिच्छति अश्वस्यति अश्वा। दधि इच्छति दधिस्यति दध्यस्यति क्ये परे इत्यनेनैव इच्छाप्राप्तौ पुनर्लर्थे काम्ये इति वचनात् अतितृष्णायामित्यर्थः। एवं चीरस्यति लवणस्यति इति। अवर्णान्तस्य क्ये परे असनादेशो नेष्यते। अतितृष्णायामेवेति किम्? सामान्येच्छायां दधीयतीति। गृहादौ किम्? धनमिच्छति धनीयति उदकीयति अशनीयति वृषीयति अश्वीयति। क्य स षौ न स्यादिति लि. कृतस्य सनादेशस्य स. षौ न स्यादित्यर्थः। तेन दधिस्यति मधुस्यतीत्यादौ न षत्वम् सर्पिष्यति धनुष्यतीत्यादौ षत्वं स्यादेव॥ ८४६॥

ढश्च ङश्च ढङम्। ढङश्च तत् उपमानञ्चेति। ढङोपमानं तस्मात्। शिवीयति विष्णुं शैवः। विष्णूयति शिवे वैष्णवः। घोंऽजप्ये इति दीर्घः। अधिकरणोपमानस्य क्ये न लोपो न स्यादिति वक्तव्यम्। राजनीवाचरति राजन्यति गुरौ एव चक्रियति। अधिकरणोपमानस्य किम्? राजानमिवाचरति राजीयति गुरुम्।

[५८२] त्यान्तत्वात् श्राम् पयायते पयस्यते। गल्भायते गल्भते।

## ८४९। भृशादेश्च्व्यर्थे वा त स-लोपश्च।

भृशादे ५।, च्व्यर्थे ७।, वा ।१।, त स लोप १।, च ।१।।

**भृशादेश्च्व्यर्थे ङ्यक्तो वा स्तः, तस्मिन् त स-लोपश्च। भृशायते भृशति भृशीभवति। चेतायते शश्वायते वेहायते।**

---

चीरोदीयन्ति सद्य, सकलजलधरा वासुकीयन्ति नागा। कैलासीयन्ति शैला-दिवि च दिविषदः शङ्करीयन्ति सर्वे। यौषाकीर्णे समन्तात् प्रसरति भुवने शुद्धकीर्त्तिप्रताने, मद्यीषायाश्च भूषा न तदपि सहसा मौक्तिकीयन्ति तस्मात्। अत्र चीरोदीयन्तीत्यादयोऽपप्रयोगा इति केचित्। वस्तुतस्तु आत्मान चीरोदमिवाचरन्तीति कर्म्मोपमानात् क्ये साध्या। दर्शयते भवो भक्तानित्यादिवदेकस्य कर्त्तृकर्म्मत्वयोर्विरोधाभावात्॥ ८४७॥

समस्तस्यासमस्तेन नित्याकाङ्क्षेण सङ्गतिरिति न्यायादुपमानादित्यस्य घादित्यनेन सम्बन्ध। ङ्ये कृते ङित्त्वादात्मनेपद सिद्धमेव। क्वौ कृते तु गल्भादेरप्राप्तमात्मनेपद विधीयते। कृष्णायत इति घोंऽज्व्यरे इति दीर्घ। एव हरीयते विष्णूयते। यङ्व्यक्ये चर्ङौ पितीयते। ओदौतोऽज्वत् गव्यते नाव्यते। क्यङ्ङाच्वोचेति गार्गायते। नलोप क्यङ्ये राजायते दण्डीयते। पुवत्स्युक्तपुस्क इति विदुषीवाचरति विद्वस्यते सतीवाचरति सत्यते सुन्दरीवाचरति सुन्दरायते इत्यादि। कृष्णतीति कृष्ण इवाचरतीति क्वि क इत् इकार उच्चारणार्थ। त्वोवमावो लोप्य। तदन्तत्वेन धातुसञ्ज्ञाया तिप्शप्लोपोऽतोऽदेचोरिति कृष्णस्य अकारलोप। एव हरिरिवाचरति हरयति विष्णवति पितरतीत्यादि। अत्र वाशब्दस्य व्यवस्थावाचित्वादोजोऽप्सरो दुर्मनसा नित्य सलोप। ओजायते अप्सरायते दुर्मनायते। गल्भ इवाचति गल्भायते गल्भते क्लीवायते क्लीवते होडायते होडते। क्विप्रयोगो यथा, वादी मूकति रङ्कति क्षितिपति वैश्वानर. शीतति, क्रोधी शाम्यति दुर्जन सुजनति चिप्रानुग खञ्जति। गर्वो खर्वति सर्वविच्च जडति त्वन्मन्त्रणायन्त्रित, श्रीनित्ये वगलामुखि प्रतिदिन कल्याणि तुभ्य नम। इति॥ ८४८॥

च्व्यर्थेऽभूततद्भावे। तस्मिन्निति ङ्ये क्वौ च परे तसोर्लोपो नित्य इत्यर्थ.। अभृशो

## ८५०। डाज्-लोहितादेः पञ्च।

डाच् लोहितादे' ५।, प १।, च ।१।।

डाजन्तात् लोहितादेश्च च्व्यर्थे ङ्यक्वी वा स्तः पञ्च। पटपटायते पटपटायति पटपटाति पटपटास्यात्। लोहितायते लोहितायति लोहितति लोहितीस्यात्। धर्म्मायते धर्म्मायति धर्म्मति धर्म्मीस्यात्।

## ८५१। शब्द-सुख-कष्टादेः कृति वेद-पापे ङ्यः।

शब्द सुख कष्टादे. ५।, कृति वेद पापे ७।, ङ्य १।।

शब्दादेः कृतौ सुखादेरनुभवे कष्टादे' पापार्थे प्रवृत्तिरित्य-

---

भृशो भवतीति ङ्ये भृशायते क्वौ भृशति पचे च्वौ भृशीभवति। एव चेतायते चेतति उभयवानेन सलोप। पचे चेतीभवति मनश्चक्षुश्चेत इति सलोप। अश्वायते अश्वति उभयवानेन तलोप। पचे च्वौ अश्वद्भवति। वेहायते। वेहति उभयवानेन तलोप पचे च्वौ वेहद्भवति। भृशादिश्च भृशशीघ्रौ चपलोन्मनसौ च उत्क सुमनो दुर्मनसौ च। ओजोवर्चश्चातिमनश्च वृहदथ तेज शुचि वेहच्च। पण्डित अश्वत् मतीप डाचो लोहित धर्म्मावथ निद्रा च। वर्म्म च नीलस्तदनुकृपा च मन्द' फेनोऽप्यथ करुणा च। हरितो भद्रोऽपि च मल्लादिश्चि अङ्गिर्गदितो हि भृशादिः। अत ये निद्रादय शब्दास्ते यद्यपि धर्म्मवचनास्तथापि शब्दशक्तिस्वभावात् धर्म्मिवचना एव। तेन निद्रायते जन अनिद्रावान् निद्रावान् भवतीत्यर्थ ॥८४९॥

यद्यपि सम्पद्यति कृभ्वस्तिषु परेष्वेव डाच् विहितस्तथापि डाजन्तात ङ्यक्वि-विधानसामर्थ्यात् ङ्यक्विविषयेऽपि डाच् स्यात् इति। पञ्चेति चकारेण ञित्त्वात् प्राप्तमात्मनेपदमनुकृष्यते। अपटत् पटत् भवतीति वाक्ये ङ्यविषये डाचि द्विर्भावादौ पटपटा इति स्वरूपात् ङ्य पटपटायते पटपटायति। क्वौ तु पटपटाति। पटपटा स्यादिति ङ्यक्वोरप्राप्तिपचे च्वि डाजन्तस्याव्ययत्वात् च्वौ परे अकारस्य न ईकार.। एवम् अलोहितो लोहितो भवतीति इत्यादि वाक्यम्। लोहितादिश्च। भृशादिशेषा लोहितप्रभृतयो बोद्धव्या ॥ ८५० ॥

आदिशब्दस्य विभि. सम्बन्ध.। वेद इति विदलृमतावित्यस्य घञि रूपम्।

भिमर्थे क्यः स्यात्। शब्दं करोति शब्दायते, वैरायते। सुख-मनुभवति सुखायते, दुःखायते। कष्टं कर्म करोति कष्टायते।

## ८५२। वाष्पोष्मफेनधूमादुद्वान्तौ।

वाष्प—धूमात् ५।, उद्वान्तौ ७।

वाष्पायते उष्मायते फेनायते धूमायते।

## ८५३। रोमन्थाच्चर्वणे।

रोमन्थात् ५।, चर्वणे ७।

रोमन्थायते गौः।

## ८५४। नमस्तपोवरिवः कण्ड्वादिभ्यः क्यः कृतौ।

नमस् कण्ड्वादिभ्य ५।।।, क्य १।, कृतौ ७।

नमस्करोति नमस्यति, तपस्यति वरिवस्यति, कण्डूयति कण्डूयते, चिरीयते, महीयते, क्षीणीयते।

---

कष्ट कर्म करोतीति कर्त्तुं प्रवर्त्तत इत्यर्थ। शब्दादिश्च शब्द वैर प्रीतिप.व कन्दनीहारदुर्द्दिना। कलह सुदिन मेघ कोटा अट्टा अटा तथा। सीका कीटा च पीटा च प्रुष्टा शब्दादिरीरित। सुखं दु खञ्च तृत्र क्रपण करुणस्तथा। प्रतीपानीकसोढासत्रकृच्छ्राशाया सुखादय। कष्टञ्च मन्त्रो गहनञ्च कक्ष कृच्छ्रञ्च कष्टादिषु पञ्च शब्दा ॥८५१॥

एभ्यो क्य स्यादुद्वान्तौ। उद्वान्तिरुद्गमनि सारणम्। वाष्पमुद्वमति वाष्पायते केचिदिह धूम न पठन्ति। किन्तु दिशो धूमायन्ते इति महानाटकम् ॥८५२॥

रोमन्थात् क्य स्यादुद्गीर्य्य चर्वणेऽर्थे। रोमन्थायते गौ उद्गीर्य्य चर्वयतीत्यर्थ। हनुचलन एवेति दुर्गसिंह तेन कीटो रोमन्थ वर्त्तयतीत्यत्र न स्यात् ॥८५३॥

नमस् च तपस् च वरिवस् च कण्ड्वादिश्च ते तेभ्य। एभ्य क्य स्यात् कृतौ अर्थे। वरिवस्यतीति उपास्त इत्यर्थ। कण्ड्वादिश्च कण्डूञ मन्तूञ असु वल्गु, महीङ चिरीङ क्षीणीङ हेट लोप तिरस् उरस् उषस् इषस् तपस् विवस् कुसुम मगध मेधा सुख दु ख चरण भरण दूषण अधर चरम सपर भिषज् भिषुक् तन्तुद् इष ऋष गर्द्दभ एला मेला वेला केला खेला चतम पलम्ब इत्यादिराकृतिगण।

## ८५५ । णेः क्रत्याख्याने ञिः ।

णे ५।, क्रति आख्याने ७।, ञि १।।

णेः परो ञि स्यात् क्रतावाख्याने च ।

प्रश्नं करोति आचष्टे वा प्रश्नयति, ऊढयति औडिढ़त् । औजिढ़दित्येके । [ ४६८ ] लुङ् मद्वहिनामिति । ईशन्तमाचष्टे ईशयति । स्रुग्वन्तमाचष्टे स्रुचयति । स्रग्विनं वा स्रग्वन्तमाचष्टे स्रजयति ।

---

कण्डूयति कण्डूयते मन्तूयति मन्तूयते । असु वल्गु एतावपि उभयपदिनाविति केचित् । महीयते चिरीयते क्षीणीयते । अन्ये परस्मैपदिन ॥८५४॥

पृथग्योगात् क्रतावित्यस्योपादानाच्च नमस्तपो वरिव इत्यादेरनुवृत्त्यभावे प्रकरणबलादेव णे प्राप्तौ णेरिति ग्रहणं ज्ञापयति ञौ विरामविहितकार्य्यं न स्यादिति । तेन त्वच गृह्णाति त्वचयतीत्यादौ न कुडादि । प्रश्नयतीति ञौमश्च डिरिति डित्वात् टिलोपे प्रश्नि इत्यस्य धातुसञ्ज्ञाया तिबादि ऊढयतीति वहधातो क्ति ऊढि ऊढिमाचष्टे इति ञौ डित्वात् टिलोपः । ऊढिमाख्यातवानिति ञौ टिलोपे ऊढि इति स्थिते दि अमागमद्वयम् अङ् नाजन्तादेरिति ऊकार हित्वा ढि इत्यस्य द्वित्वे झभखय इति ढस्य डत्वे ञे लोपे औडिढदिति । एके पण्डिता असिद्ध बहिरङ्गमन्तरङ्गे इति न्यायादन्तरङ्गे द्वित्वे कर्त्तव्ये वहधातोः क्तिप्रत्यये हस्य ढत्वादिक सर्व्वमसिद्ध मत्वा ऊरिकारेण सहितस्य हि इत्यस्य द्वित्वे झभखयेति हस्य जत्वे औजिढदित्युदाहरन्तीत्यर्थः । एव वहधातो क्त ऊढ तमाख्यातवान् इत्यत्र स्वमते औडिढत् तन्मते क्तस्य अकारेण सहितस्य द्वित्वे औजढदिति तन्मन्द भाष्यकारविरुद्धत्वादनेनोपेक्षितमिति ईशन्तमिति ईशलङ ऐश्वर्य्ये ईष्टे इति क्विप् ईट् । ईट् अस्यस्येति मतौ शक्राजेति षङि षोड फे झप् झसोरिति डस्य टत्वे त्ये इत्यनेन टस्य ण । ततो ञौ मतोलुंकि या यस्य लिङ्गस्य पूर्व्वपूर्व्वा प्रकृति सैव तस्येति पुनस्तालव्यशकारोऽवस्थित । एव स्रुग्वन्तमाचष्टे स्रुचयति स्रग्विनमाचष्टे स्रजयति । किञ्च लुङ्मद्वहिनामिति बहुवचनस्य गणार्थत्वादनट् क्तवतु घञ् अल् आनड युक्लोप् एषां लुक् स्यादाख्याने ञौ । यथा राजागमनमाचष्टे राजानमागमयति सीताहरणमाचष्टे सीतां हारयति पचनमाचष्टे पाचयति । गतवन्तमाचष्टे

८५६ । श्वेताश्वाश्वतरगालोड़िताह्वरकस्याश्वतरेतक-लोपः ।

श्वेताश्व—आह्वरकस्य ६।, अश्व—कलोप १।।

श्वेताश्वमाचष्टे श्वेतयति, अश्वयति । गालोडयति आह्वरयति ।

८५७ । नाप्सत्यार्थ-वेदैकाजतः ।

नाप् ।१।, सत्यार्थ वेदैकाजात ६। ।

सत्यादेरेकाचोऽकारान्तस्य च णौ नाप् स्यात्, न इत् । सत्यापयति अर्थापयति वेदापयति स्वापयति । [४७०] वाढान्तिकेति साधादयः, साधयति । प्रशस्यमाचष्टे श्रापयति ।

---

गमयति वादितवन्त प्रयोजितवान् अवीवदत् । बलिबन्धमाचष्टे बलि बन्धयति । कंसवधमाचष्टे कस घातयति । ब्राह्मणीमाचष्टे ब्रह्मयति केचित्तु श्येन्यादेर्णौ पुवद्भाव विधाय श्येनीमाचष्टे श्वेतयति एवम् एणीम् एतयति हरिणी हरितयति भरिणी भरितयति इत्याहु । एव आशिष ददात्याचष्टे वा आशिषयति सम्यक करोति सम्यचयतीत्यादय साध्या ॥८५५॥

श्वेताश्वमाचष्टे श्वेतयति, अश्वतरमाचष्टे अश्वयति गालोडितमाचष्टे गालोडयति आह्वरकमाचष्टे आह्वरयति ॥८५६ ॥

एकाचासौ अच्चेति एकाजत् । सत्यश्च अर्थश्च वेदश्च एकाजश्च तत् तस्य । सत्यमाचष्टे इत्यादि साध्यम् । साधादय इति वाढमाचष्टे साधयति । एव अन्तिक नेदयति स्थूल स्थवयति दूर दवयति दूरयतीत्यपि केचित् । युवान यवयति युवाल्पौ कन् वेति पक्षे कनयति । क्षिप्र क्षेपयति क्षुद्र क्षोदयति प्रिय प्रापयति स्थिर स्थापयति स्फिर स्फापयति उरु वरयति गुरु गरयति बहुल बहयति तृप्र त्रपयति दीर्घं द्राघयति ह्रस्व ह्रसयति वृद्ध वर्षयति ज्यो वृद्धस्येति पक्षे ज्यापयति । वृन्दारक वृन्दयति । तृन्लोप्य कर्त्तार कारयति प्रशस्य श्रापयति पक्षेज्यो वृद्धस्येति ज्यापयति । पृथुम्रदित्यादि पृथु प्रथयति मृदु म्रदयति कृश क्रशयति भृश भ्रशयति दृढ द्रढयति परिवृढ परिव्रढयति । युवाल्पौ कन् वेति अल्प कनयति अल्पयति बह्वोर्णौ भूरिति वक्तव्य बहुमाचष्टे भावयति ॥८५७॥

## ८५८। ञिः कल्यादेः।

ञि १।, कल्यादे' ५।।

कल्यादेरर्थविशेषे ञि स्यात्। कलिं गृह्णाति कलयति, अचकलत्। हलयति, अजहलत्। कृतयति अचीकृतत् अचकृतत्। वर्णयति, त्वचयति तूस्तानि विनिहन्ति वितूस्तयति। वस्त्र संच्छादयति संवस्त्रयति। वर्मणा संनह्यति सवर्मयति। चूर्णैरवध्वसते अवचूर्णयति। हस्तिना अतिक्रामति अतिहस्तयति वीणया उपगायति उपवीणयति। तूलैरवकुष्णाति अवतूलयति। श्लोकैरुपस्तौति उपश्लोकयति। सेनया अभिमुखं याति अभिषेणयति, अभिषिषेणयिषति। रूप पश्यति रूपयति। लोमान्यनुमार्ष्टि अनुलोमयति। हस्तौ निरस्यति अतिहस्तयति पुच्छमुत्क्षिपति उत्पुच्छयते। भाण्डानि सचिनोति सभाण्डयते। चीवरं समार्जयति परिदधाति वा सञ्चीवरयते भिक्षु'

---

कलिहली कामधेनू सर्वार्थवाचकत्वादिति प्राञ्च। निपातो ह्यर्थविशेषे तदेव विवृणोमि। कलि गृह्णातीत्यादि। अचकलदिति अकलिहलेरिति निषेधान्न सन्वद्भाव.। अचीकृतदित्यादि ध्यनेकाचोरिति सन्वद्वा त्वचयतीति पय्यन्त गृह्णातीति वाक्यम्। वितूस्तयतीति केशान् विजटीकरोतीत्यर्थ इति विलोचन। तूस्त पापमिति केचित्। वस्त्रं परिदधातीत्यर्थेऽपि सवस्त्रयति। वर्म्मणा कावचेनेत्यर्थ। अवध्वसते आक्षिपतीत्यर्थ। अतिहस्तयतीति हस्तिनेत्युपलक्षणम् अर्वतातिक्रामति अत्यर्वयतीत्यपि स्यात्। सेनया अभिसम्मुख याति अभिषेणयतीति णीक इति षत्वे ष्टुर्वा इति णत्वम्। अभिषिषेणयिषतीति अभिषेणयितुमिच्छतीति सन् वसोऽरस्येतीनि द्विलादौ दृशस्यादेरिति द्वयो षत्वम्। हस्तौ निरस्यति अतिहस्तयति निक्षिपतीत्यर्थ पुच्छभाण्डचीवरेभ्य आत्मनेपद वक्तव्यम्। एवं व्रताङ्गीजनाभीजनयो: परयो.। पय' व्रतयति भुङ्क्त इत्यर्थ.। वृषलान्न व्रतयति न भुङ्क्त इत्यर्थ:। एव वाष्पेण छिनत्ति सवाष्पयति। पाशाद्विमोचयति विपाशयतीत्यादि॥ ८५८॥

**१०१२ । शकृत्-स्तम्बात् दृति-नाथात् फले-रजो-मलात् देववातात् कृ-हृ-ग्रहाप इः ।**

शकृत्-स्तम्बात् ५।, दृति नाथात् ५।, फले रजस् मलात् ५।, देववातात् ५।, कृ हृ ग्रह आप ५।, इ, १।।

एभ्यः परेभ्यः क्रमादेतेभ्यः इः स्यात् घे। शकृत्करिः वत्सः, स्तम्बकरिः व्रीहिः, दृतिहरिः श्वा, नाथहरिः पशुः, फलेग्रहिः रजोग्रहिः मलग्रहिः देवापिः वातापिः ।

**१०१३ । कुच्यात्मोदरात् भुः खिः ।**

कुचि आत्मन्-उदरात् ५।, भु ५।, खि १।।

एभ्यः परात् भृञः खिः स्यात् घे ।

---

कार वैरकार चाटुकार सूत्रकार मन्त्रकार ग्रन्थकार कुम्भकार कर्मकारः पदकार सूपकार अन्धकार इत्यादि। ढात् परात् हृञोऽवहनेऽन्। अंशहरो दायाद, व्याधिहरम् औषधं, दुःखहरा सम्पत्तिः। वहने तु भारहारी वैतनिक । वयोबोधकवहने च। कवचहरी युवा। आङस्ताच्छील्ये। पुष्पाहर कुशाहर । अदण्डसूत्रात् प्रहरणात् धृञ । वज्रधरः चक्रधर गदाधर शूलधर धनुर्द्धर । अदण्डसूत्रादिति किम् ? दण्डधार सूत्रधार । दण्डधर इत्यपि दृश्यते। सूत्र-वर्जनात् प्रहरणभिन्नादपि भूधर जटाधर महीधर गङ्गाधर विद्याधर । दण्डादिभ्यो ग्रहो वा। दण्डग्रह दण्डग्राहः धनुर्ग्रह धनुर्ग्राह । शक्तिलाङ्गूलाङ्कुशयष्टितोमरसूत्रघटघटीभ्यो ग्रहोऽन्। शक्तिं गृह्णातीति शक्तिग्रहः। एव लाङ्गूलग्रह अङ्कुशग्रह यष्टिग्रह तोमरग्रह सूत्रग्रह घटग्रह घटीग्रह ॥ १०११ ॥

पृथक् पदकरणं यथासङ्ख्यार्थम्। तेन शकृत्स्तम्बाभ्यां कृञ दृतिनाथाभ्यां हृञ फलेरजोमलेभ्यो ग्रह देववाताभ्यामापः पर इ स्यात् घे इत्यर्थ । शकृत्-करिरित्यादि। शकृत् तालव्यादिर्विष्ठावाचक । शकृत् करोतीति शकृत्करि-र्वत्स । एव स्तम्बकरिर्व्रीहिः। दृतिश्चर्मता हरतीति दृतिहरि, श्वा। एवं नाथहरि पशु । फल गृह्णातीति फलेग्रहि । फले इत्येकारान्तग्रहणादकारस्य एकारः एवं रजोग्रहि मलग्रहि । देवम् आप्नोतीति देवापि एवं वातापि. ॥ १०१२ ॥

कुक्षिश्च आत्मा च उदरश्चेति तस्मात् ॥ १०१३ ॥

१०१४। खित्यव्याजरुषो मनुखौ द्वीक्षान्तत्वं त्वेकाजिचः।

खिति ७, अव्याजरुष ६।, मनुखौ १॥, द्वीक्षान्तत्व १।, तु।१।, एकाजिच ६।।

व्यवर्जस्याजन्तस्यारुषश्च मन् स्यात् खश्च एकाजिचस्तु द्वीक्षान्तत्व स्यात् खिदन्ते धौ परे। कुक्षिम्भरिः आत्मम्भरिः उदरम्भरिः।

१०१५। खश्रेजेः।

खश्।१।, एजे ५।।

ढात् परात् एजयतेः खश् स्यात् घे। जनमेजयः।

१०१६। मन्यात् स्वार्थे।

मन्यात् ५।, स्वार्थे ७।।

आत्मानं गां मन्यते गामन्यः प्रियमन्या।

नास्ति व्य यत्र सोऽव्य अव्यश्चासौ अच्चेति अव्याच् अव्याच्च अरुस् च अव्याजरुस् तस्य द्वी द्वितीया तस्या क्षम् एकवचन द्वीक्षन् अन्ते यस्य न द्वीक्षान्त तस्य भाव द्वीक्षान्तत्वम्। एकाचासौ इच् इजन्तश्चेति एकाजिच् तस्य। कुक्षि बिभर्त्ति इति कुक्षिम्भरिः। पूर्वात् खिप्रत्ययेऽनेन पूर्वस्य मन्। आत्मान बिभर्त्तीति आत्मम्भरि। अत्र लुकि विरामे नस्य लुपि नज्ञा निर्दिष्टमनित्यमिति न्यायात तदादिविधेर्निषेधस्यानित्यत्वे मन् स्यात् एवम् उदरम्भरि ॥१०१४॥

एजेरिति एज्, कम्पे इत्यस्य ञ्यन्तस्य ग्रहणम्। जनम् एजयतीति जनमेजय। खश. शित्त्वाद्रत्वे अपि ञेर्लोपाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मन् ॥१०१५॥

ढात् परात् मन्यते. खश् स्यात् कर्त्तरि स्वार्थे स्वनिमित्तधात्वर्थे। आत्मान गा मन्यते इति गामन्य। अत्र खश. शित्त्वाद्रत्वे दिवसुतुर्दति श्यनि लोपोऽत इत्यकारलोपे गोशब्दस्य द्वितीयैकवचनान्तत्वम्। एव प्रियमन्या ॥१०१६॥

## १०१७। मुञ्ज कूलास्यपुष्पात् धेटः।

मुञ्ज-कूल-आस्य पुष्पात् ५।, धेट ५।।

एभ्यः परात् धेटः खश् स्यात् घे। मुञ्जन्धयः कूलन्धयः आस्यन्धयः पुष्पन्धयः मुञ्जन्धयी, धेटः टित्त्वादीप्। [२५७]।

## १०१८। नाड़ी-शुनी-स्तन-कर-मुष्टि-पाणि-नासिकात् ध्मश्च।

नाडी-नासिकात् ५।, ध्म ५।, च।१।

एभ्यः परात् ध्मो धेटश्च खश् स्यात् घे। नाडिन्धमः नाडिन्धयः।

## १०१९। घटी-खारी-वाताद् विध्वरुस्तिला-दसूर्य्योग्राल्ललाटा-न्मित-नख-मानात् ध्मा-तुद-हृश तप-पचः।

घटी खारी वातात् ५।, विधु अरुस् तिलात् ५।,असूर्य्य-उग्रात् ५।, ललाटात५।, मित नख मानात् ५।, ध्मा-तुद हृश तप-पच ५।।

एभ्यः परेभ्यः क्रमादेतेभ्यः खश् स्यात् घे। घटिन्धम, खारिन्धमः वातन्धमः विधुन्तुदः, अरुन्तुदः तिलन्तुदः असूर्य्यम्पश्य उग्रम्पश्यः ललाटन्तपः मितम्पचः,नखम्पचः द्रोणम्पचः।

---

मुञ्ज धयतीति मुञ्जन्धय। अत्र शिति परे एचोऽशित्या इत्यस्याप्राप्तौ एकारस्याय। खिदन्ते परे पूर्वस्य मन्। एव कूलन्धय इत्यादि। धेटः टित्त्वादिति यत्र धेटधातोरेकारस्य अयादेश. स्यात् तत्रैव टित्त्वादीप् इत्यर्थ। तेन मुञ्जन्धयी। एव धेटदृशपाघ्रेति शप्रत्यये उद्धयी। नाडीशुनीत्यादिना खश्प्रत्यये नाडीन्धयीत्यादि। अयादेशाभावे तु धातव्या धानीया इत्यादौ न ईप्॥१०१७॥

नाडी च शुनी च स्तनश्च करश्च मुष्टिश्च पाणिश्च नासिका चेति तस्मात्। नाडीं धमतीति नाडीन्धम.। खश शित्त्वाद्गुले अपि धमादेशे खित्त्वात् पूर्वस्य मन् खौ। एव नाडिन्धय इत्यादि॥१०१८॥

पृथकपदकरण मादिभिर्यथासख्यार्थम्। तेन घटीखारीवातेभ्यो ध्म. विध्वरु-

१०२०। कूलादुद्रुजुद्वहः।

कूलात् ५।, उद्-रुज उद्-वह ५।।

कूलात् आभ्यां खश् स्यात् घे। कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः।

१०२१। प्रियवशाद्भयर्त्तिमेघात् सर्वकूलाभ्रकरीषात् वद-कृ-कषः खः।

प्रियवशात् ५।, भय ऋति मेघात् ५।, सर्व कूल अभ्र करीषात् ५।, वद कृ-कष ५।, ख १।।

एभ्यः परेभ्यः क्रमादेतेभ्यः खः स्यात् घे। प्रियंवदः वशंवदः भयङ्करः ऋतिङ्करः मेघङ्करः सर्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः।

---

स्तिलेभ स्तुद असूर्य्योग्राभ्यां दृश ललाटात्तप मितनखमानेभ्य पच पर खश् स्यात् कर्त्तरि। घटी धमतीति घटिन्धम। खश शित्वात् अपि धमादेशे खित्वात पूर्वस्य मन् स्त्री। एव खरी गर्गरीं धमतीति खरिन्धम.। खारीति पाठ परिमाणविशेष। अरुस्तुदतीति अरुन्तुद. अत्र खश शित्वाद्दसञ्ज्ञाया दिवसुतुदेति अप्रत्यये तस्य ङित्वाद्गुणाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मनि स्यादं सं लोप इति सलोप। सूर्य्य न पश्यतीति असूर्य्यम्पश्य। मानमिह परिमाणवाचक द्रोणाढकादि, तेन द्रोणम्पच आढकम्पच इत्यादि। अन्यत् सुगमम् ॥१०१९॥

उभयत्र उदो ग्रहण स्पष्टार्थम्। रुजशौ भङ्गे। कूलमुद्रुजतीति कूलमुद्रुज। खश. शित्वाद्दत्वे दिवसुतुदेति अप्रत्यये ङित्वात् गुणाभावे पूर्वस्य मन्। एव कूलमुद्वह ॥१०२०॥

पृथक्पदकरण वदादिभिर्यथासङ्ख्यार्थम्। तेन प्रियवशाभ्यां वद भयर्त्तिमेघेभ्य. कृञ सर्वकूलाभ्रकरीषेभ्य. कष पर. ख स्यात् प्रिय वदति कथयतीति प्रियवद एव वशंवद। भय करोतीति भयङ्कर. एवम् ऋतिङ्कर मेघङ्कर.। सर्व कषति हन्तीति सर्वङ्कष.। एव कूलङ्कष. अभ्रङ्कष. करीषङ्कष. ॥१०२१॥

## १०२२ । क्षेमप्रियमद्रात् कुर्वा ।

क्षेम-प्रिय मद्रात् ५।, कुः ५।, वा ।१।।

एभ्यः कृञः खो वा स्यात् घे । क्षेमङ्करः प्रियङ्करः मद्रङ्करः । पक्षे क्षेमकारः ।

## १०२३ । भावघे त्वाश्रिताद्भुवः ।

भाव-घे ७।, तु ।१।, आश्रितात् ५।, भुवः ५।।

आश्रिताद्भुवः खः स्यात् भावे घे ( करणे ) वा । आश्रितम्भवं वर्त्तते, आश्रितं भवत्यनेनेति आश्रितम्भवः ओदनः ।

## १०२४ । तॄ भृ वृ दॄ जि धृ तप यम दम मद लिह गम सहाजो नाम्नि ।

तॄ—अजः ५।, नाम्नि ७। ।

एभ्यः खः स्यात् संज्ञायाम् । रथेन तरतीति रथन्तरः, विश्वम्भरः, पतिंवरा, पुरन्दरः भगन्दरः धनञ्जयः वसुन्धरा, शत्रुन्तपः परन्तपः वाचंयमः अरिन्दमः, इरया माद्यतीति इरम्मदो हस्ती, वहंलिहः भुजङ्गमः ( पतङ्गमः प्लवङ्गमः ) सर्वंसहः वातमजः ।

---

क्षेमङ्करोतीति क्षेमङ्करः । पक्षे वाशब्दस्य व्यवस्थावाचित्वात् हेतुताच्छील्यानुलोम्येष्वर्थेषु तदभावेऽपि ढात् घस्वेव । तेन क्षेमकार इत्यादि ॥१०२२॥

आश्रितस्त्वम: आश्रितस्य भवनम् आश्रितम्भवम् अत्र भावे खः । आश्रितम्भवत्यनेनेति आश्रितम्भव ओदनः अत्र करणे खः ॥१०२३॥

तॄ तरे भृञि भृतिपुष्ट्योः वृ न ञ ग वृतौ दॄयगि विदारे जि जये धृ अच धृञा तपौ तापैश्वर्य्ययोः यमौ ञ विरतौ दन्भू इर्षमे मदीभिर्यञि हर्षे लिह आन औगमॢ गत्यां सहजङ शक्तौ अज क्षेपे गतौ । इत्येतेभ्यः खः स्यात् नाम्नि । रथेन तरतीति रथन्तरः विश्वं बिभर्त्तीति विश्वम्भरः । पतिं वृणोतीति पतिंवरा । पुरं दीर्य्यतीति पुरन्दरः । एवं भगन्दरः । धनं जयतीति धनञ्जयः । वसूनि धरतीति वसुन्धरा । शत्रुं तपतीति शत्रुन्तपः एवं परन्तपः । वाचं यच्छतीति

१०२५। शर्द्धंजहोरङ्गमोरगतुरगतुरङ्गमविहगविहङ्गमभुजगभुजङ्गपतगपतङ्गप्लवगप्लवङ्गाः।

शर्द्धंजह—प्लवङ्गाः १॥।

एते खान्ता निपात्यन्ते। शर्द्धं जहातीति शर्द्धंजहो माषः, उरसा गच्छतीति उरङ्गमः, उरगः त्वरया गच्छतीति तुरगः तुरङ्गमः। विहायसा गच्छतीति विहगः, विहङ्गमः, भुजेन गच्छतीति भुजगः भुजङ्गः, पतेन गच्छतीति पतगः पतङ्गः, प्लवेन गच्छतीति प्लवगः प्लवङ्गः।

१०२६। नग्नपलितप्रियान्धस्थूलसुभगाढ्यात् कुः खनट् धे च्व्यर्थे।

नग्न—आढ्यात् ५।, कुः ५।, खनट् ।१।, धे ७।, च्व्यर्थे ७।।

एभ्यः परात् कृञः खनट् स्यात् धे च्व्यर्थे। अनग्नो नग्नः

---

वाचंयमः अत खिति परे पूर्वस्य मन आपोऽपि ह्रस्वः। अरीन् दाम्यतीति अरिन्दमः। इरा जलम् इरा भूवाक् सुराप्सु स्यात् इत्यमरात् इरया माद्यतीति इरम्मदो वज्राग्निः। वहं लिढ़ीति वहंलिहः। खनिगदिमदीत्यत्र इत्, करणज्ञापकादत्र न मः। भुजेन गच्छतीति भुजङ्गमः। भुजो ग्नौ वक्रणे कृञोः कभाव इति भावे घञ्प्रत्यये भुजो वक्रणम्। एवं प्लवेन गच्छतीति प्लवङ्गमः। सर्वं सहते सर्वंसहः। वातमजतीति वातमजो मृगविशेषः। खनिगदिमदीत्यत्र इत्, करणज्ञापकादत्र नवर्णादिशः। एषूपदेष्वेव संज्ञा सम्भवतीति उपपदनियमो बोध्यः। किन्तु अन्यान्यपि रूपाणि च दृश्यते। यथा रिपुञ्जयः बलास्ते कुम्भकर्णादयः इति महानाटकम्। परं हृणुते हृदयङ्गमः सखा इति कालिदासः॥१०२४॥

मधुज कृदवे। शर्द्धम् आर्द्रत्वं जहातीति शर्द्धंजहो माषः। उरसा गच्छतीति उरङ्गमः उरगः। त्वरया गच्छतीति तुरगः तुरङ्गमः। विहायसा गच्छतीति विहगः विहङ्गमः। भुजेन गच्छतीति भुजगः भुजङ्गः पत्यतेऽनेनेति पतः पक्षः पतेन गच्छतीति पतगः पतङ्गः। प्लवेन गच्छतीति प्लवगः प्लवङ्गः बहुवचनात्सन्येऽपि त्वरया गच्छतीति तुरङ्गः; विहायसा गच्छतीति विहङ्गः॥१०२५॥

क्रियतेऽनेनेति नग्नङ्करणं द्यूतं, पलितङ्करणं प्रियङ्करणम् अन्धङ्करणः शोकः, स्थूलङ्करण दधि, सुभगङ्करण रूपम्, आढ्यङ्करण वित्तम्।

## १०२७। भुवो घे खिष्णु-खुकञौ।

भुव ५।, घे ७।, खिष्णु खुकञौ १॥।

नग्नादिभ्यः परात् भुवश्च्व्यर्थे एतौ घे स्तः। नग्नम्भविष्णुः नग्नम्भावुकः।

## १०२८। ढात् भज-वह-सहो विण्।

ढात् ५।, भज-वह सह ५।, विण् ।१।।

ढात् परेभ्य एभ्यो विण् स्यात्। सुखभाक् प्रष्ठवाट् तुराषाट्।

## १०२९। अनडुच्छ्वेतवाहादिः।

अनडुच्छ्वेतवाहादि १।।

एते विणन्ता निपात्यन्ते। अनो वहतीति अनड्वान् वृषः। श्वेतैरुह्यते श्वेतवाः इन्द्रः। अवयजतीति अवयाः,

---

अनग्नो नग्नः क्रियतेऽनेनेति नग्नङ्करण खित्वात् पूर्वस्य मन्। अप्रिय प्रिय क्रियतेऽनेनेति प्रियङ्करणी सेवा टित्वादीप्। च्व्यर्थे प्रत्ययविधानात् च्विप्रत्ययो न स्यात्। तेन नग्नीकरोत्यनेनेत्यत्र खनट् न स्यात्। अनट् च न स्यादित्येके ॥१०२६॥

अनग्नो नग्नो भवतीति नग्नम्भविष्णु, खित्वात् पूर्वस्य मन्। एव पलितम्भविष्णुः प्रियम्भविष्णुः अन्धम्भविष्णु' स्थूलम्भविष्णु सुभगम्भविष्णु आढ्यम्भविष्णु। एव नग्नम्भावुक इत्यादौ खित्वात् पूर्वस्य मन् ञिलात् वृद्धि ॥१०२७॥

सुख भजतीति सुखभाक् विण् इकार उच्चारणार्थः। णकारो वृद्ध्यर्थ त्यो वमाव इति वस्य लोप। प्रष्ठ पुरोग त वहतीति प्रष्ठवाट्। तुरा वेग तुरा सहते तुराषाट् अत्र ह्रोढोभाविति ढत्वे शासवसघससाढाच्चेति षत्वम्। भजतेरुपसर्गपूर्वकादपि विणित्येके। प्रभाक् विभाक्। सहि वहिभ्या छन्दस्येव विणित्येके ॥१०२८॥

उक्थानि शंसतीति उक्थशाः यजमानः। पुरोडाः हविः, पुरोडाशः।

**१०३०। क्रम गम खन सन जनो विट्।**

क्रम—जनः ५।, विट् ।१।।

एभ्यो विट् स्यात् घे।

**१०३१। विड्वनोर्डा।**

विड् वनी ७॥, डा ।१।।

धोरन्त्यस्य डा स्यात् विटि वनि च। उदधिक्राः अग्रेगाः विसखाः गोषाः अब्जाः।

**१०३२। त्रासुसिस् मन् क्वनिप् वनिप् विच् क्विपः।**

त्रासु—क्विप १॥।

धोरेते स्युः के भावे च। नीयते अनेनेति नेत्र दंष्ट्रा

श्वेतवाह आदिर्यस्य स श्वेतवाहादि. अत्र विरामेऽपि डसङ्गोऽप्राप्ति सूक्तत्वात् अन् शकट वहतीति अनड्वान् वृष.। श्वेतैरुह्यते इति श्वेतवा इन्द्र। अत्र कर्त्तुं परात् वहे. कर्मणि वाच्ये विण्। अवयजतीत्यवया कर्मपूर्वकत्वाभावेऽपि विण्। उक्थानि शंसतीति उक्थशा' यजमान, अ॰ तकारस्य थकारे शंसतेर्नलोपे हृद्धिय। पुर आदौ दाश्यते यत् स पुरोडा हवि, अत्र कर्मणि विणि दकारस्य डकार' पुंस्त्वञ्च। पुरोडाश इत्यकारान्तोऽपि तथाच सदा पुरोडाश पवित्रिताधर इति ॥ १०२९ ॥

अग्रे गच्छतीति अग्रेगा इत्यधिकरणादपि विट् स्यात् इत्याशङ्का ढादिति नोक्तम् ॥ १०३० ॥

विट् साहचर्य्यात् गुणी वन्नेव ग्राह्य'। तेन सुपीवा प्रातरित्वा इत्यादौ क्वनिपि न प्रसङ्ग। उदधि क्रामतीति उदधिक्रा' पूर्वेण विट्। गा सनति ददातीति गोषा इति सनधाती सस्य कृतत्वात् षत्वम् अप्सु जायते अब्जा ॥ १०३१ ॥

नद्धी योत्रम्, उरुव्यचाः नृचचाः रजः चक्षुः सर्पिः सुष्ठु ददातीति सुदामा गन्मा ।

## १०३३ । ह्वन्-व-तेर्नेम् ।

ह्वन्-व-ते ६।, न ।१।, इम् ।१। ।

**क्तो ह्वन्स्य वस्य तेश्च इम् न स्यात् । सुशर्म्मा सुपीवा प्रातरित्वा सुत्वा, भूरिदावा वारिजावा सोमपाः रेट् रीट् क्रुङ् युङ् प्रत्यङ् अवद्यूः मित्रध्रौः आध्रौः गौः बहुभ्रट् बहुभ्रट् घृतस्पृक् शस्यात् क्रव्यात् ।**

वश्च अस् च उस् च इस् च मन् च क्वनिप् च विच्च क्विप् च ते । पृथग्-योगात् सर्वधातुभ्यो विहिता अपि प्रयोगानुसारात् धातुविशेषेभ्य एव कारकविशेषे भावे च स्युरिति बोध्यम् । अन्यथा बन्त्रम् इत्याद्यपप्रयोगापत्तेः । नीयतेऽनेनेति नेत्रम् । दश्यतेऽनयेति दंष्ट्रा अत्र नस्यानुस्वारे शच्छाजेति षञ्जि ष्टुभिरिति तस्य च टत्वे अभिधानात् स्त्रीत्वे आप् । नह्यतेऽनयेति नद्ध्री रज्जुः । अत्र नहो धङ् भाविति हस्य ढभावात्तथोरिति तस्य धत्वे झप्झसोरिति पूर्वं धस्य दत्वेऽभिधानात् स्त्रीत्वे नदादित्वात् ईप् । यूयतेऽनेनेति योत्रम् । एवं युजिर्योजि योक्त्रं दाञ लूनौ दात्रं पा पाने पात्रं तुद व्यथे तोत्रं मिहौ सिचि मेढ्रं षिणञ्च बन्धे सेत्रं सिच पश्चौ सेक्त्रं ष्टुञ स्तुतौ स्तोत्रं शस बधे शस्त्रम् अस इर् अस्त्रं पूञ शौचे पोत्रं पतल्ट पत्रं भसजि द्युतौ भस्त्रा अमगतौ अन्त्रीत्यादि । एषु ये सेमस्तेभ्यो ह्वन् वतेरिति वक्ष्यमाणादिम् निषेधः । असमाह । उरु महान्त्र विचति उरुव्यचाः व्यचोजिरित्यत्र अस् वर्जनात् न जि. । नरं चष्टे नृचचाः चक्ष कसात्र इत्यत्र अस् वर्जनात् न आदेशः । रज्यतेऽनेनेति रजः रन्जोऽपधकेति न लोपः । एवं विधश्च विधौ विधतीति वेधाः । उसमाह । चक्षङ्ञ वदे अनेकार्थत्वात् दर्श-नाय । चष्टेऽनेनेति चक्षुः चक्ष कसात्र इत्यत्र उस् वर्जनात् न आदेशः । एवं धन रवे धनुः । इसमाह । सर्पतीति सर्पिः एवं हूयते यत्तद्धविः । मनमाह । सुष्ठु ददातीति सुदामा । गच्छतीति गन्मा । अत्र धोर्मन इति मस्य न ॥ १०३२ ॥

ह्वन् इति शिषवकारान्तः प्रत्याहारः । तेन क्षणक् ष्टणक् गृध्नुः धृष्णुः रक्ष्णः अन इत्यादौ इम् न स्यात् । न च ह्वकारादेर्झभादेश्च प्रत्ययस्य असम्भवे जकारादेः सम्भवेऽपि तस्य इमः असम्भवे वम इत्यनेनाभीष्टसिद्धौ इति वाच्यम् । तथोक्तौ

वम प्रत्याहारस्य अप्रसिद्धतया वकारमकारयोरेव ग्रहणमिति भ्रमापत्ते । सुशृणा-तीति सुशर्म्मा अनेन इम् निषेध । क्वनिपमाह। सुष्ठु पिबतीति सुपीवा अत्र क्वनिप इकार उच्चारणार्थं कित्त्वात् गुणे दामागे इति ङी। प्रातरेति प्रातरित्वा सुनोतीति सुत्वा उभयत्र कित्त्वात् गुणाभावे पित्त्वात् ह्रस्य तन्. कर्म्मपूर्वकदृशो ऽतीति क्वनिप्। मेरु दृष्टवान् मेरुदृश्वा एव बहुदृश्वा। राजसहाभ्या युधोऽप्य-तीति। राजयुध्वा सहयुध्वा एव राजान कृतवान् राजकृत्वा। वनिपमाह। भूरि ददातीति भूरिदावा। वारिणि जायते वारिजावा उभयत्र विड्वनोरिति ङा। एव यजते स्म यज्वा अत्र क्वनिगदिसदीत्यत्र इतुकरणज्ञापकात् नङा आदेश। विच माह। सोम पिबतीति सोमपा अत्र विच इकार उच्चारणार्थ चकारस्तु प्राचीन् मतानुवादार्थो नत्वव्ययार्थ । व्यो वमात्र इति वस्य लोप । रेषति रोषतीति रेट् रीट् विचि गुण। क्रुन्चु गत्या विचि क्रुड् अस्मात् क्विप् न स्यादनभिधानात् । क्विपमाह। अस्य इकार उच्चारणार्थ क्विपःकित्त्वात् गुणाभावादि । ... स्रुश्च रन् व्यो वमात्र इति वस्य लोप । युनक्तीति युड् अत्र क्विपि नलोपादि ... युजिरो ऽसे इति नुण्। प्रत्यञ्चतीति पूजार्थस्य नलोपाभावे प्रत्यङ्। गत्यर्थस्य तु नकार लोपेऽपि त्रिदचोऽड्वेरिति नुणि प्रत्यङ् अर्जेर्व्यतीति अचवू' क्वौ' शूटाविति ऊट्। मित्र शास्तीति मित्रशी क्वौत्वाशासश्चेत्युक्ते आकारस्य इकारे शासवसेति षत्वम्। आशासनमाशी इकारे षत्वम्। आशास इति किम् ? प्रशा । स्तृणातीति गी अत्र ऋदिरणाविति इर्। वहतीति वहो घोटकादि । तस्मात् भ्रस्जति वहभ्रट इमुङ ... इति न लोपे भ्रज्जेति षङ्। घृत स्पृशतीति घृतस्पृक् कित्त्वात् न गुण । शस्य मत्तीति शस्यात्। एव क्रव्यात्। ईषद्दु सो प्रगाहिद्दिताभ्यामाभ्याम नखल्-भ्याम् असरूपाणा तव्यादीना बाधदर्शनात् कम्मपूर्वकवार्ता परविहितौ अहरूनः-वपि क्विप् विचौ ढात् षसिति हनचरेत्यादि स्तकुट इत्येते क्वचित् बाध्यते क्वचि-दिति कि क्रव्यात् क्रव्याद अत्र क्विप् अण् च। शनुहा ... टक् च। कर्म्मकृत् कर्म्मकर, अत्र क्विप् टश्च। अग्निश्चित सो...त् सुओऽनेन क्विप् अग्नि चितवान अग्निचित् एव सोमसुत्। सु पुण्य पाप कर्म्म मन्त्र पदभ्य कृञोऽतीति क्विप्। सुष्ठु कृतवान् सुकृत् पापकृत् धर्म्मकृत् मन्त्रकृत् पदकृत। समान चैवेष्टसिद्धौ विच् क्विप इति बहुवचन प्रत्ययान्तरप्रापणयन्। अन कुत्साया विक्रीणातेरिणतोः कर्त्तरि। सोम विक्रीतवान् सोमविक्रयी एव शुक्रविक्रयी घृतविक्रयी ... विक्रयी लौहविक्रयी विप्र ॥१०२२॥

## १०३४ । छादे-स्त्रमन्-क्वीस्-घे स्वः ।

छादे ६।, त्र-मन् क्वि-इस्-घे ७।, स्व. १। ।

छादयतेः स्वः स्यात् त्रे मनि क्वा विसि घे च । छत्रं छद्म तनुच्छत् छदिः उरश्छदः ।

## १०३५ । दद्दज्जुहू वाक् प्राट् श्री स्रू द्रू ज्वायतस्तू कटप्रू परिव्राट् दिद्युज्जगत् दधृक् स्रगुष्णिहः ।

दद्दत्—उष्णिह १॥ ।

एते क्विबन्ता निपात्यन्ते । दीर्घ्यतीति दद्दत्, जुहोत्यनयेति जुहूः, वक्त्यनयेति वाक्, पृच्छतीति प्राट्, श्रयत्येना श्रीः, स्रवतीति स्रूः द्रवतीति द्रूः जवतीति जूः आयत स्तौति आयतस्तूः कट प्रवते कटप्रूः, परिव्रजतीति परिव्राट्, द्योतते इति दिद्युत्, गच्छतीति जगत्, धृष्णोतीति दधृक्, सृज्यते इति स्रक्, ऊर्ध्वं स्निह्यतीति उष्णिक् ।

## १०३६ । जिर्घोऽन्त्यः ।

जि' १।, घं १।, अन्त्य १। ।

अन्त्यो जिर्घः स्यात् । मितं ह्रयतीति मितह्रुः ।

---

छदकिञ संवृतौ छाद्यतेऽनेनेति छद्म अत्र ह्ववतेरितीम् निषेधे जेर्लोपेऽनेन ह्रस्वे झपभ्रसीरिति दस्य तः । छद्म इति मनि ह्रस्व तनु छादयतीति तनुच्छत् अत्र क्विपि ह्रस्व. । छाद्यतेऽनेनेति छदि अत्र इसि ह्रस्व. । घे परे ह्रस्वविधानात् छादयते कर्त्तरि पुसि संज्ञायां व [illegible]र्यो मन्तव्य. । तेन उरश्छादयतीति उरश्छद एव प्रच्छद, दन्तच्छदः छद एषु घे परे ह्रस्व. ॥१०३४॥

षोडशैते क्विबन्ता निपात्यन्ते ॥१०३५॥

अन्त्य. क्तप्रत्ययाव्यवहितपूर्ववर्त्ती । मितह्रुरिति क्विपि ग्रहस्वपाद्योरिति जौ

## १०३७। वे-ध्याप्यां क्वौ ।

वे-ध्या आप्या ६।।।, क्वौ ७। ।

**ऊः धीः आपीः । ध्याप्योः अतएव जिः ।**

## १०३८। अमुङो झस्यणौ चातिकि ।

अमुङ ६।, झसि ७।, अणौ ७।, च ।१।, अतिकि ७। ।

**अमन्तस्योङोर्घः स्यात् अणौ झसे क्वौ च, न तु तिकि। प्रशान् ।**

## १०३९। स्विवाव मव ज्वर त्वरो वूडुङा अमे च ।

स्विव अव मव ज्वर त्वर ६।, व् ।१।, ऊट् ।१।, उङा ३।, अमे ७।, च ।१। ।

**एषां व उङा सह ऊट् स्यात् क्वौ झसि अणौ अमे च । स्यूः ऊः मूः जूः तूः ।**

---

अनेन दीर्घ । एव हृत हृतवान् हृति हृत्वा । ज्यागि जराया जीन. टु ओश्वि शून । अन्य किम् इष्टि उष्ट पृष्ट ॥१०३६॥

ऐञ वे स्यूतौ वयतीति ऊ क्विप् ग्रहस्वपाद्योरिति जौ पूर्वेण दीर्घे सिद्धे नियमः । तेन अस्य जेः क्वावेव दीर्घो नान्यत्र क्वाविति किम् ? उत उति उत्वा ध्यायत्यनया इति धी । आप्यायते आपीश्च । एतयो क्वौ जेरसम्भवेऽपि ऊ दीर्घविधानात् क्वौ जि ततो दीर्घश्च ॥१०३७॥

अम् अमन्तो धातु. । तस्य उङ्‌ अमुङ्‌ तस्य । प्रशाम्यतीति प्रशान् क्विपि उङो दीर्घे धोर्मः न इति मस्य न । एवं कनीञ्जि प्रकान् अणौ झसे तु शान्त शान्ति शान्त्वा । झसि किम् ? प्रशम्य । अणौ किम् ? गन्ता । हति हत हत्वा इत्यादौ तु वनतनेति अम्लोपे अमन्तत्वाभावात् न दीर्घ. । अतिकीति किम् ? रन्ति तन्तिरित्यादि ॥१०३८॥

सिव्यु शोषे गतौ । सीव्यतीति स्यूः अव रक्षादौ अवतीति ऊ । मव नद्दे मवतीति मूः । एषामौकारादौ धीरियुवचीति उवि स्युवौ उवौ मुवौ इत्यादि । ज्वर्भ्स रोगे ज्वरतीति जू । ञित्वरषमङ स्वदे, त्वरते तुः । अणौ-झसे त स्यूतः स्यूति. । ऊति मूति जूर्त्ति तूर्त्ति. । अमे तु मनि स्योमा' अव-तेर्मान मनीषादित्वात् मनः टिलोपे गुणे ओम् ॥१०३९॥

## १०४०। रात्क्वोर्लोपः।

रात् ५।, क्वी ६॥, लोप १। ।

रात् परयोः छकारवकारयोर्लोपः स्यात् क्वौ झस्थणौ अमे च। मुच्छ्रीं मूः धुर्वीं धूः।

## १०४१। आदूटो त्रिः।

आत् ५।, ऊट ६।, त्रि १। ।

अवर्णात् परस्य ऊटो त्रिः स्यात्। जनान् अवतीति जनौः।

## १०४२। यम मन-तन गमोऽन्तलोपः क्वौ।

यम मन तन गम. ६।, अन्तलोप १।, क्वौ ७। ।

एषाम् अन्तस्य लोपः स्यात् क्वौ। सयत् परिमत् परीतत् सङ्गत्।

---

मूर्च्छा मोह उछ्रये झस्थौ क्विपि अनेन छलोपेऽर्व्यनचतयोति दीर्घे मूः। अचि तु मुरौ मुर इत्यादौ झस्थिति। धुर्वीं हिंसे झस्थौ क्विपि वलोपे व्य्ंनचतयोति दीर्घे धूः धुरौ धुर। अणौ झसि तु मूर्त्तं मूर्त्तिः धूर्त्तं धूर्त्तिः। अत्र रेफसान्नि-ध्यात् वकारो दन्त्य एव ग्राह्य। तेन चर्वं गतौ नर्वं गतौ इत्यादौ न प्रसङ्ग॥१०४०॥

जनानवतीति जनौः अत्र अवर्णान्तकर्म्मोपपदस्य क्विबन्तधातुना समासेऽनेन त्रि। यत्रादौ क्विप् तत समासस्तत्र गुण एव। तेन जनस्य ऊ. जनौ तव ऊः तवौ इति असमासेऽपि गुण एव। एकपदे तु अवविकारे क्विपि क्वौ ऊटा-विति ऊटि अनेन वृद्धौ औ आवौ आव। धावु ञ जवे धौ धावौ धाव। क्वौ औति। एव धौति धौवा॥१०४१॥

सयच्छतीति सयत्। परिमन्यते परिमत्। परितनोतीति परीतत्। एव संगच्छते सङ्गत्। एषु अम्लोपे स्वस्य तन्। परीतदिति दीर्घविधानात् क्विबन्ते धातौ उपसर्गादेः क्वचित् दीर्घः स्यादिति सूचितम्। तेन तनि रुहि नहि इति इषि व्यधि रुचि सहादिषु क्विबन्तेषु उपसर्गाकारयोर्दीर्घ इति बोध्यम्। परि-तनोति परीवत् विरोहतीति वीरुत्। उपनह्यतीति उपानत्। उपवर्त्तते

१०४३ । स्रि-विष्वग्देवस्य टेरद्र्यञ्चौ क्वौ ।

स्रि विष्वच् देवस्य ६।, टे ६।, अद्रि ।१।, अञ्चौ ७, क्वौ ७।

स्रेर्विष्वचो देवस्य च टेरद्रिः स्यात् क्विबन्तेऽञ्चतौ । सर्वान् अञ्चतीति सर्वद्र्यङ्, विष्वद्र्यङ्, देवद्र्यङ् ।

१०४४। अमुद्र्यङ् अमुमुयङ् अदमुयङ् अदद्र्यङ् ।

अमुमञ्चतीत्यर्थे एते निपात्यन्ते ।

१०४५ । सह सम्तिरः सध्रि-समि तिरि ।

सह सम् तिर ६।, सध्रि समि तिरि ।१।।

एषां क्रमादेते स्युः क्विबन्तेऽञ्चतौ । सध्र्यङ् सम्यङ् तिर्यङ् ।

१०४६ । वीरुहो धङ् क्वौ ।

वीरुह ६।, धङ् ।१।, क्वौ ७।

वीरुत् ।

१०४७ । त्यदादि-भवत् समानान्ययोरसमानात् दृशः टक्-सक्-क्विपो ढे ।

त्यदादि—भवत् समान् अन्य ५।, दृश ५।, टक् सक् क्विप १।, ढे ७।

त्यदादेर्भवतः समानादन्यस्माच्चासमानात् दृश एते स्युः ढे ।

---

उपानत् । प्रवर्षतीति प्रावृट् । मर्म्म विध्यतीति मर्म्मावित् एव मृगावित् । निरोचनं नीरुक् । ऋतिं सहते ऋतीषट् अत अम्बष्ठादित्वात् षत्वम् ॥ १०४२ ॥

स्रिश्च विष्वक् च देवश्चेति तस्य । विष्वगिति मूर्द्धन्यमध्यं चान्तमव्ययं विष्वगञ्चतीति विष्वद्र्यङ् ॥ १०४३ ॥

सुगमम् ॥ १०४४ ॥

सह अञ्चतीति सध्र्यङ् । समञ्चतीति सम्यङ् । तिरोऽञ्चतीति तिर्यङ् ॥१०४५॥

विपूर्वस्य रुहो धङ् स्यात् क्वौ । वेर्दीर्घस्य वीत्व यमकमनेऽन्यत्र लिखितम् ॥१०४६॥

त्यद् आदिर्यस्य स त्यदादि । त्यदादिश्च भवाश्च समानश्च अन्यश्चेति । त्यदादि-

## १०४८। स्रे र्डी।

स्रे ६।, र्डा ।१।।

स्रे र्डी स्यात् टगाद्यन्ते दृशि। स इव दृश्यते तादृशः तादृक्षः तादृक्, भवादृशः।

## १०४९। समानेदं किमदः सेक्यमू।

समान इदम् किम्-अद ।६।।, स-ई की अमू ।१।।।

एषां स्थाने स ई की अमू एते क्रमात् स्युः टगाद्यन्ते दृशि। सदृशः ईदृशः कीदृशः अमूदृशः अन्यादृशः।

इति टनादिपादः।

---

भवत्समानान्य तच्च तत् उपमानञ्चेति त्यदादिसमानान्योपमान तस्मात्। उपमानभूतेभ्य एभ्य परात् दृश' एते स्युर्डे ॥ १०४७ ॥

ङित्वादन्त्यस्य स्थाने। स इव दृश्यते इति टकि कित्वात् गुणाभावे तादृश' टित्वादीपि तादृशी। एव सकि कित्वात् गुणाभावे शक्राञ्जेति षङि षढी क सं इति षस्य कत्वे चूङ् क्रुङ्कित शस्य कत्वे वा तादृच। स्त्रियान्तु तादृचा। एवञ्च क्विपि कित्वात् गुणाभावे तादृक् एव यादृश एतादृश. त्वमिव दृश्यते त्वादृशः अहमिव दृश्यते मादृश आवामिव दृश्येते अस्मादृशौ वयमिव दृश्यन्ते अस्मादृशा। त्वमिव दृश्यते त्वादृश युवामिव दृश्येते युष्मादृशौ यूयमिव दृश्यन्ते युष्मादृशा। मुख्ययोर्युष्मदी. साचात् द्विवचनाभावे युवावौ न स्याताभिति पूर्वं लिखितम्। एवं भवानिव दृश्यते भवादृश ॥ १०४८ ॥

समानश्च इदम् च किम् च अदस् चेति। सश्च ईश्च कोश्च अमूश्चेति। समान इव दृश्यते सदृश अयमिव दृश्यते ईदृश क इव दृश्यते कीदृश. असाविव दृश्यते अमूदृश। अन्य इव दृश्यते अन्यादृश ॥ १०४९ ॥

इति टनादिपाद।

---

## तृतीयः पादः—क्तादिः।

---

१०५०। क्त-क्तवतू भूते ढभावे घे।

क्त क्तवतू १॥, भूते ७।, ढभावे ७।, घे ७।।

धोरतीतेऽर्थे ढभावे क्तो घे क्तवतु' स्यात्, उकावितौ। स्तुतस्त्वया विष्णुः, स्नातं मया, विष्णुर्विश्वं कृतवान्।

१०५१। घे घोंऽढे भावदैन्याक्रोशे तु वा।

घे ६।, घं १।, अढे ७।, भावदैन्याक्रोशे ७।, तु ।१।, वा ।१।।

घे घंः न तु ढे, भावदैन्याक्रोशे तु वा, तयोः परयो'।

१०५२। सूल्वाद्योदिद्रक्षी-यल् स्यातो न तोऽपृमूर्च्छंख्याध्यामदो दश्च।

सू लू-आदि ओत्-इत् र-क्षी-यल्-स्य आत' ५।, न ।१।, त ६।, अपृ-मद ५।, द ६।, च ।१।।

स्वादेर्ल्वादेरोकारितो दान्तात् रेफात् क्षीशब्दात् यलस्य युक्ताकारान्तात् परयोस्तयोस्तस्य नः स्यात, पूर्वस्य च दस्य नः, न तु प्रादिभ्यः। क्षीणः क्षीणवान्। अढे किम्? क्षितः कामो मया।

ष्टुञ्ज स्तुतौ कर्म्मणि क्त वेम सहैति वेमलेऽपि वृदु ओति इमौ निषधे कित्वात् गुणाभावे स्तुत। स्नाल शौचने भावे क्त स्नात कृ ञ द ङु कर्त्तरि क्तवतु कित्वात् गुणाभावे उदित्वात् ञिदच इति नुषि अलसोधीरिति दीर्घे कृतवान्॥ १०५०॥

अविशेषात् चिनग हिंसाया चि चतैश्वर्य्ययोः चिश्न वासगत्यो इति त्रयाणां ग्रहणम्॥ १०५१॥

सूश लूश सूलौ तौ आदौ ययोस्तौ सूल्वादी। ओत् इत् यस्य स ओदित्

## १०५३ । वॄदुश्रिञूर्णौ किती नेम् ।

वृ ऋृ उ श्रिञ्-ऊर्णौ ५।, कित ६।, न ।१।, इम् ।१। ।

**वृञो वृङ ऋदन्तात् उवर्णान्तात् श्रिञ ऊर्णोश्च कित् इम् न स्यात् । सून: सूनवान् दीन: लून: जीन: रुग्ण: भुग्न: प्रहीण:, भिन्न: निर्विण्ण:, घ्यान: ग्लान: घ्राण: । प्रादेस्तु—पूर्त्त मूर्त्त: ख्यात: ध्यात: मत्त । वृत भूत श्रित: घृत: उर्णुत: ।**

---

यलो यलान्त स चासौ सश्चेति यलस्य तेन युक्त आत् यलस्यात् । तत सूलङ्दी च ओदिच्च द च रश्च चीश्च यलस्याच्चेति तस्मात् । पृश्च मूर्च्छश्च ख्याश्च ध्याश्च मद चेति । न पृमूर्च्छख्याध्यामद चेति तस्मात् । चीण इति अकर्म्मकात् वक्ष्यमाणेन कर्त्तरि क्ते पूर्वेण दीर्घऽनेन तस्य नकारे षृ‍ुर्णं इति णत्वम् एव चीणवान् । अद्वे इति किम् ? चित कामो मया हिंसित इत्यर्थ । चीग्रहणोपादानात् चीञ हिंसे इत्यस्मादपि चीण । भावादौ स्वयमुदाहरिष्यति ॥ १०५२ ॥

वृश्च ऋश्च उश्च श्रिञ च ऊर्णुश्चेति तस्मात् । वृन्वृतौ स्यात्दृवृरिति वेमत्वे श्रेयते भस्ज श्रि स्वृ इति वेमत्वे नेम् डीवीत्यादिना क्तक्तव । रिम् निषेधे सिद्धे ह्ववतेरित्यादिना क्यादीनाञ्च इम् निषेधे सिद्धे एषा वयाणामिहोपादानं क्तोच इम् निषेधार्थमेव । तेन वृत्वा तीर्त्वा श्रित्वा इति । एव उवर्णान्तत्वेनेव प्राप्तौ ऊर्णौ पृथक् ग्रहणम् कथमिति चेत् सत्यम । भस्जश्रिस्वृ इत्यव ऊर्णोर्वेमत्वे नेम् डीश्वीत्यनेन वेमधातुभ्य क्तक्तवतो रिम् निषेधे तवैव अनेकाचो वर्जनात् ऊर्णौ रिम प्रसक्तौ पुनर्निषेधार्थमिहोपादानम् । स्वादिमाह । सून इति सुयौङ सूतौ कर्म्मणि क्त. अनेन इम् निषेधे पूर्वेण तस्य न । एवं सूनवान् । ओदीङय क्षये दीन । ल्वादिमाह । लूञगि छिदि लून । ज्यागि जरायाम् अत वक्ष्यमाणेन कर्त्तरि क्ते ग्रहस्वपादीरिति जौ जीर्घोऽन्त्य इति दीर्घे जीन. । ओदितमाह । भुजो ग्नौ वक्रणे भुग्न अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ चुडक्रुडिति जस्य गकारे पश्चात् तस्य न. । ओहाङ्त्यागे प्रहीण अव दामा गै इति डी नीचोऽन्तरेति णत्वम् । दान्तमाह । इभिंदा द्वैधने भिन्न । आदित इति वक्ष्यमाणादिम् निषेधे पूर्वेण तस्य न । निर्विण्ण इति विदौङ भावे पूर्वापरहायणादित्वात् णत्वम् । निर्विण्णोऽध्ययने जड इत्यर्थ । रान्तस्य तु गुर्डीञ्चि उद्यमे गूर्ण । चूर्डंषी दहिचूर्ण इत्यादि ऊह्यम् । एषु नेम्डीश्वीत्यनेन इमो निषेध: । यलस्यात-

१०५४। दिव्यञ्चश्च्योऽजिगीषाजास्पर्शे न तन्तयोः।

दिवि अञ्च श्व ५।, अजिगीषा-अज अस्पर्शे ७।, न ।१।, त ६।, तयो' ६॥ ।

दिवेरजिगीषायामञ्चते' अजे श्यायतेः अस्पर्शे तयास्तस्य नः स्यात्। आद्यूनः समक्तः।

१०५५। घन स्पर्शे श्यो जिः।

घन स्पर्शे ७।, श्य ६।, जि १।।

घने स्पर्शे चार्थे श्यो जिः स्यात् तयोः। शीन घृतम्।

---

माह ग्लै लमे ग्लान शाल खेदे श्राण। एव द्वौ न्यक्करणे ध्यान। यलस्यात इति धातोरेव न तु उपसर्गस्य। तेन निर्यात निर्वात इत्यादौ न प्रसङ्ग। अत्र मूर्च्छवर्जनात् येन केनापि प्रकारेण यो रान्तस्तस्मादपि तयोस्तस्य न स्यादिति सूचितम्। तेन राच्छ्रार्लोप इति छवयोर्लोप खुर्छ स्फुर्छौ तु विस्मृतौ। श्रादित इति इमो निषेधे स्फूर्णं स्फूर्णं। धुर्व दुर्वी वधे नेम् डीश्वीति इमो निषेधे घूर्ण दूर्ण इति एव कृश्व विच्छेपे तृतरेऽभिभवे इत्यादीना इरि कृते कीर्ण तीर्ण इत्यादि अत्र धूर्वी हिंस इत्यस्य तु वकारलोपेऽपि कितवे वाच्ये मनीषादित्वान तस्य नो न स्यात्। तेन धूर्त' कितव। अन्यत्र धूर्णौ मृग सिंहेन हत इत्यर्थ। प्रादेस्तु। जिपृ गिलि तु पालने। अस्य त्वादित्वात् प्राप्तौ निषेधे पूर्त्त मूर्च्छा मोह उच्छ्राये आदित इति इमो निषेधे राच्छ्रोरिति छलोपे मूर्त्त। ख्यात ध्यात इति यस्य युक्ताकारान्ततया प्राप्तौ निषेध.। मत्त इति मदीभिर्यङि हर्षे दान्तत्वात् प्राप्तौ निषेध वृदुश्रि इत्यस्य उदाहरणमाह। छत इति छनगञ्ज छङ वर्तौ छञ्‌ण सम्भक्तौ इति वयाणाम्॥१०५३॥

दिविश्च अञ्चश्च श्यश्चेति तत् तस्मात्। न जिगीषा अजिगीषा। जम् अपादान न जम् अजम् न स्पर्शोऽस्पर्श। अजिगीषा च अजश्च अस्पर्शश्चेति तस्मिन्। एषु नञ्‌समास स्पष्टार्थ। आद्यून इति आङ्पूर्वात् दिव्‌ जिगीषादौ अकमकत्वात् कर्त्तरि क्ते नेम् डीश्वीति इमो निषेधे कृा शूटावित्यूटि अनेन तस्य न। समक्त इति अन्चु गतिपूजनयो कर्म्मणि क्ते नेम् डीश्वीति इमो निषेधे इसुड न इति नलोपे चुङिति कुङि अनेन तस्य अनेन तस्य न॥ १०५४॥

घने द्रवद्रव्यस्य घनीभावे इत्यर्थ। शीनमिति श्यैङ गतौ क्त अनेन जौ

जिगीषादौ तु द्यूतम् । उदक्तमुदक कूपात् । शीतं जलम् । घनस्पर्शे किम् ? सश्यानो वृश्चिकः शीतात् सङ्कुचित इत्यर्थः ।

१०५६ । प्रतेः ।

प्रते ५। ।

प्रतिपूर्वस्य श्यो जिः स्यात् तयोः । प्रतिशीनः ।

१०५७ । अभ्यवात् वा ।

अभि अवात् ५।, वा ।१। ।

अभ्यवात् परस्य श्यो जिः स्यात् वा तयोः । अभिशीनः अभिश्यान', अवशीनः अवश्यानः ।

१०५८ । षिञो ढघे न तो ग्रासे ।

षिञ ५।, ढघे ७।, न ।१।, त ६।, ग्रासे ७। ।

षिञः परस्य तयोस्तस्य नः स्यात् ढघे, ग्रासे वाच्ये । सिनो ग्रासः स्वयमेव ।

१०५९ । पूञो नाशे ।

पूञ ५।, नाशे ७। ।

पूनो नष्टः । अन्यत्र पूतः पवितः ।

---

जीर्णोऽन्त्य पूर्वेण तस्य न । पूर्वस्य प्रत्युदाहरणमाह । द्यूतमिति भावे क्त जिगीषाया तस्य नो न स्यात् । उदक्तमिति उद्धृतमित्यर्थ' । अत्र कूपादिति अपादान-प्रयोगात् तस्य नो न स्यात् । शीतमिति स्पर्शार्थे जि. स्यात् तस्य नो न स्यात् । सश्यान इति घनस्पर्शाभावे जिर्न स्यात् तस्य तु नकार' स्यात् ॥१०५५॥

पृथग्योगात् घनस्पर्शयोर्नानुवृत्ति. ॥ १०५६ ॥

सुगमम् ॥ १०५७ ॥

षिनमञ बन्धे इत्यस्मात् कर्म्मकर्त्तरि क्तस्य तस्य नकार' स्यात् ग्रासे वाच्ये । ग्रास. कवल । सिनो ग्रास स्वयमेव बद्ध इत्यर्थ । ग्रासे किम् ? सितश्चौरः स्वयमेव । वाद्द्यमध्यवर्त्तित्वादेतदादीनां चतुर्णां नित्यता ॥ १०५८ ॥

पूञ शोधे इत्यस्य अनेकार्थत्वात् नाशार्थे तयोस्तस्य नकार. स्यात् ॥ १०५९ ॥

### १०६०। दुग्वोः र्घं श्च।

दुग्वी ६॥, र्घं. १।, च ।१। ।

आभ्या तयोस्तस्य नः स्यात् तयोर्घं श्च। दूनः गूनः।

### १०६१। व्रश्चेः कङ् च।

व्रश्चे ६।, कङ् ।१।, च ।१। ।

व्रश्चेस्तयोस्तस्य नः स्यात् कङ् च। वृक्णः।

### १०६२। क्षीघ्राचोन्दनुदविन्दो वा।

क्षी—विन्द ५।, वा ।१। ।

एभ्यस्तयोस्तस्य नः स्यात् वा। क्षीणः क्षीतः, घ्राणः घ्रातः, त्राणः त्रातः, उन्नः उत्तः, नुन्नः नुत्तः, विन्नः वित्तः।

### १०६३। क्षै-शुष् पचो मकवः।

क्षै शुच् पच ५।, म क-ब १। ।

एभ्यस्तयोस्तस्य मकव एते क्रमात् स्युः। क्षामः शुष्कः पक्व।

---

दुट्वीऽनुतापे गुशि तु विष्ठोत्सर्गे इत्येताभ्या तयोस्तस्य न स्यात् तयोर्दीर्घस्य औदूङय खेदे गुभि तु विट्स्जौ इति दीर्घान्ताभ्याम् एवेष्टसिद्धौ एतद्विधान ह्रस्वान्तयो दुग्वी प्रयोगनिषेधार्थम् ॥१०६०॥

न च चङ्क्तित्यनेनैवेष्टसिद्धौ इह कङ्विधानं वृथेति वाच्यम्। अकृ।जि विशेषविधानात् षङ' प्राप्तव्यत्वात्। वृक्ण इति व्रस्चू श छेदे कर्म्मणि क्ते डीश्वीति इमी निषेधे ग्रहस्वपादोरिति जौ अनेन तस्य नत्वे चस्य च कङि नैमित्तिकस्याप्यभाव इति न्यायात् तालव्यशस्य दन्तत्वे स्यादे सौ लोप ॥१०६१॥

क्षीण इति क्षीचि वधे कर्त्तरि क्ते अनेन तस्य न पचे क्षीत। घ्रा गन्ध-ग्रहणे कर्म्मणि क्ते घ्राण. घ्रात। त्रैङ पालने कर्म्मणि क्ते त्राण. त्रात। उन्दधी क्लेदे कर्त्तरि क्ते नेम् डीश्वीति इमी निषेधे हसुङन इति नलोपे उन्न उत्त। कर्म्मणि क्ते नुन्नः नुत्त। धौ विदङ मीमांसे कर्म्मणि क्ते विन्न. वित्त.। सञ्ज्ञायान्तु देवत्रात इत्येव वाशब्दस्य व्यवस्थावाचित्वात् ॥१०६२॥

क्षै चये क्षाम, शुष्यौत शोषे शुष्क। उभयत्र अकर्म्मकत्वात् कर्त्तरि क्त।

१०६४ । प्रस्त्योम वा जिश्च ।

प्र स्त्य ५।, म ।१।, वा ।१।, जि १।, च ।१। ।

प्रस्त्यस्तयोस्तस्य मः स्यात् वा जिश्च । प्रस्तीमः प्रस्तीतः । प्रात् किं, संस्त्यानः ।

१०६५ । निर्वाण भित्तर्ण वित्त फुल्लोत्फुल्ल सम्फुल्ल प्रफुल्ल क्षीव कृश परिकृशोल्लाघाः ।

निर्वाण—उल्लाघा १॥ ।

एते क्तान्ता निपात्यन्ते । निर्वाणः शान्तः निर्वाणं मुक्तिः, भित्तं खण्डम् ऋणं विशोध्य, वित्तं धनं वित्तः प्रतीतः । फुल्लो विकसितः उत्फुल्लः सम्फुल्लः प्रफुल्लश्च । क्षीवो मत्तः, कृशस्तनुः परिकृशः, उल्लाघो नीरुजः ।

डुभ्रौष पच पाके कर्मणि क्ते अन्तरङ्गत्वात् निरवकाशत्वाच्च आदौ चुङ्क्तिति कुडि पश्चादनेन तकारस्य व पक्व ॥१०६३॥

अत्र वाशब्दस्य मकारेणैव सम्बन्धत्वात् जिर्नित्यः । स्त्यै सङ्हतौ ध्वनौ कर्त्तरि क्ते प्रस्तीम प्रस्तीत । प्रात् किम् ? स्त्यान संस्त्यान ॥१०६४॥

वा ल मसन ह्रसयो निर्वाण शान्त निर्वाण मुक्ति उभयत्र नीऽचीऽन्तरेति त्वम् । अन्यत्र निर्वात । उधौ भिदिर भित्त खण्डम् अन्यत्र भिन्नम् । ऋणदुञ गतौ ऋण विशोध्यम् अन्यत्र ऋतम् । विदल्मतौ वित्त धन वित्त प्रतीत अन्यत्र विदित । फुल्ल विकसने इणोऽभावे तकारस्य लोपेऽकारस्य पूर्वेण योगे फुल्लादि चतुष्टयम् । केवलस्य उत्सम्प्रपूर्वस्य च निपातनादन्यत्र सुफुल्लित इत्यादि । जौमरास्तु ञिफलाभिदीत्यस्यैव फुलादेश तकारस्य च लकारं कृत्वा फुल्लादि चतुष्टय साधयन्ति । तन्मते फुल्लविकसने इत्यस्य फुल्लित इति स्यादेवेति विरोध । स्वमते तु फलनिष्पत्तौ फलज गतौ इति द्वयोः सेमी फलित फलितवान् इति । ञिफलाभिदीत्यस्य आदित इति इणो निषेधे चर्फलोदुरिति अकारस्य उकारे प्रफुल्त इति बोपदेवलिखनात् फुल्लो विकसित इति व्याख्यानाच्च फुल्ल विकसने

**१०६६। क्षुधवसपूजार्थाञ्चागाध्यार्थलुभः क्त्वाश्चेम्।**

क्षुध—लुभ ५।, क्त ६।, च ।१।, इम् ।१। ।

एभ्यः परयोस्तयोः क्त्वाश्च इम् स्यात्। क्षुधितः उषितः अञ्चितः लुभितः। गतौ तु। अक्तः। गाध्यार्थे तु लुब्ध।

**१०६७। पू क्लिश वम जप व्याप्त्वसस्तयोर्वा।**

पू—व्याप्त्वस ५।, तयो ६॥, वा ।१। ।

एभ्यस्तयोः इम् स्यात् वा।

**१०६८। पू शी धृष मिद ष्विद स्विद क्षमार्थम्‌षां सेमोर्गुः।**

पू—मृषा ६॥, सेमो ७॥, गु १। ।

एषां गुः स्यात् तयोः सेमोः। पवितः, पूतः, क्लिशितः

---

इत्यस्यैव निपातन प्रतीम। चीरङ दर्पे चीवो मत्त। सोपसर्गस्य तु प्रचीवित। क्षशियंत्त कार्श्ये। क्षशस्तनु एव परिक्षश। अन्यत्र परिक्षशित। लाघ्रङ शक्तौ। उल्लाघो रोगान्मुक्त, केवलस्य उदो ग्रहणात् प्रोल्लाघित प्रलाघित शक्त इत्यादौ न निपात ॥ १०६५ ॥

गाध्यं लिप्सा। गाध्यमर्थो यस्य स गाध्यार्थ न गाध्यार्थ अगाध्यार्थ न चासौ लुभ चेति अगाध्यार्थलुभ तत लुवश्चेत्यादि द्वन्द्वे तस्मात्। चुध वसौ औदित्वात् पूजार्थाञ्चोरुदित्वेन क्त्वाचोरे वेमत्वे अगाध्यार्थलुभस्य वेम् सहेत्यादिना वेमन्वे नेम् डीश्वीति निषेधादप्राप्तौ विधिरयम्। क्षुधित इत्यादि सुगमम्। लुभित इति लुभ विमोहने। गाध्यें तु लुभ्यं गार्ध्ये क्त। नेम् डीश्वीति इमो निषेधे ढभास्तयोरिति तस्य धे भाप्भसीगिति भस्य व। क्त्वाचस्तु क्षुधित्वा उषित्वा अञ्चित्वा, लुभस्तु अनेन इमि व्युओगो हसादेर्गिति कित्त्वविकल्पे लुभित्वा लोभित्वा ॥१०६६॥

पूङ पूञो वृदृश्रीत्यादिना निषेधात क्लिश्य उपतापे क्लिशूगतु विवाधे इत्येतयोर्वेमतया नेम् डीश्वीत्यनेन निषेवादप्राप्तौ यमादीना नित्यप्राप्तौ विभाषेयम् ॥ १०६७ ॥

क्षमार्थश्चासौ मृष चेति क्षमार्थ मृष। तत पूश्च शीश्च धृषश्च मिदश्च ष्विदश्च

ক্লিষ্টঃ, বমিতঃ বান্তঃ, জপিতঃ জপ্তঃ, বিশ্বসিতঃ বিশ্বস্তঃ, আশ্বসিতঃ আশ্বস্তঃ। ঞযিতং ধর্ষিতং মেদিতং ক্ষ্বেদিতং ক্ষ্বেদিতং মর্ষিতম্। ক্ষমার্থঃ কিম্? অপমৃষিতং বাক্যম্।

১০৬৯। ভাবাদিঢ়ে বোদুঙোঽব্বতঃ।

ভাব আদিঢ ৭, বা ।১, উত্ উঙ ৬, অপ্বত ৬। ।

বিহিতাপ উদুঙো ভাবাদিঢয়োর্ণুর্বা স্যাত্ তয়োঃ সেমোঃ। দ্যোতিতং দ্যুতিতং তেন। অনপস্তু ক্ষুধিতম্।

১০৭০। লোপো ঞেঃ।

লোপ ১।, ঞি ৬। ।

ঞের্লোপঃ স্যাত্ তয়োঃ সেমোঃ। ভাবিতঃ ভাবিতবান্।

---

ক্ষ্বিদস্য ক্ষমার্থস্য মৃষ চ তেষাম্। সহ ইমা বর্ত্তেতে যৌ তৌ সেমৌ তয়োঃ। ধর্ষিতঃ ইতি ঞ্বেণ ইমি অনেন গুণঃ। ঞিধৃষান্ প্রাগলভ্যে ভাবে ক্তে ভাবাদিঢে বেতি ইম্ পক্ষে ...নেন গুণে ধর্ষিতমিতি। এবম্ ইর্মিদা স্নেহনে ক্ষ্বিদঞি মোচে এষামপি সাধ্যম্। মর্ষিতমিতি মৃষঞ ক্ষান্তৌ বসোঽরস্যেতি ইমি অনেন গুণঃ। অন্যত্র অপমৃষিতং নিন্দিতং বাক্যমিত্যর্থঃ ॥১০৬৮॥

আদিঢঃ ক্রিয়ারম্ভঃ। অপ্শপৌ বিধানে উপচারাত্। অপ্ অস্ত্যস্য অব্বান্ ...স্য। ইত্যত আহ বিহিতাপ ইতি। বিহিতঃ কৃতোঽপ্ যস্মাত্ স বিহিতাপ্ ...স্য। ভ্বাদেরদাদেশ্চেত্যর্থঃ। অদাদেঃ শপোঽস্যাথিলেঽপি তদ্বিধানমেতদর্থম্। ভ্বাদিস্তু দ্যুত্লঙ্ দ্যুত্যা ভাবে ক্তে বসোঽরস্যেতি ইমি অনেন বা গুণে দ্যোতিতং দ্যুতিতং তেন। এবং শুভ্লঙ শোভিতং শুভিতম্। অদাদিস্তু লঘির রুদ রোদে রোদিতং রুদিতম্। তুরত্বির্বেগে তোরিতং তুরিতম্। আদিঢে তু ঘে চাদিঢে ইতি বক্ষ্য-মাণাত্ কর্ত্তরি ক্তে প্রদ্যোতিতঃ প্রদ্যুতিতঃ স ইত্যাদি বোধ্যম্। ভাদ্যদাদিভ্যামন্যস্য তু। ক্ষুধয়ৌ ক্ষুধি ক্ষুধিতং প্রক্ষুধিতঃ সঃ। এবং কুষশ উপকর্ষে কুষিতঃ প্রকু-ষিতঃ সঃ। ভাবাদিঢয়োঃ কিম্? অকর্ম্মকত্বাত্ কর্ত্তরি ক্তে দ্যুতিতঃ। সেমোঃ কিম্? গুপ্তঃ দুগ্ধম্। ভাবাদিঢয়োঃ ক্তবতোরসম্ভবেঽপি তয়োরিত্যস্যানুবর্ত্তনং পরেষু সার্থকম্ ॥১০৬৯॥

ভাবিত ইতি ঞের্লোপে ত্যলোপে ত্যলক্ষণমিতি ন্যায়াত্ বৃদ্ধিঃ। এবং ঞিমুদঙ

१०७१। नेम् डीश्वीदिद्वेमोऽपत्यनेकाज्निष्कुषः।

न ।१।, इम् ।१।, डी श्वि ईदित वेम ५।, अ पति-अनेकाच् निष्कुष ५। ।

डोङ् श्वयतेः ईकारितो विकल्पितेमश्च पत्यादिवर्जात् तयोः इम् न स्यात्। डीनः शूनः दीप्तः गूढः स्वतः ततः। पत्यादेस्तु पतितः दरिद्रितः निष्कुषितः।

१०७२। आदितः।

आदित ५। ।

आकारितस्तयोः इम् न स्यात्। मिन्नः मिन्नवान्।

---

मोदितः मोदितवान्। ऋधुङ वल्ह वह्रितः इत्यादौ गुणः। भन्जो घौ भञ्जितः इत्यादौ अगुणनिमित्तको नलोपो न स्यात् ॥१०७०॥

ईत् इत् यस्य स ईदित्। वा इम् येभ्य ते वेम। तत डीश्च श्विश्च ईदिश्च वेमश्चेति तस्मात्। पतिश्च अनेकाच्च निष्कुष् च ते, न विद्यन्ते ते यत्र सोऽपत्य-नेकाज् निष्कुष तस्मात्। डीन इति ओडीङय गतौ अनेन इमो निषेधे ओदि-त्त्वात् तस्य न। अविशेषात् डीङच नभोगतौ इत्यस्मादपि इमो निषेधे डीनः इति। शून इति टुँ ओश्वि क्ते ग्रहस्वपाद्योरिति जौ जीर्घोऽन्त्य इति दीर्घे ओदित्त्वात् तस्य न। ईदितमाह। दीपीङय् दीपने दीप्तः। वेममाह। गुहञ् सवृतौ क्त. वेमूदिदित्यनेन वेमत्वादिमो निषेधे ह्वोढोभावित्यादि कार्य्ये गूढः। स्वल ध्वनौ वेमूदिदित्यनेन वेमत्वात् इम् निषेधे स्वतः। तनदुञ विस्तृतौ पूञ्लि शुदितः इति वेमत्वात् इम् निषेधे वनतनेति न लोपे ततः। एवं षहजङ शक्तौ वेमसहेति वेमत्वात् इमो निषेधे सोढः। नृत्य नर्त्ते नृतृञत् इत्यादिना वेमत्वात् इमो निषेधे नृत्तः। पतितः दरिद्रितः इत्युभयत्र भसूज श्रिसृ इत्यनेन वेमत्वेऽपि निष्कुषितः इत्यत्र वेमूदिदित्यनेन वेमत्वेऽपि पत्यनेकाज् निष्कुषां वर्जनात् इम् स्यात् ॥१०७१॥

आत् इत् यस्य स आदित् तस्मात्। इञिमिँदा स्नेहने अकर्म्मकत्वात् कर्त्तरि क्ते अनेन इम् निषेधे सूत्वाद्योदीति तस्य दस्य च ने मिन्नः। एवं मिन्न-वान् ॥१०७२॥

## १०७३। भावादिढे वा।

भाव-आदिढे ७, वा ।१।।

मिन्नं मेदितं तेन। प्रमिन्नः प्रमेदितः सः।

## १०७४। शकेर्ढे।

शकेः ५।, ढे ७।

शकितोऽर्चितुं शिवस्तेन, शक्तः।

## १०७५। चुब्ध वाढ़ स्वान्त ध्वान्त फाण्ट कष्ट घुष्ट लग्न म्लिष्ट विरिब्ध धृष्ट विशस्त परिवृढ़ दृढ़ शृत वृत्ताभ्यर्णाः।

चुब्ध—अभ्यर्णाः १।।।

एते क्तान्ता निपात्यन्ते। चुब्धो मन्थः, वाढ़ं भृशं, स्वान्तं मनः, ध्वान्तं तमः, फाण्टं कषायभेदः, कष्टं कृच्छ्रं, घुष्टं शब्दितं लग्नं सक्तं म्लिष्टम् अस्पष्टं विरिब्धः स्वरः, धृष्टः प्रगल्भः, विशस्तश्च, परिवृढ़ः, प्रभुः, दृढ़ो वली, शृतं पक्वं, वृत्तो गुणः क्वावेण, अभ्यर्णं समीपम्।

---

आदिढं क्रियारम्भः। भावश्च आदिढश्चेति तस्मिन्। आकारेती धातोर्भावे आदि कर्म्मणि च विहितयोस्तयोः इम् न स्यात् वा। भावादिढयोः क्तवतोरसम्भवात् क्तस्यैव। इम्मिंदा मिन्नं पचे पुषीडपेति गुणे मेदितं तेन एवं प्रमिन्नः प्रमेदितः सः। अत्र वक्ष्यमाणात् कर्त्तरि क्तः॥१०७३॥

शकेः कर्म्मणि विहितयोः इम् न स्यात् वा। कर्म्मणि तु क्तवतोरसम्भवेऽपि तयोरित्यस्यानुवर्त्तनं नेम् सन्निव्यहं इत्यादौ सार्थकम्। ढे किं तेन शक्तम् अत्र वेमत्वात् नेम् डीश्वीति नेम्॥१०७४॥

चुभलृङ सञ्चले। चुब्धो मन्थः आलोड़ित इति यावत्। अन्यत्र चुभितः। वाहेङ यत्ने वाढ़ं भृशम्। अन्यत्र वाहितम्। स्वन ण शब्दे स्वान्तं मनः। अन्यत्र

## १०७६ । नेम् संनिव्यर्द: ।

न ।१।, इम् ।१।, सं-नि-वि अर्द: ५। ।

**संनिविपूर्वात् अर्दतेस्तयोः इम् न स्यात् । समर्णः न्यर्णः व्यर्णः ।**

## १०७७ । वा रुषाम ह्वष त्वर सङ्घुषास्वन: ।

वा ।१।, रुष अम-ह्वष-त्वर-सङ्घुष-आस्वन: ५। ।

**एभ्यस्तयो: इम् न स्यात् वा । रुष्ट: रुषित:, आन्त: अमित:, हृष्ट: हृषित: तूर्ण: त्वरित:, संघुष्टं संघुषितम्, आस्वान्तम् आस्वनितम् ।**

---

स्वनितम् । मिध्वन रवे ध्वान्तं तमः । अन्यत्र ध्वनितम् । फण या निस्नेहे निस्नेहो-ऽनायासेनोत्पत्तिः । तस्य प्रेरणनौ फाण्टम् अनायासकृतः कषायभेद इत्यर्थः । अनायासकृतं फाण्टमित्यमरात् । अन्यत्र फाणितम् । कष वधे कष्टं कृच्छ्रम् । अन्यत्र कषितम् । घुष कि इर्नुतौ विशब्दे घुष्टं शब्दितं स्वार्थे निपात्यम् । लग्ने सङ्गे लग्नं सक्तं स्वार्थे निपात्यम् । म्लेच्छ कि देश्योक्तौ म्लिष्टम् अस्पष्टम् । अन्यत्र म्लेच्छितम् । ङ रेभृशब्दे विरिब्धः स्वरः अन्यत्र रेभितम् । ञिधृषा न प्रागल्भ्ये । धृष्टः प्रगल्भः । स्वार्थे निपात्यः । किञ्च आदित इति इम् निषेधादेवेष्टसिद्धौ निपातनम् आदि कर्म्मणि कर्त्तरि क्ते भावादिढ़े वेति पाक्षिकस्य इमो निषेधार्थम् । शस वधे विशस्तः प्रगल्भः क्वावेमतया नेम् डीश्वीत्यनेन इम् निषेधादेवेष्टसिद्धौ प्रगल्भात् अन्यत्र विशंसित इत्यत्र इम् प्राप्त्यर्थं निपातनम् । वृहि वृद्धौ । परिवृढ़: प्रभुः अन्यत्र परिवृंहितम् । दृहि वृद्धौ दृढ़ो बली अन्यत्र दृंहितम् । श्राण पाके केवलस्य ञ्यन्तस्य च शृतं पक्वम् । एतच्च क्षीरे हविषि च वाच्ये निपातनम् । अन्यत्र श्राणा श्रपिता यवागूः । वृतङुवल्ल वर्त्तने । ञ्यन्तस्य वृत्तः गुणो यस्याधिगतस्तावेव अधीत इत्यर्थः । अन्यत्र वर्त्तितः । अर्द्द यातनागतियाचने अभ्यर्णं समीपम् । अन्यत्र अभ्यर्द्दितः ॥ १०७५ ॥

अर्द्द यातनादौ अनेन इम् निषेधे तस्य दस्य च ने समर्णः एवं समर्णयाम् । एभ्यः किम् ? अर्द्दितः प्रार्द्दितः अर्द्दितवान् ॥ १०७६ ॥

रुष्येञि क्रुधि रुष्टः रुषितः । अस्य वेमसहेति वेमत्वेऽपि नेम् डीश्वीति निषेधा-त्प्राप्तौ विभाषा, अम गतौ आन्तः ञमुङ्भ्रस्यषाविति दीर्घः । पक्षे अमितः

१०७८। दान्त शान्त पूर्ण दस्त स्पष्ट च्छन्न-ज्ञप्ता वा।

दान्त-ज्ञप्ता १।॥, वा ।१।।

एते ञ्यन्ताः क्तान्ता निपात्यन्ते वा। पक्षे दमितः शमितः पूरितः दासितः स्पाशितः छादितः ज्ञपितः।

१०७९। स्फायः स्फी वा।

स्फाय' ६।, स्फी ।१।, वा ।१।।

स्फीतः स्फीतवान्, स्फातः स्फातवान्।

१०८०। प्यायोऽगेः प्यस्वाङ्गे तु वा।

प्याय ६।, अगे' ६।, पी ।१।, अस्वाङ्गे ७।, तु ।१।, वा ।१।।

अगेः प्यायः पी स्यात्, स्वाङ्गात् अन्यत्र तु वा तयोः।

पीन मुखं, प्यानः पीनः स्वेदः।

---

हृषु इर तुष्टौ। हृष्ट, हृषित। अस्य क्तत्व वेमलात् नेम् डीश्वीति निषेधादप्राप्तौ विभाषा। ञिलरषमङ स्वरे। क्षिवावमवेति ऊटि सूत्वावोदिदिति तस्य ने तूर्ण। पक्षे त्वरित'। घुष कि इर्मुतौ वि शब्दे। सङ्घुष्ट सङ्घुषितम्। स्वन य शब्दे। आस्वान्तम् आस्वनितम्॥ १०७७॥

दमादीनां ञ्यन्तानाम् एते क्तान्ता वा निपात्यन्ते। दनुषु इशंमे शमुभिर्यंशमे प्रेरणञौ कर्म्मणि क्ते दान्तः शान्त इति। पक्षे घटादीति ऋस्वे वसोऽरस्येति इमि लोपे ञेरिति ञेर्लोपे दमित शमित इति। पूरी यङ पूर्त्तौ प्रेरणञौ पूर्ण। पक्षे इमि ञेर्लोपे पूरित'। दसु इर् तु उत्क्षेपणे प्रेरणञौ दस्त। पक्षे दासित। स्पशंञ ग्रन्थबाधयोः प्रेरणञौ स्पष्टः। पक्षे स्पाशित। छद किञ सहतौ। स्वार्थञौ छन्नः। पक्षे छादितः। ज्ञप कम तु ज्ञप्तौ स्वार्थञौ ज्ञप्त.। पक्षे ज्ञपित'॥ १०७८॥

स्फायीङ सहवृद्धौ ईदित्त्वात् इमो निषेधे स्फीतः स्फीतवान्। पक्षे य्वोर्लोप इति यलोपे स्फातः स्फातवान्॥ १०७९॥

ओ प्यायीङ वृद्धौ क्ते ईदित्त्वाद् इमो निषेधे ओदित्त्वात् तस्य ने पीन मुखम्।

## १०८१। आङोऽन्धूधसोः।

आङ ५।, अन्धु उधसोः ७॥।

आङः परस्य प्यायः पी स्यात् तयोः, अन्धूधसोः। आपीनोऽन्धुः, आपीनम् उधः।

## १०८२। ह्लादेः स्वः क्तौ च।

ह्लादेः ६।, स्वः १।, क्तौ ७।, च ।१।।

ह्लादेः स्वः स्यात् तयोः क्तौ च। प्रह्लन्नः।

## १०८३। दो-षो-मा-स्थां ङिस्त्यणौ।

दो—स्थां ६॥, ङि १।, ति ७।, अणौ ७।।

एषां ङिः स्यात् अणौ तकारे परे। दितः सितः मितः स्थितः।

## १०८४। छाशोर्वा।

छा शो. ६॥, वा ।१।।

छितः छातः शितः शातः।

---

अणौ किम्? प्रप्याय मुखम्। यङ्लोपि इति यज्ञोप.। अस्वाङ्गे तु प्यान पीन स्वेद' ॥१०८०॥

आङ' परस्य प्याय पी स्यात् तयो' परयो अन्धौ उधसि च वाच्ये। अन्धु' कूप उधो गवादि स्तन ॥१०८१॥

ह्लादीङ मोदने कर्त्तरि क्ते ईदित्वात् इमो निषेधे अनेन ह्रस्वे दान्तत्वात् तस्य दस्य च ने प्रह्लन्नः ह्लन्नवान् क्तौ ह्लत्ति ॥१०८२॥

दो य छेदे दित। षो य नाशे सितः। मा इति स्वरूपात् मेङ प्रतिदाने माङलि शब्दे माल च माने माङय च माने इत्येतेषां मितः। ष्ठा स्थाने स्थितः एव दितवान् दिति' दित्वा। अणौ किम्? दाता दातु दातमित्यादि ॥१०८३॥

छाशोर्ङिः स्यात् वा अणौ तकारे। छो य लूनौ एचोऽशित्या छितः छात. एवं शो य. निशाने शितः शातः ॥१०८४॥

## ১০৮৫। শো ব্রতে নিত্যম্।

শ ৬।, ব্রতে ৭।, নিত্যম্ ১।।

সংশিত ব্রতম্।

## ১০৮৬। ধাঞো হিঃ।

ধাঞ ৬।, হি ১।।

ধাঞো হিঃ স্যাৎ অণৌ তে পরে। হিতঃ।

## ১০৮৭। চরফলোঽতুঃ।

চর ফল ৬।, অত ।১।, উ ১।।

অনয়োঃ অকার উ স্যাৎ অণৌ তে। চরিত প্রফুল্তঃ।

## ১০৮৮। দস্তোঽধঃ।

দত ।২।, দ ৬।, অধ ৬।।

দানস্তকস্য ধাবর্জস্য দৎ স্যাৎ অণৌ তে। দত্তঃ। অধঃ কিম্ ?, ধীতঃ।

শো য নিশানে ইত্যস্য নিত্য ঙি স্যাৎ অণৌ তকারে ব্রতে বাচ্যে। সংশিত ব্রতম্। অব ব্রত বাচ্যে তাস্যৈব প্রয়োগ ॥১০৮৫॥

হিত হিতবান্ হিতি হিত্বা হিবিমম্ ॥১০৮৬॥

চর গমনেঽদনে আচারে অস্মাৎ ক্তক্তবতো ক্তাচশ্চ বসোঽরস্যেতি ইমি অব্যবহিততকারাভাবাদুকারাভাবে চরিত চরিতবান্ চরিত্বা। ক্তৌ তু হ্ববলতেরিতি ইমো নিষেধে অনেনাকারস্য উকারে ব্যঁনচতয়ীতি দীর্ঘে চূর্ত্তিরিতি। ঞিফলা ভিদি আদিত ইতি ইমো নিষেধেঽনেনাকারস্য উকারে প্রফুল্ত এব ফুল্তবান্ ফুল্তি ॥১০৮৭॥

দাল লূনৌ, দা তু দানে ডুদাঞ্ লি চ দেঙ পালনে ইতি চতুর্ণা দত্ত এব দত্তবান্ দত্তি, দত্ত্বা। ডুদাঞ্জিব দানে ইত্যস্য তু দত্তিমম্ ইত্যপি। অধ, কিম্ ? ধেট পানে তৌ দামাগে হাকেতি ঙী ধীত, ইত্যাদি ॥১০৮৮॥

## १०८९ । ग्यचस्त वा ।

गि अच ५।, त ।१।, वा ।१। ।

गेरचः परस्य अधो दासंज्ञकस्य वा तः स्यात् अणौ ते । प्रत्तः प्रदत्तः ।

## १०९० । घौ दा-ते गीचः ।

घ ।१।, दा ते ७।, गीच ६। ।

नीत्तम् । इचः किम् ? प्रत्तं निर्दत्तम् ।

## १०९१ । जग्धोऽदो यपि च ।

जग्ध ।१।, अद ६।, यपि ७।, च ।१। ।

अदो जग्ध स्यात् अणौ ते यपि च । जग्धम् ।

## १०९२ । घे चादि-ढे क्तः ।

घे ७।, च ।१।, आदिढे ७।, क्तः १। ।

आदिढे विहितः क्तो घे स्यात् ढभावयोश्च । प्रकृतः कटः सः, प्रकृतः कटस्तेन । [ १०५१ ] चो घं इति प्रच्चीणः सः

---

प्रत्त प्रत्तवान् प्रत्ति । इदाञ्जलि इत्यस्य तु प्रत्तिमित्यपि । पक्षे प्रदत्त इत्यादि । अधः किम् ? धेट पाने प्रधीत । अच किम् ? निर्दत्त ॥१०८९॥

वाद्यमध्यवर्त्तित्वादेतदादष्टाना नित्यत्वम् । गे इचो दीर्घ स्यात् दास्थानजाते तकारे परे । नीत्तमिति पूर्वेण दा स्थाने तकारेऽनेन नेर्दीर्घ एव नीत्तवान् नीत्ति परीत्तम् अनुत्तम्, इच. किम् प्रत्तम् ॥१०९०॥

अद्लौ क्त अनेन जग्धादेशे पश्चात् यवादेशेऽपीष्टसिद्धौ यप पृथग् ग्रहण ज्ञापयति यवादेशादादौ प्रकृते किमपि कार्य्य न स्यादिति । तेन विमुच्य इत्यादौ न कुङ् प्रविश्य इत्यादौ न षङ् प्रवाह्य इत्यादौ न षङ् प्रविह्य इत्यादौ न ढ आपृच्छ्य प्रदीव्य अत्र शकार ऊटौ न स्त । एव क्ते परे रूढौ जग्धादेशो न स्यादित्यपि । तेन अन्न स्विन्नतण्डुले रूढम् । यत्र क्रियापदत्वेन प्रयुज्यते तत्र तु स्यादेव जग्ध फल तेन खादितमित्यर्थ. ॥१०९१॥

प्रक्षीणं प्रक्षितं तेन, क्षीणः क्षितोऽयं तपस्वी, क्षीणायुः क्षितायुः शत्रुः ।

१०९३ । गत्यर्थाढ़शीस्थासवसजनजॄश्लिषरुहः ।

गत्यर्थ—रुह ५।।

एभ्यो घे क्तः स्यात् ढभावयोश्च । गङ्गां गतः कृष्णं प्राप्तः, शयितः, शेषमधिशयिता विष्णुः, वैकुण्ठमधिष्ठितः, शिवमुपासितः, हरिदिनमुपोषितः, राममनुजातोऽच्युतः, विश्वमनुजीर्णोऽनन्तः लक्ष्मीमाश्लिष्टो मुकुन्दः, गरुडमधिरूढ़ो गोविन्दः ।

---

कर्म्मशब्दः क्रियाव्याप्यवाची क्रियामात्रवाची च कर्म्म क्रिया तत् सातत्ये इत्यमरात् । तेन क्रियाव्याप्यकर्म्मणो ढसज्ञाविधानेन क्रियाया अपि ढे सज्ञासिद्धि । ततश्च आदिढम् आदिक्रिया क्रियारम्भ इति यावत् । प्रक्रत कटस, कटं कर्त्तुमारब्धवान् इत्यर्थ । प्रक्रत कटस्तेन कट कर्त्तुमारब्ध इत्यर्थ. । अत्र प्रशब्द आदिकर्म्मद्योतक । कदाचित् प्रशब्दाभावेऽपि आदिकर्म्म प्रयोगो दृश्यते । यथा नृब्रह्मक्षत्रविट्शूद्रै साङ्गोपाङ्गैरिहोदिता इत्यमर । धातव पठिता पाठ सूत्रलोकागमस्थिता इति वोपदेवश्च । प्रक्षीण स इति कर्त्तरि क्त क्षेर्घ इति दीर्घे सूल्वाद्योदिदिति तस्य नकारे षृ्र्ण इति णत्वम् । प्रक्षीण प्रक्षित तेन । अत्र भावे क्ते दीर्घपक्षे प्रक्षीण तदभावे प्रक्षितम् । दैन्ये तु क्षीण क्षितोऽयम् तपस्वी । अत्राकर्म्मकत्वात् कर्त्तरि क्त उपतप्त इत्यर्थ । आक्रोशे तु क्षीणायु क्षितायु शत्रु अत्रापि कर्त्तरि क्त ॥१०९२॥

नास्ति ढ येषा ते अढाः । गत्यर्थाश्च अढाश्चेत्यादिसमाहारे तस्मात् । घे च क्त इति त्रयमनुवर्त्तते । गङ्गां गत इति श्रीगमऌ गत्यां कर्त्तरि क्ते वनतनेति नलोप । गत्यर्थप्राप्त्यर्थयोरैक्य दर्शयन्नाह । कृष्ण प्राप्त इति आपॢनौ कि व्यापने । एव लभ ड्वौ ङष प्राप्तौ धन लब्ध । परसूत्रेणैवेष्टसिद्धेरत्र गत्यर्थग्रहणं ज्ञापयति । गत्यर्थप्राप्त्यर्थयोरैक्यात् ताभ्यां कर्त्तरि क्त. स्यात् । अधिकरणे तु गत्यर्थादेव क्तो न तु प्राप्त्यर्थादिति । शीङ्लिङ् स्वप्ने अकर्म्मकत्वात् कर्त्तरि क्ते वसोऽरसेति इमि पूशी धृषेति गुणे शयित । अकर्म्मकत्वादेव प्राप्तौ शीस्थादीना ग्रहण सकर्म्मकत्वेऽपि प्राप्त्यर्थम् । तेन अधिकरणस्य कर्म्मत्वेऽपि शेष-

# १०९४। ध्रौव्यगत्यदनार्थात् डे च।

ध्रौव्य-गति अदनार्थात् ५।, डे ७।, च ।१।।

**निश्चलार्थात् गत्यर्थात् भोजनार्थाच्च क्तो डे स्यात् ढभावे घे च।**

**मुकुन्दस्यासितमिदमिदं यातं रमापतेः।**

**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥**

मधिशयित । शिङ् स्थाने अधिकरणस्य कर्मत्वेऽपि कर्त्तरि क्ते दोषोमास्या-मिति डौ वैकुण्ठमधिष्ठित.। ष्ठिला सङ उपवेशे उदपूर्वत्वेन आराधनार्थत्वात् सकर्म्मकत्वेऽपि शिवमुपासित । अधिकरणस्य कर्म्मत्वेऽपि घोषमध्यासित । वसे श्री निवासे देशाध्वकालत्यादिना कालस्य कर्म्मत्वेऽपि कर्त्तरि क्ते तुधवसेति इमि ग्रहसपाद्योरिति जौ शासवसेति षत्वे हरिदिनमुपोषित । जन स्यङ जनौ। जृङ्रुषस्यच इत्येतयो कर्म्मासम्भवेऽपि पृथक् ग्रहण ज्ञापयति । अनुपूर्व्वयोरेतयो प्रयोगे यस्य पश्चात् जनन यस्य पश्चात् जरणञ्च तस्य कर्म्मत्व स्यादिति। तेन राममनुजातोऽच्युत. अत्र नेमडौश्वीति इमो निषेधे खनसनेति डा । विश्वमनुजीर्णो ऽनन्त । अत्र वृद्गुयोति इमो निषेधे ऋदिरणाविति इरि व्यनचतयोति दीर्घे सृत्वाद्योदिदिति तस्य न । श्लिषौषश्लिषि क्ते षे आलिङ्गनार्थ सकर्म्मकत्वेऽपि त्वमा-माश्लिष्टो मुकुन्द । शिज रहो जन्याम् । आरोहणार्थे सकर्म्मकत्वेऽपि कर्त्तरि क्ते । औदित्वादिमोऽभावे ढाढोभावित्यादिकार्य्ये रूढमधिरूढ. । एव वृषमारूढ. शिव. ॥१०९३॥

ध्रुवो निश्चलस्तस्य भावो ध्रौव्यम् । मुकुन्दस्येत्यादि मुकुन्द दिदृक्षवो गोप्य इत्यूचु । तत् किमित्याह मुकुन्दस्यद कुञ्जमासितम् । ष्ठिलासङ उपवेशे । उप-वेशनार्थत्वेन निश्चलार्थत्वात् अधिकरणे क्ते आसितम् अत्र इदमित्यधिकरणमुक्तम् । रमापतेरिद कुञ्ज यातम् । या ल गतौ अधिकरणे क्ते यातम् अत्र इदमित्यधि-करणमुक्तम् । अनन्तस्य एतत् तरुतल भुक्त भुजो वौ त्राणे भक्ष्ये अधिकरणे क्ते भुक्तम् अत्र एतदिति अधिकरणमुक्तम् । सर्वत्र क मुकुन्दडर्डत्यादिना कर्त्तरि षष्ठी। चकारात् ढभावघेषु चेति । कर्म्मणि यथा मुकुन्देन पीठमध्यासितम । मुकुन्देन मथुरा याता मुकुन्देन याज्ञिकान्न भुक्तमिति । भावे । मुकुन्देन आसित यात भुक्तमिति, कर्त्तरि तु मुकुन्द पीठे आसित. मथुरा यात याज्ञिकान्न भुक्त इति ॥ १०९४ ॥

## १०९५। ज्ञार्चेच्छार्थञोच्छीलादेः सति।

ज्ञा अर्चा इच्छार्थ ञि इत् शीलादि ५।, सति ७।।

**एभ्यो वर्त्तमाने क्तः स्यात् तेषु। विदितः, पूजितः वाञ्छितः, इद्धः, शीलितः, शिवोऽनुवर्त्तते।**

## १०९६। ठी-प-म-वत् क्वसु कानौ।

ठी-पम वत् ।१॥, क्वसु कानौ १॥।

**घोरेतौ क्रमात् ठ्याः प म-वत् स्तः। बभञ्वान्, जजागर्वान् जजागृवान्, दुद्यूवान्, दिदिवान्, विविश्वान् विविच्छान्।**

---

ज्ञा ज्ञानम्। ज्ञाश्च अर्चा च इच्छा च ज्ञार्चेच्छा। ज्ञार्चेच्छा अर्था येषां ते ज्ञार्चेच्छार्था। ञिरित् यस्य स ञीत। ज्ञार्चेच्छार्थाश्च ञीच्च शीलादिश्चेति तस्मात्। पूर्वंतश्चकारोऽनुवर्त्तते। तेन एभ्यो वर्त्तमाने क्त स्यात् चकारात् अतीते च। एतत् तु कालमात्रविधायकं, कर्म्मभावकर्त्तृषु तु यथासम्भवं स्यादित्यर्थं। विदल मतौ विदित ज्ञायते इत्यर्थं। पूज क पूजे पूजित लोपौ ञेरिति ञेर्लोपः। पूज्यते इत्यर्थ.। वाञ्छि कामे वाञ्छित वाञ्छ्यते इत्यर्थं। एषु कर्म्मणि क्त। इन्धीञिधङ द्युतौ अकर्म्मकत्वात् कर्त्तरि क्तः नेम् डीश्वीति इमो निषेधे हगुङ्न इति न लोपे ढभात्तथोरिति तस्य धे झप्झसोरिति धस्य दकारे इद्ध द्योतते इत्यर्थं.। ञिशील स्यात् समाधौ कर्म्मणि क्त शीलित ध्यायत इत्यर्थं। आदिशब्द ञि रच पाजने रचित इत्यादि। स्वमते तु शीलादयोऽपि ञिकारानुबन्धा। शिवोऽनुवर्त्तते इति प्रतिपदेन शिव इति पद योक्तव्यमित्यर्थं न च विशेषविधानादेभ्यो वर्त्तमाने एव क्त। ात् नत्वतीत इति वाच्यम् अतीते बहुतरप्रयोगदर्शनात्। यथा परस्परेण विज्ञात ेषूपायनपाणिषु। राज्ञा हिमवतः सारी राज्ञ सारो हिमाद्रिणेति रघौ कालिदास। ज्ञातो लङ्केश्वर कृच्छ्रादाञ्जनेयेन तत् व्रत इति दण्डी। जनैरविदितविभवो भवानीपतिरिति भारवि। स पुण्यकर्म्मा भुवि पूजितो नृपैरित्यादि सुश्रुत न च एष्वपि वर्त्तमाने क्त इति वाच्य वर्त्तमाने क्तो कामुकसड्डेति कर्त्तरि षष्ठ्यापत्ते ॥१०९५॥

ठीपमे इव ठीपमवत्। तेनातीते काले कर्त्तरि वाच्ये परस्मैपदिभ्यः क्वसुः

## १०९७। वसोर्घसेकाजिनात ड्रम्।

वसोः ६।, घस एकाच् ऋ-इन-आत ५।, इम् ।१।।

**घस एकाचोऽर्त्तेरिन आदन्ताच्च वसोरिम् स्यात् नान्यतः। जक्षिवान् आदिवान् आरिवान् ईयिवान् ददिवान्।**

---

आत्मनेपदिभ्यः कानः उभयपदिभ्यो इव स्यात्। एवमतीते काले कर्मणि सर्व-धातुभ्यः भावे त्वकर्म्मकेभ्य क्तन. स्यात् इत्यर्थ। ठौपमत्वेनैव कित्त्वसिद्धे एतयो पुन कित्करणं स्यात् ठ्यपिदिति विभाषाबाधनार्थं तेन भन्ज धौ मोटने। क्वसौ ह्ववतेरिति इम् निषेधे हसुक्तु इति न लोपे द्वित्वादौ बभञ्जस् इति त्रिभ्रस्य उदित्त्वात् त्रिदच इति नुणि नसम्महम इति दीर्वे संयोगान्तलोपे बभञ्जान्। एवम् उदित्त्वादीपि बभञ्जुषी। जागृ च्या, जागरे क्वसौ जाग्रोऽणव्वीति गुणविकल्पे जजागृवान्। दिव्‌ जिगीषादौ क्वसौ क्वी ऊटाविति ऊटि द्वित्वे दुद्यूवान्। पचे यूलोंप इजि वलोपे दिदिवान्। एव विच्छ गतौ छकारस्य शकारविकल्पे विविश्वान् विविच्छ्वान्॥ १०९६॥

घस च एकाच ऋश्च इन् च आच्चेति तस्मात्। घस. पृथग्ग्रहणात् एकाजिति द्वित्वे कृतेऽपि य एकाच् स एव ग्राह्य। नेमसुमित्यनेन असुम् क्रादिभिन्नधातुभ्य ठ्या इर. प्राप्तावपि ह्ववतेरिति निषेधादप्राप्तौ पुनरिह हसन्तानां मध्ये घसते-र्द्वित्वेऽप्येकाच आदन्तानाम् ऋ इति द्वाभ्याञ्च परस्य वसोरिम् स्यादिति घसादे-र्विधौ सुतरामन्यतोऽप्राप्तौ नान्यत इति ज्ञापयति कदाचिदन्यतोऽपि स्यादिति। तेन चवाय साधुः चचिय इत्यादौ कारकविधावव्यकारकात् प्रत्ययो जात। जक्षि-वानिति। अद्लृ क्वसौ व्यां वेति घसादेशे अनेन इमि द्वित्वादिकार्य्ये हनगमेति भप्भसोरिति घस कत्वे शासवसेति षत्वम्। पचे अदो द्वित्वे दस लोपे सन्धौ एकाचत्वात् इमि आदिवान्। एवम् ईड ईडिवान्। एवञ्च यजः खेर्मूलस्यापि जौ ईजिवान् वस ऊषिवान् इत्यादि। एवञ्च डुभौष पच पाके तृफलेति खेलोंपे पेचिवान् भन्ज औ भेजिवानित्यादि। ऋलिंगत्याम् ऋ प्रापे च इति द्वयो. क्वसौ द्वित्वे खेऋकारस्य अत्वे स्यादत्त्यृत इति गुणे सन्धौ इमि आरिवान्। स्वरूपग्रह-णात् ऋणे द्विसे इत्यस्य तु स्यादत्त्यृत इत्यत्र अत्तिग्रहणात् गुणाभावे आदिगेचो-र्रीत गुणे आरिवान्। इन गतौ क्वसौ द्वित्वे खे कितिर्घ इति दीर्घे इमि यिणो ऽच्यणाविति मूलस्य यकारे ईयिवान्। दाखरूपात् क्वसौ द्वित्वे इमि आद्योरिति

१०९८। हन गम दृश विश विन्दो वा।

हन—विन्द. ५।, वा ।१। ।

एभ्यो वसोरिम् स्यात् वा। जघ्निवान् जघन्वान् जग्मिवान् जगन्वान्, ददृशिवान् ददृश्वान्, विविशिवान् विविश्वान्, विविदिवान् विविद्वान्।

१०९९। दाश्वान् साह्वान् मीढ्वान्।

दाश्वान् साह्वान् मीढ्वान् ।१॥।

एते वस्वन्ता निपात्यन्ते। चक्राणः, जजागराणः, जजाग्राणः, अनूचानः।

११००। की-प-म-वत् शतृ-शानौ।

की प म-वत् ।१॥, शतृ शानौ १॥।

धोरेतौ क्रमात् क्याः प म वत् स्तः। पचन्।

---

आलोपे दिदिवान्। एवं ख्या चख्यिवान् इत्यादि। एभ्य किम्? चिती ज्ञाने चिचित्वान्। इगताविति भौवादिकस्य ईवान्॥ १०९७॥

हनलौ क्वसौ इमि द्वित्वे हनगमेति उङ्लोपे हनो क्नौ इति घ्नादेशे जघ्निवान्। पक्षे खेर्हों घ इति हस्य घे जघन्वान्। औगमॢ क्वसौ इमि उङ्लोपे जग्मिवान्। पक्षे धोर्म्न इति मस्य नकारे जगन्वान्। दृरदृशौ क्वसौ इमि ददृशिवान् पक्षे ददृश्वान्। शौविश क्वसौ इमि विविशिवान् पक्षे विविश्वान्। विद्लृ अपजौ लाभे क्वसौ इमि विविदिवान् पक्षे विविद्वान्॥ १०९८॥

दाशङ दाने तालव्यान्त दाश्वान्। दन्त्यान्त इत्येके। सह्यकि शक्तौ साह्वान्। मिहौ सिचि मीढ्वान्। कानमुदाहरति। कृञदङ च उभयपदित्वात् कर्त्तरि काने चक्राण कुम्भ कुम्भकार। एव कर्म्मणि काने कुम्भकारेण कुम्भश्चक्राण आते तु छात्रेण जजाग्राणम्। जागृच्लु जागरे कालस्य कर्म्मत्वात् सकर्म्म कर्म्मणि काने जागोऽणवृतीति विभाषया गुणे प्राप्ते न मासी जजाग्राण जजागर इत्यर्थ। अनुपूर्वं ब्रूलञुक्तौ कामे वचादेशे द्वित्वे खेर्मूलस्य च जौ अनूचान ॥१०९

की प्रमे इव कीपमवत्। एतेन वर्त्तमानकाले कर्त्तरि परस्मैपदिभ्य. शतृ

## ११०१। शानेऽतो मन्।

शाने ७।, अत. ६।, मन् ।१।

अकारस्य मन् स्यात् शाने। पचमानः।

## ११०२। या सोऽस्य।

ई ।१।, आ ।१।, आस ५।, अस्य ६।।

आसः परस्यास्य (शानस्य) आ ई स्यात्। आसीनः।

## ११०३। वेत्तेः शतुः क्वसुर्वा।

वेत्ते ५।, शतु. ६।, क्वसु १।, वा ।१।।

विद' परस्य शतु' क्वसुः स्यात् वा। विद्वान् विदन्।

---

आत्मनेपदिभ्य शान उभयपदिभ्यो द्वय स्यात्। एव वर्त्तमाने कर्म्मणि सकर्म्म-कैभ्य भावे त्वकर्म्मकेभ्य शान' स्यात् इत्यर्थ। शित्वाद्सञ्ज्ञायां शवादौ गच्छन् दीव्यन् सृजन् तुदन् इ त्यादि। एव पित्त्वाभावाच्च ङित्वे रुत्व ध्वनौ रुवन् ष्टुञ स्तुतौ स्तुवन् इत्यादौ गुणाभावे भ्रुष्वोरित्युव्। एवञ्च ऋलिं गत्यां शटशानयो शित्त्वाद्दृच्छादेशे इयृच्छत् समियृच्छान.। कातन्त्रास्तु। शटशानयो. प्रथमान्तेन सामान्याधिकरण्याभावे आमन्त्रणे शटशानौ न स्त। तेन हे पचन् छात्र' हे पचमान छात्र। इति स्यात्। हे पचन्! हे पचमान! इत्यादि न स्यात् इत्याहु: एतयो प्रयोगे क्रियासमाप्तिर्नास्तीति बोध्यम्। पचन्निति डुपौष श पच पाके शट वे शप्रे लोपोऽत इत्यकारलोपे ऋदित्त्वात् त्रिदच इति नुम्बि स्नान्तस्य नुप स्त्रियाम् इपि पचन्ती॥११००॥

पचमान इति कर्त्तरि शान। कर्त्तरि विप्र ओदनं पचमान आस्ते कर्म्मणि विप्रेण पच्यमान ओदनः शोभते। भावे तु विप्रेण दीव्यमानम्॥११०१॥

ई आ इत्युभय लुप्तप्रथमैकम्। आस. परस्य शानस्य आकार ईकार स्यात् इत्यर्थ.। जिलासङ् कर्त्तरि शाने शप् तस्य लुकि अनेन आकारस्य ईकारे आसीन.॥११०२॥

वेत्ते परस्य शतु' क्वसु स्यात् वा। शटस्थानजातत्वेन वित्वम् अतीतबोधकत्वञ्च न स्यात्। विदल मतौ शट तस्य स्थानेऽनेन क्वसौ विद्वान्। पचे विदन्॥११०३॥

## ११०४ । शक्तिवयस्ताच्छील्ये शतुः शानः ।

शक्ति वयस ताच्छील्ये ७।, शतु. ६।, शान: १। ।

**शत्रुं निघ्नानः, कवच बिभ्राणः, भोगं भुञ्जानः ।**

## ११०५ । ती-प-म-वत् स्यट-स्यमानौ ।

ती-प म-वत् ।१॥, स्यट-स्यमानौ १॥ ।

**धोः एतौ क्रमात् त्याः प म वत् स्तः । करिष्यन् करिष्यमाणः ।**

**इति क्तादिपादः ।**

---

एष्वर्थेषु शतु' स्थाने शान. स्यात् । शत्रु' निघ्नान इति हनलौ गतौ शट शक्त्यर्थेऽनेन शतु. स्थाने शाने शपो लुकि हनगमित्लुङ्लोपे हनो क्ङौ घ्न इति घ्नादेश । कवच बिभ्राण इति भृञि टुडु शट यौवनवयस्यर्थेऽनेन शतु' स्थाने शाने शपो लुकि ह्वादीरेद्विरिति द्वित्वे खेर्भकारस्य वकारे पृभादेरिति डौ षृुणं इति णत्वम् । भोग भुञ्जान इति भुजघौ ताच्छे शट ताच्छील्ये शतुः स्थाने शाने रुधादित्वान्नपि नणोन् इति नणौ नकारे तस्य ञकार' । धृशङ् स्थितौ इत्यस्य प्रेरणे ञौ धारि । एवम् अधीङ्ल अध्ययने इत्येताभ्यामक्रर्च्छ शट एव स्यात् न तु शान इति वक्तव्यम् । धारयन्नुपनिषदम् अधीयन् तर्कम् । क्रर्च्छ तु धारयमाण अधीयान' ॥११०४॥

तेन भविष्यत्काले कर्त्त'रि परस्मैपदिभ्य. स्यट आत्मनेपदिभ्य स्यमान. उभयपदिभ्यो द्वय स्यात् । एव भविष्यत्काले कर्मणि सकर्म्मकेभ्यो भावे त्वकर्म्मकेभ्यः स्यमान. स्यादित्यर्थ. ॥११०५॥

इति क्तादिपादः ।

---

## चतुर्थः पादः—इष्णुादिः।

११०६। णि भ्राज भू सह रुच चर वृध वृत प्रजनापत्रपालंकृ निराकृन्मद पत पच इष्णु घे।

णि—पच ५।, इष्णु १।, घे ७।।

एभ्य इष्णुः स्यात् घे। कारयिष्णुः, भ्राजिष्णुः भविष्णुः सहिष्णुः रोचिष्णुः चरिष्णुः वर्द्धिष्णुः वर्त्तिष्णुः प्रजनिष्णुः अपत्रपिष्णुः अलङ्करिष्णुः निराकरिष्णुः उन्मदिष्णुः उत्पतिष्णुः उत्पचिष्णुः।

११०७। ष्णुक् भू-जेः।

ष्णुक्।१।, भू-जि ५।।

आभ्यां ष्णुक् स्यात् घे। भूष्णुः जिष्णुः।

११०८। ग्ला म्ला स्था क्षि पच परिमृजः स्नुः।

ग्ला—परिमृज ५।, स्नु १।।

एभ्यः स्नुः स्यात् घे। ग्लास्नुः म्लास्नुः स्थास्नुः क्षेष्णुः पक्ष्णुः परिमार्क्ष्णुः।

---

प्रात् जन प्रजन अपात्त्रप अपत्रप अलम् कृ अलङ्कृ। निर् आ निरा तस्मात् कृ निराकृ। मद च पत च पच चेति मदपतपच उदो मदपतपच उन्मदपतपच। ततो णिश्च भ्राजश्चेत्यादि तस्मात्। णिर्ण्यन्तः। मण्डूकप्लुताधिकारात् शक्तिवयस्ताच्छील्ये इत्यस्मात् ताच्छील्यमनुवर्त्तते तस्य च स्वय शविस प्रादिति पर्य्यन्तेष्वधिकारः। तेन कारयितुं शीलमस्येत्यादिवाक्ये कारयिष्णुरित्यादि॥ ११०६॥

भूष्णु. अत्र कित्त्वात् वदुश्चीति इम् न स्यात् गुणाभावश्च॥ ११०७॥

१९०९। क्षिप वस गृध धृषः क्नुः।

क्षिप—धृष' ५।, क्नु' १।।

एभ्यः क्नुः स्यात् घे। क्षिप्नुः वस्नुः गृध्नुः धृष्णुः।

१११०। शृ स्था भू कम गम हन लष वृष पत पदो ञुकः।

शृ—पद' ५।, ञुक १।।

एभ्यो ञुकः स्यात् घे। शारुकः स्थायुकः भावुकः कामुकः गामुकः घातुकः लाषुकः वर्षुकः पातुकः पादुकः।

११११। भिक्ष जल्प कुट्ट लुण्टवृञः षाकः।

भिक्ष—वृञ ५।, षाक १।।

एभ्यः षाकः स्यात् घे। भिक्षाकी जल्पाकी कुट्टाकी लुण्टाकी वराकी।

---

ग्लास्नुरित्यादि त्रय सुगमम्। क्षेष्णुरिति एकाजिवर्णान्तत्वात् इमो निषेधे गुणे षत्वम्। पक्ष्णुरिति औदित्त्वात् नेम् चुङिन्ति कुडि षत्वम्। परिमार्ष्णुरिति मृजलूष शुद्धौ ऊदित्त्वात् अनिम् पक्षे मृजोऽकडिति वृद्धौ शक्राजेति षड़ि षढो कः से इति षस्य कत्वे क्तिलादिति षत्वम्। अस्य इम् पक्षे न प्रयोगः॥ ११०८॥

क्षिप श्रञौ क्षिप्यौ क्षिप्नुः कित्त्वात् न गुणः। वस वसीण भये वस्नुः। गृधिषुँ च लिप्से गृध्नुः। ञिधृषा न प्रागल्भ्ये धृष्णुः॥ ११०९॥

शृगि हिंसे ञिष्ठा स्थाने, भूस्वरूपम्। कमुङ स्पृहि। औगम् लृ गत्याम्। हनली गतौ। लष लषञ स्पृहि। वृषु सेचने। पत्लृज गत्याम्। पदौङ गतौ। एभ्यो ञुकः स्यात् घे। ञित्वात् वृद्धिः। स्थायुक इत्यत्र यनञ्णित् कृदिणीति यन्। घातुक इत्यत्र खेर्ह्नो घ इति हस्य घे हनस्तङिति तङ्॥ १११०॥

भिक्षङ लाभादौ। जल्पवाचि। कुट्टकङ प्रतापने कुट्टक कुत्साछिदोरिति द्वयम्। लुण्टकावञा चौर्य्ये वङग सम्भक्तौ। एभ्यः षाकः स्यात् घे। षित्वादीपि॥ ११११॥

## ११११२। पति गृहि स्पृहि शीङ आलुः।

पति—शीङ ५।, आलुः १।।

एभ्यः आलु. स्यात् घे। पतयालुः गृहयालुः स्पृहयालुः शयालुः।

## १११३। शत सद सि धे दो रुः।

शत—द ५।, रु १।।

एभ्यो रुः स्यात् घे। शतुः सद्रुः सेरुः धारुः दारुः।

## १११४। घसस्नदः क्मरः।

घस स्न अद ५।, क्मर १।।

एभ्यः क्मरः स्यात् घे। घस्मरः सृमरः अद्मरः।

## १११५। मिद भासभन्जो घुरः।

मिद भास भन्ज ५।, घुर १।।

एभ्यो घुरः स्यात् घे। मेदुरः भासुरः भङ्गुरः।

## १११६। छिदभिदविदः कुरः।

छिद भिद-विद ५।, कुर' १।।

एभ्यः कुरः स्यात् घे। छिदुरः भिदुरः विदुर'।

---

पतत् कैश्यगत्योः। गृहत् काङ्ग्रहे। स्पृहत्कीप्से। त्रयोऽदन्तचुरादय' शीङलञि स्वप्ने। एभ्यः आलुः स्यात् घे। ञेर्लोप इत्यत्र आलुवर्जनात् न ञेर्लोप ॥१११२॥

शदलृजी शातौ। षदलृजीश विषादे। षिञगञ बन्धे। धेट पाने। धेट' पृथग् ग्रहणात् दा इति स्वरूपम्। तेन दाल लूनौ दातु दाने डुदाञिञ्च देङ पालने दैप शोधने दोषच्छेदे इति षर्णां ग्रहणम् एभ्यो रु स्यात् घे ॥१११३॥

घृघसी भक्षे। सृगतौ। अदौ भक्षे। एभ्य. क्मरः स्यात् घे कित्त्वात् न गुण ॥१११४॥

ञिमिदा स्नेहने। भासङ दीप्तौ। भन्जधौ मोटने। एभ्यो घुरः स्यात् घे। भन्ज धातोरनेकार्थत्वात् वक्रीभावे घुरे कृते घिति जस्य गकारे भङ्गुरं काष्ठं वक्रमित्यर्थः। यत्र परं भनक्ति तत्र तु भङ्क्ता इत्येव ॥१११५॥

## १११७। जागृ यङन्त यज जप वद दन्श ऊकः।

जागृ—दन्श ५।, ऊक १।।

**एभ्यः ऊकः स्यात् घे। जागरूकः यायजूकः जञ्जपूकः वावदूकः दन्दशूकः।**

## १११८। यङन्त-चल पत सह वहः किः।

यङन्त-वह ५।, कि १।।

**एभ्य किः स्यात् घे। चाचलिः पापतिः सासहिः वावहिः।**

## १११९। द्विश्चाद्‌ऋडुङ्लोपिनः।

द्वि. १।, च ।१। आत् ऋ उङ्-लोपिन ५।।

**आदन्तात् ऋवर्णान्तात् उङ्लोपिनश्च किः स्यात् घे तेषाञ्च द्वित्वम्।* ददिः चक्रिः जज्ञिः।**

---

छिनत्तीति छिदुर। भिनत्तीति भिदुर। वेत्तीति विदुर.। एषु कित्वात् न गुण। छिद्भिदी कर्मकर्त्तरीति केचित्। तन्नेयम्। दन्ती विप्रचच्छिदुर इति दोषान्धकार भिदुर इत्यादिदर्शनात् ॥१११६॥

यजश्च जपश्च वदश्च दन्श्च चेति। यङन्तश्चासौ यज जप वद दन्श चेति पश्चात् जागृश्च यङन्त यज जप वद दन्श चेति तस्मात्। जागर्त्तीति जागरूक। पुनः पुनरतिशयेन वा यजतीति यङ् यायज्य भागात् ऊके हसात् लोप इत्यकारयकारयोर्लोपे यायजूक। एवं जञ्जप्यते इति जञ्जपूक.। वदेर्वाचि वावद्यते इति वावदूकः। दन्दश्यते इति दन्दशूक ॥१११७॥

चलज गतौ। पत्यङ्‌ऋशे। सह्यकि शक्तौ सह अङच इति द्वयम्। वहँञौ प्रापणे। यङन्तेभ्य एभ्य कि स्यात् घे। पापतिरिति नीन वन्च इत्यत्र पतल्ल न गत्याम् इत्यस्य ग्रहणात् पत्यङैश्ये इत्यस्मात्। यङि खेर्नीनीऽप्राप्तौ घौ नित इति दीर्घे पापत्यभागात् कौ हसात् लोप इत्यकारयकारयोर्लोपे ॥१११८॥

आत् च ऋश्च उङ्लोपी चेति तस्मात्। ददातीति ददि. कौ द्वित्वे कित्वाद्‌गुणे उसेचौत्याकारलोपः। करोति किरति इति वयोश्चक्रिः। जायते इति जज्ञि.। अत्र कौ क्ङिते हनगमित्युङ् लोपः स्तुश्चुभिरिति नस्य ञकारः। एवं हनतौ जघ्निः औगमऌ जग्मिः खनञ चख्निः तृपसौ जघ्निः ॥१११९॥

## ११२०। यायाय भास कस स्थेश पिश प्रमदो वरः।

यायाय—प्रमद ५।, वरः १।।

एभ्यो वरः स्यात् घे। यायावरः भास्वरः कस्वरः स्थावरः ईश्वरः पेश्वरः प्रमद्वरः।

## ११२१। क्वरप् सृ जीण्नश गमस्त मश्च।

क्वरप् ।१।, सृ जि-इन् नश गम ५।, त ।१।, म ६।, च।१।।

एभ्यः क्वरप् स्यात् घे, मस्य च तः। सृत्वरी जित्वरी इत्वरी नश्वरी गत्वरी।

## ११२२। हिंस दीप कम्पाजस स्मिङ कम नमो रः।

हिंस—नम ५।, र १।।

एभ्यो रः स्यात् घे। हिंस्रः दीप्रः कम्प्रः अजस्रः स्मेरः कम्र' नम्रः।

---

वक्र यातीति यङि यायाय भासृङन दीप्तौ। कसज गतौ ष्ठा स्थाने। ईशलङ ऐश्वर्य्ये। पिश अपावयवे। प्रपूर्वमदीभिर्यङि हर्षे। एभ्यो वर स्यात् घे। यायावर इति यायाय भागात् वरे इववतेरिति इम् निषेधे हसात लोप इत्यकारलोपे य्वोर्लोप इति यलोप। ईश्वर इति वरस्य प्रत्ययत्वेन दन्त्यादित्वात् भसत्वाभावे शक्राजेति न षङ्॥ ११२०॥

सरतीति सृत्वरी कित्त्वात् गुणाभावे ह्रस्य तन्निति तनि षित्वाद्दीप्। एव जयतीति जित्वरी एतीति इत्वरी नश्यतीति नश्वरी। अत्र इववतेरिति इम् निषेधे प्रत्ययवकारस्य दन्त्यत्वात् भसत्वाभावे मुहादित्वात् षङ् शक्राजेति षङ् च न स्यात् गच्छतीति गत्वरी अनेन मस्य त॥ ११२१॥

हिनस्तीति हिंस्र इत्यादौ इववतेरिति इम् निषेध। एव दीप्यते इति दीप्र। कम्पते इति कम्प्र.। अजस्र इति नञ् पूर्वजसुदयं मोचे। न जसतीति अजस्र। स्मयते इति स्मेर.। कमुकङ स्पृहि। वारे इति ञितोऽप्राप्तिपचे कम्र.। नमतीति नम्र.॥ ११२२॥

## ११२३। सन् भिक्षाशंस उः।

सन्-भिक्ष-आशस ५।, उ १।।

एभ्यो उः स्यात् घे। रिप्सुः भिक्षुः आशंसुः।

## ११२४। विन्दिच्छू।

विन्दिच्छू १॥।

एतौ निपात्यौ। वेत्तीति विन्दुः, इच्छतीति इच्छुः।

## ११२५। स्वप तृष धृषो ङ्नज्।

स्वप तृष धृष ५।, ङ्नज्।१।।

एभ्यो ङ्नज् स्यात् घे। स्वप्नक् तृष्णक् धृष्णक्।

## ११२६। शॄ वन्द आरुः।

शॄ-वन्द ५।, आरु १।।

आभ्यामारुः स्यात् घे। शरारुः वन्दारुः।

## ११२७। क्रु क्लुकौ भियः।

क्रु क्लुकौ १॥, भिय ५।।

भीरुः भीलुकः।

---

रभौङ् राभस्ये। रब्धुमिच्छतीति सनि मिमीमादेति खेलोपे अकारस्य इत्वि स्यादे सोलोप इति सलोपे झप्झसोरिति भस्य पत्वे रिप्सभागात् अनेन उप्रत्यये इसात् लोप इति अकारलोपे रिप्सु। भिक्षते भिक्षु आशसते आशसु ॥११२३॥

सुगमम् ॥ ११२४ ॥

स्वपितीति स्वप्नक्। तृष्यतीति तृष्णक् धृष्णोतीति धृष्णक् इति उभयत्र इव-लतेरिति इम् निषेधे ङित्वात् न गुण. ॥ ११२५ ॥

शृणातीति शरारु। वन्दते इति वन्दारु. ॥ ११२६ ॥

भिय एतौ स्याता घे। बिभेतीति भीरुः भीलुक, उभयत्र कित्त्वात् न गुणः ॥ ११२७ ॥

## ११२८ । स्पृहि गृहि श्रु द्रु जेराय्यः ।

स्पृहि—जे ५।, आय्य १। ।

एभ्यः आय्यः स्यात् घे । स्पृहयाय्यः गृहयाय्यः श्रवाय्यः द्रवाय्यः जयाय्यः ।

## ११२९ । गण्डि मण्डि जि जनि नन्दिभ्योऽन्तः ।

गण्डि—नन्दिभ्य' ५॥ अन्त १। ।

एभ्योऽन्तः स्यात् घे । गण्डयन्तः मण्डयन्तः जयन्तः जनयन्तः नन्दयन्तः ।

## ११३० । स्तनि गदि मदि हृदि दूषि रित्नुः ।

स्तनि—दूषि' ५।, इत्नु १। ।

एभ्यः इत्नु' स्यात् घे । स्तनयित्नुः गदयित्नुः मदयित्नुः हृदयित्नुः दूषयित्नुः ।

---

स्पृहि गृहि स्पृधत् कीप्से । गृहत् कड ग्रहे । द्वावदन्तचुरादौ श्रुन गतौ स्रुतौ । द्रुड श्रादरे । जि जये । एभ्य आय्य स्यात् घे । स्पृहयाय्यः गृहयाय्य इत्युभयत्र ञे र्लोप इत्यादौ आय्यवर्जनात् न ञे र्लोप ॥११२८॥

गडि गण्डे । किमडि भूषे । जि जये । जनीम्यड जनौ । टुनदि समृधि अत्र जिवर्जा' सर्वे ञ्रन्ता. गण्डयन्त इत्यादिषु ञे र्लोप इत्यादौ अन्तवर्जनात् न ञे र्लोप ॥११२९॥

स्तनत्कासशब्दे । गदत्कासध्वनौ । द्वावदन्तचुरादौ । मदीभिर्यञ्नि हर्षं अस्य गर्वे ग्लेपने वा मानुबन्धत्वात् ञौ ह्रस्वे मदि । हृन्मन । हृत्करोत्याचष्टे वा इति ञौ हृदिरिति । इदुं ष्यौं वैकृते । अस्य ञौ गुणे दुषेरोदूरिति ऊकारे दूषि । एभ्य इत्नु स्यात् घे । स्तनयित्नुरित्यादिषु ञे र्लोप इत्यादौ इत्नुवर्जनात् न ञे र्लोप । अत्र त्नु इति कृतेऽपि इमा एवेष्टसिद्धौ ञे र्लोप इत्यत्र इत्नुवर्जनेऽप्य-वक्तव्ये इत्नुकरण ज्ञापयति क्वचिद्विहितोऽपि न स्यादिति तेन वहलिह इत्यत्र न गुण । वातमज इत्यत्र वौ आदेशो न स्यात् ॥११३०॥

११३१। कॄ-गॄ-जागुः क्विः।

कॄ गॄ जागु ५।, क्वि १।।

एभ्यः क्विः स्यात् घे। कीर्विः गीर्विः जागृविः।

११३२। स्वयं शं वि सं प्राद्भुवो डुः।

स्वय—प्रात् ५।, भुवः ५।, डुः १।।

एभ्यो भुवो डुः स्यात् घे। स्वयम्भुः शम्भुः विभुः सम्भुः प्रभुः।

११३३। लू-ऋ-धू-खन-सू-चर-पू-सह-वह इत्रो घे।

लू ऋ-धू-खन सू-चर-पू सह वह ५।, इत्र. १।, घे ७।।

एभ्यः इत्रः स्यात् घे। लवित्रम् अरित्रं धवित्रं खनित्रं सवित्रं चरित्रं पवित्रं सहित्रं वहित्रम्।

११३४। घञलनटोऽघे।

घञ् अल् अनट १।।।, अघे ७।।

घोरेते स्युर्नं तु घे। प्राकारः पादः दासः उपाध्यायः प्रासादः। समाजः, शमः कामः वामः आचामः अमः आमः यमः यामः विश्रमः विश्रामः।

---

कॄश विक्षेपे गॄश निगरणे गॄगि शब्दे इति इय जागृ‍ड्लु जागरे। एभ्य क्वि स्यात् घे। किरतीति कीर्विः अत क्वित्वात् इवर्णतेरिति इमो निषेधे ऋदिरणाविति इरि व्यंनचतयोरिति दीर्घं। गिरति गृणाति वा गीर्विः। जागृविरिति जागोऽणवीत्यत विवर्जनात् न गुण ॥११३१॥

एभ्य परात् भवतेर्डु स्यात् घे। डित्त्वात् टिलोपं। स्वयम्भुरित्यादि सम्भुश्च इति इय कातन्त्रसम्मतात्। एतत्पर्य्यन्तेषु ताच्छील्याधिकार ॥११३१

लूञगि छिदि। ऋ प्रापे च। धू‍ञगिञ कम्पे। खनुञ विदारे। सूङल सूतौ। चरगमनेऽदने आचारे। पूञगि शोधे। सह्लकि शक्तौ सह षञ्च। वहैञौ प्रापणे। एभ्य इत्र स्यात् करणे। लूयतेऽनेनेति लवित्रम् एवम् अरित्रं धवित्र खनित्र सवित्रं चरित्रं पवित्र सहित्र वहित्रम् ॥११३३॥

अर्थानुक्तावपि घस्य वर्जनात् क्रढी कभाव इत्यक्ते कारकभावयो प्राप्तौ

## ११३५। क-भावेऽमी।

क भावे ७।, अमी १।॥।

प्रघसः बधः धरः करः निलयः समजः मयः लयः। ध्यानं मानं दानं प्रवेपनं वपनं वयनम् भजनं दरिद्राणं शयनम्।

---

धीरैते स्तु कर्तृभिन्नकारकेषु भावे च इत्यर्थः। घञौ घकारञकारौ कणार्थः। ञकारो वृद्ध्यर्थं। यथा पाकः भागः इत्यादि। अतो नकारष्टाविभक्तोष्टकारवत् प्राचीनमतानुवादार्थः। अनटष्टकार ईवर्थं। भूष्यतेऽनयेति भूषणी। डुकञ् प्रकर्षेण क्रियतेऽसौ इति कर्मणि घञि ञित्वात् वृद्धौ प्राकारः। अस्य दीर्घविधानात् घञन्तधातौ परे क्वचिदुपसर्गस्य दीर्घं स्यादिति सूचितम्। तेन प्रासादः नीशार नीहार नीवार. व्यतीपात परीरम्भ परीवाद प्रतीकार अतीसारः इत्यादि। करणे पद्यौङ गतौ पद्यतेऽनेनेति पादः। सम्प्रदाने दाञ्च दाने दास्यतेऽस्मै इति दासी विप्रः। अपादाने उपेत्य अधीयते अस्मादिति उपाध्याय। अधिकरणे प्रसीदन्ति मनांसि अस्मिन्निति प्रासादः। भावे तु समजन समाज समूह अत्र व्यजोऽरे वेत्यत्र प्रञवर्जनात् न वौ। अमुभिर्यं भ्रमे घञि वृद्धौ जनवध इति ह्रस्वे भ्रमः। कमुङ स्पृहि भ्रारे इति ञिडीऽप्राप्तिपक्षे घञि वृद्धौ कमवमचमा वर्जनात् ह्रस्वाभावे कामः एवं वासः आचामः। अमयमविश्रमा वा ह्रस्वे श्रम श्राम यम याम विश्रम विश्राम। ननु भावो भूधातोरर्थस्तत्र सर्वधातुभ्यः कथं भावे प्रत्ययाः स्युरिति चेत् सत्यम्। भाव इह क्रियामात्रवाची। अतएव धात्वर्थः केवलो भाव इति। एव ह्यब्भवस्तय क्रियासामान्यवचना इति प्राञ्च। एवञ्च अव्यक्ते इ क्रियाया स्त साध्यता सिद्धतापि च। साध्यता त्यादिवाच्या स्यात् सिद्धता द्रव्यवत् भवेत्। द्रव्यवत्त्वे घञादि स्यात् योग लिङ्गेन सङ्ख्ययेति। तेन पाकः पाकौ पाकाः॥ ११३४॥

घञादय कर्त्तरि न स्युरित्युक्तापि अमी सर्वकारकेषु भावे च स्युरित्युक्तवता प्रयोगानुसारेण सञ्ज्ञाया क्वचित् कर्त्तर्य्यपि स्युरिति सूचितम्। घञि यथा रुजतीति रोग। उच्यतीति ओक सरति कालान्तर सार. स्थिरो भाग., अतिसरतीति अतीसारो व्याधि। अत्ति प्राप्नोति प्रघस। विशति चित्त वेशः। स्पृशति देह स्पर्श। चयतीति चयो व्याधि। धरतीति धर. पर्वतभेद.।

## ११३६ । ष्ठीवन-सीवने वा ।

ष्ठीवन सीवने १॥, वा ।१। ।

**एते निपात्ये वा । पक्षे ष्ठेवनं सेवनम् ।**

---

अनटि एकं वक्तीति एकवचनम् एवं द्विवचनं बहुवचनम् । क्वचिदिति किम्? नदतीति नद अत्र सञ्ज्ञायामपि पचादित्वादन्नेव । प्रघस इत्यादि । अट्टौ भचो कर्त्तर्य्यलि घसृद इति घसादेश । हनन वध भावे अलि हनो वधादेश. । धरतीति धर कर्त्तर्य्यल् । क्रियतेऽनेनेति करणेऽलि कर । निवीः अधिकरणेऽलि निलय । मिम्योरित्यत्र अल् वर्जनात् नङा । स पशूना समूह भावेऽलि व्यजोऽरे वेत्यत्र अल्वर्जनात् न वी । डुंनिञ मीञग वधे इति वाभ्या भावेऽलि मय । मिम्योरित्यत्र अल्वर्जनात् न ङा । लीगि श्लिषि भावेऽलि लय । माखरूपाभ्या मिम्योरित्यपि भावेऽनटि मिम्योरिति ङाद्देशे मान प्रवेपनमिति मोऽचोऽन्तरित्यत्र वेपवर्जनात् न णत्वम् । अज चेपे गतौ भावेऽनटि व्यजोऽरे इत्यत्र वी आदेशे वयन पक्षे अजनम् । दरिद्रातेर्भावेऽनटि दरिद्र आलोप इत्यत्र अल्वर्जनादालोपाभावे दरिद्राण शीङ लञि भावेऽनटि शयनम् । कारके तु क्रियतेऽनेनेति छेदन खड्ग राजभोजना शालय । साधनी बन्धनी रज्जुरित्यादि ॥ ११३५ ॥

ष्ठीवन । ष्ठिव्यु निरासे सिव्यु तन्तुसन्ततौ एतयोर्भावेऽनटि दीर्घो वा निपात्यते । पक्षे गुण । अत्र ष्ठीव निरासे इति दीर्घवता एवेष्टसिद्धौ निपातन दीर्घवत. कातन्त्राद्यसम्मतत्वात् । वाशब्दस्य अव्ययत्वेन अनेकार्थत्वात् इद विवृणोमि । यथा व्युपाभ्या शीङ: पर्य्याये घञ् । तव राजविशाय राजोपशाय । राज्ञ सम्बन्धे शयितु पर्य्याय -र्थ । उन्निभ्या गिर । उद्गार: निगार । किरतेर्धान्ये । उत्कार न वान्यस्य । धान्ये किम्? पुष्पनिकर पुष्पोत्कर' । अत्र अलेव । वे स्तोऽशब्दे विस्तीर्णे । ग्रन्थस्य विस्तर, शब्दे तु वाक्यस्य विस्तर. । गेरदोऽल् । प्रघस । गे किम्? घसु । नेर्णः । नेः परादत्तेर्णोऽल् च स्यात् । न्याद निघस:। प्रसम्भ्या मदोहर्षेऽल् । प्रमद ाद । हर्षे किम्? प्रमाद । अगेर्व्यंवजपमदे । व्यध जप मद । गेस्तु याध्य. उपजाप उन्माद । स्वनहसाभ्या वा । स्वन स्वान हस हास । गेस्तु प्रस्वान प्रहास । यम सन्निव्युपेभ्यश्च । एभ्य परात् केवलाच्च यमोऽल् स्याद्वा । संयम संयाम. नियम.

## ११३७ । मुण् लभोऽनेक टुः सोर्गे खल-घञोः ।

मुण् ।१।, लभ ६।, अन् एक टु-सो ५।, खल् घञो ७॥ ।

**केवलटुसुवर्जात् गे परस्य लभो मुण् स्यात् खलि घञि**

---

नियाम विषम विषाम उपयम उपयाम यम याम । लेगैदनदपठस्वनिह सिभ्य । निगद निगाद: निनद निनाद निपठ. निपाठ निस्वन: निस्वान निहस निहास । ले किम् ? पाठ । अगेश्च क्वणो वीणायाम् । क्वण क्वाण प्रक्वण प्रक्वाण निक्वण निक्वाण । आङो रुप्लुभ्याम् । आरव आराव: आप्लव. आप्लाव अवादुग्रहो दृष्टिविघाते । अवग्रह अवग्राह । प्रात् रज्जौ । प्रग्रह. प्रग्राह रज्जु । परेर्भुवोऽवज्ञायाम् । परिभव परिभाव । पण परिमाणे नित्यमल् । पण । परिमाणे किम् ? दास्या पाण । ग्लहोऽक्षविषये । ग्लह । सरतेर्गर्भग्रहणे गवामुपसर । अन्यत्र उपसार । अभ्युपनिविभ्यो ह्वो हुश्च । एभ्य परात् ह्वयतेरल् स्यात् तस्य हुरादेशश्च । अभिहव: उपहव । निहव विहव । एभ्य किम् ? प्रह्वाय । आङो युद्धे । आह्वयन्ते योद्धारोऽस्मिन्निति आहवो युद्धम् । अन्यत्र तु आह्वयन्ते पानाय गावोऽत्र स आह्वावो जलाशय । अत्र घञि हुरादेशो निपात्य: । काठिन्ये हन्तेर्घनादेशश्च । दध्नो घन घन दधि इति तु अभेदात् । प्रादग्टहैकदेशे हनो घञ् च । ग्टहैकदेशे वाच्ये प्राद्धन्तेर्घञलौ स्तो हन्तेर्घनादेशश्च । प्रघाण. प्रघण उभयत्र णत्व निपात्यम् । अयो विद्रुभ्यो हन्तेरल् करणे घनादेशश्च । अयो हन्यतेऽनेनेति अयोघन । एव विघन द्रुघण । परेर्डश्च । परिपूर्वाद्धन्तेर्ड स्यात् करणे घनादेशश्च । परिहन्यतेऽनेनेति परिघ । परे किम् ? विघात समुद्गा गणप्रशंसयोर्हन्तेर्डो घनादेशश्च । समो हन्तेर्ड स्यात् गणे उदो हन्तेर्ड स्यात् प्रशंसायाम् । उभयत्र घनादेश सहनन सहन्यतेऽस्मिन्निति वा सङ्घ समूह । उत्कृष्ट हन्यते ज्ञायते इति उद्घ प्रशस्त इत्यर्थ । उपात्क आश्रये । उपाद्धन्ते: क: स्यात् आश्रये । कित्त्वाद्धनगमित्युल्लोपे हनो ञ्णो घ्न घ्नादेश उपघ्न आश्रय. । स्तम्बात् करणे क स्तम्बो हन्यतेऽनेनेति के कित्वात् हनगमित्युङ् लोपे हनो ञ्णो घ्ने स्तम्बघ्नो दण्ड. । उद्घनान्तर्घनौ अलन्तौ निपात्यौ । ऊर्द्ध हन्यतेऽस्मिन्निति उद्घन. अन्तर्हन्यतेऽस्मिन्निति अन्तर्घनो देश ॥ ११३६ ॥

च। प्रलम्भः। अन्यत्र दुर्लभः। एकेति किम्?, अतिदुर्लम्भः।

११३८। स्यदैधावोद् हिमश्रथ प्रश्रथ स्फारस्फाल राग काय निकायाकायाः।

स्यद—काया, १॥।

एते घञन्ता निपात्यन्ते। स्यदो वेगः। एधः इध्मम् अवोदः अवक्लेदः। हिमश्रथ हिमश्रन्थनम्। प्रश्रथः प्रश्रन्थनं स्फारः स्फोरणम्। स्फालःस्फोलनम्। रज्यतेऽनेनेति रागः। कायो देहः। निकायो निवासः। आकायश्चितिः।

११३९। खनो ड डरे केकवकाः।

खन ५।, ड डर-इक इकवका १॥।

आखः आखरः आखनिकः आखनिकवकः।

---

एकौ अद्वितीयौ च तौ दु सू चेति एकदु.सू न विद्यते तौ यत्र सोऽनेकदु सु तस्मात्। यथा खलि अगिदुर्लभ अतिसुलभ. घञि प्रलम्भ। नुण्स्थ इत्यनेनैवेष्टसिद्धौ एतद्विधानं नियमार्थम्। तेन खलि दुर्लभ सुलभ। घञि लाभ दुर्लाभ सुलाभ.। एषु पूर्वेणापि नुण् न स्यात्॥ ११३७॥

स्यन्दङ्ल्ट स्रुतौ स्यदो वेग अन्यत्र स्यन्द। इन्धीञिधङ् दुतौ। एध काष्ठम् अन्यत्र इन्ध। अवपूर्व उन्दधी क्लेदे अवोद अवक्लेद। अवादन्यत्र इन्द ओन्द। श्रन्थग मोचे। हिमस्य श्रन्थन हिमश्रथ। प्रश्रन्थन प्रश्रथ। अन्यत्र श्रन्थ परिश्रन्थः। स्फुरशि स्फूर्त्तौ ञन्तस्य स्फार। कौ जौ ङ इत्यनेन उकारस्याकारेणैवेष्टसिद्धौ निपातन पक्षे स्फोर इत्यनिष्टपदनिरासार्थम्। स्फुल शि स्फूर्त्तौ। ञन्तस्य स्फाल। स्फल श चाले इत्यनेनैवेष्टसिद्धौ निपातन स्फोल इत्यनिष्टनिवारणार्थम्। रन्जौञ रागे भावे करणे वा घञि राग अन्यत्र रङ्ग। चिन चिञि चित्या कायो देह। अन्यत्र चाय। एव निकायो निवास.। अन्यत्र निचाय। आकायश्चिति अत्र ककार एव निपातफलम्॥ ११३८॥

डस्य डरस्य इकस्य इकवकस्य ते॥ ११३९॥

## ११४० । व्याप्तौ भावे णिनः ।

व्याप्तौ ७, भावे ७, णिन १। ।

धोर्भावे णिनः स्यात् व्याप्तौ सत्याम् । णिनान्तात् स्वार्थे ष्णः । साराविण वर्त्तते ।

## ११४१ । व्यतीहारे णन् स्त्री ।

व्यतीहारे ७, णन् ।१।, स्त्री ।१। ।

धोर्भावे णन् स्यात् व्यतीहारे, णनन्तात् स्वार्थे ष्णः, तदन्तश्च स्त्रियाम् । व्यवहारी ।

## ११४२ । ट्वितोऽथुर्भावे ।

ट्वित. ५।, अथु १।, भावे ७। ।

टुकारितो धोरथुः स्यात् भावे । वेपथुः ।

## ११४३ । ड्वितस्तज्जे त्रिमक् ।

ड्वित ६।, तज्जे ७।, त्रिमक् ।१। ।

डुकारितस्त्रिमक् स्यात् ध्वर्थान्निष्पन्ने । करणाज्जातं कृत्रिमम् ।

---

सम्पूर्वरुत ध्वनौ भावे णिने णित्त्वात् वृद्धौ सराविण इति स्थिते स्वार्थे ष्णे णित्त्वे त्रिरादच इति वृद्धौ यर्योर्लोप इत्यकारलोपे साराविण इदस्य । सम्यक् शब्दो व्याप्त इत्यर्थ ॥११४०॥

णन प्रथमणकारो वृद्ध्यर्थ । शेषो दन्त्य नकारस्तु य्वोर्युमदान्ते इत्यत्र दुनीभूज्वलाद्येति विहितस्य णप्रत्ययस्य अप्राप्तये विशेषणाय । व्यवपूर्वहृञ हृत्यामनेन णनि वृद्धौ व्यवहार इति स्थिते स्वार्थे ष्णे य्वोर्युम इत्यत्र णनन्तवर्जनात् यकारस्य इमोऽप्राप्तौ णित्त्वे त्रिरिति वृद्धौ यर्योर्लोप इत्यकारलोपे षित्त्वादीपि व्यवहारी। अन्योन्यव्यवहरणमित्यर्थ । एवम् अन्योन्यव्याक्रोशन व्याक्रोशीत्यादि ॥११४१॥

टुरित् यस्य स ट्वित् तस्मात् पृथग्योगात् व्यतीहारस्य स्त्री इत्यस्य च नानुवृत्तिः। ट्वु‌ ङवेप चले। वेपन वेपथु । एवं याचथुरित्यादि ॥ ११४२॥

डुरित् यस्य स ड्वित् तस्मात् । तस्मात् धात्वर्थात् जातमिति इनजनात् इति

**११४४। स्वप रच यत प्रच्छ विच्छ याच यजो नङ् भावे न जिः।**

स्वप—यज ५।, नङ् ।१। भावे ७, न ।१।, जिः १। ।

एभ्यो नङ् स्यात् भावे, न च जिः। स्वप्नः रक्षणः यत्नः प्रश्नः विश्नः याच्ञा यज्ञः।

**११४५। किर्दोऽन्तर्गेः।**

कि १।, द ५।, अन्तर् गे ५। ।

अन्तरो गेश्च परात् दा-संज्ञकात् किः स्यात् भावे। अन्तर्धिः आदिः।

**११४६। ढाड्डे।**

ढात् ५।, डे ७।

ढात् परात् दः किः स्यात् डे। वारिधिः पयोनिधिः।

**११४७। क्तिः स्त्र्यघे।**

क्ति १।, स्त्री ।१।, अघे ७।

धोः क्तिः स्यात् न तु घे, तदन्तश्च स्त्रियाम्।

---

डप्रत्यये तस्य तस्मिन्। डुकृञ् विमके कित्वात् गुणाभावे कविमम्। एव डुधाञ् हिविमम्। एव डुदाञ् दविममित्यादि ॥११४३॥

स्वप्नौ ञिष्वप् शये, स्वप्न। ञि रच पालने रक्षण। यतीङ् यत्ने यत्न। प्रच्छौ ज्ञीप्से प्रश्न. अत्र न जिरिति निषेधात् ग्रहस्वपाद्योरिति जिर्न स्यात्। छ्वो शूटा विति छस्य शः विच्छश गतौ विश्न छस्य श। टुङ् याचृञ याचने नङि स्तुश्चुभिरिति नस्य ञकारे अभिधानात् स्त्रीत्वे आपि याच्ञा यजी जौ यज्ञ.। रच यत विच्छ याच एभ्यो ह्यवन्तेरिति इम् निषेध. ॥११४४॥

अन्तर्द्धानम् अन्तर्द्धि. कित्वात् गुणे ङसेचीति आलोप। आदिरिति। आङ्-पूर्वाणां दातु दाने इत्यादि दास्वरूपाणां कौ आदि. ॥११४५॥

डु धा ञ्लि धारणे। वारि धीयतेऽस्मिन् इति वारिधि.। एव पयो निधीयतेऽस्मिन् इति पयोनिधिः ॥ ११४६ ॥

कृतिः बुद्धिः मतिः स्मृतिः प्रह्नतिः ।

[१०८२] ह्लादेः खः क्तौ च । प्रह्नत्तिः भूतिः फुल्तिः ।

## ११४८ । कॄ गॄ ज्या ग्ला हा ल्वादेर्निः ।

कॄ—ल्वादे ५।, नि १।।

एभ्यः परस्याः क्तेः निः स्यात् । कीर्णिः गीर्णिः ज्यानिः ग्लानिः हानिः लूनिः पूर्णिः ।

---

घस्य वर्जनात् कर्तृभिन्नकारकेषु भावे च स्यादित्यर्थः । डु कृञ् क्रियते असाविति कर्म्मणि करणमिति भावे च कृतिः । बुध्यौ ङ वेदने । बुध्यतेऽनया बोधनमिति वा बुद्धिः । अत्र ढभान्तयोरिति तस्य वे झप्झसोरिति धस्य दः । अरणं स्मृतिः । ह्लादीङ् मोदने क्तौ इवबतेरिति इमो निषेधे ह्लादेः स्व इति ह्रस्वे झप्झसोरिति दस्य ते प्रह्नत्तिः । भूयतेऽनया इति भूतिः सम्पत्तिः भवनमिति वा भूतिः । अत्र वृदुश्रीति इम् निषेधः । ञिफला भिदि इवबतेरिति इम् निषेधे घरफलो दुरित्यकारस्य उकारे फुल्तिः ॥११४७॥

कॄश्च गॄश्च ज्याश्च ग्लाश्च हाश्च लूश्च ते, ते आदयो यस्य स तस्मात् । कॄआदिस्तु ग्रादिभिन्नदीर्घॠदन्ता । यथा कॄश विक्षेपे, गॄश निगरणे, जॄदर्षश्च च, भॄश च, तॄवरे, दॄश्चये दॄयगि विदारे, नॄम नीतौ, पॄलि पालने । दर्शते । चुरादेर्नित्य-ञन्तत्वात् ॠदन्तत्व नास्तीति । कीर्णिरिति । अनेन क्तौ स्थाने नौ कृते स्थानि-वत्त्वात् ने. कित्त्वे वृदुश्रीति इमो निषेधे ॠदिरणाविति इरि र्व्यनचतयोरिति दीर्घः । एव गीर्णिरित्यादि । ज्या इत्यस्य ल्वादित्वादेव प्राप्तौ पृथग्ग्रहणं ज्ञापयति । ज्यादेः परस्य नि आदेशस्य स्थानिवत्त्व नास्तीति । तेनास्य कित्त्वाभावात् ज्यानिरित्यत्र न जिः । एव सञ्ज्ञाविशेषे ज्यादित्वात् क्तेर्निः आदेशे श्रोणिर्नितम्ब श्रेणि पङ्क्तिरित्यादौ गुणः । ग्लादिस्तु ग्लै क्षये ग्लानिः एव म्लै म्लानिः । हादिस्तु ओहाक्ङि त्यागे हानिः । अत्र दा मा गे इत्यत्र गौरवज्ञापकात् नञो । हादेः पृथग्विधानं ज्ञापयति क्ति. । स्व्यथे इत्यत्र अघ इति नञोऽल्पार्थत्वात् वहप्रभृते-र्नाम्नि कर्त्तरि क्तौ तस्य नि आदेशे स्थानिवत्त्वाभावात् जेरभावे वहतीति वह्निः एवं अग्निः । नाम्नि किम् ? ऊढिः । ल्वादिस्तु लूञगि छिदि लूनिः अत्र वृदुश्रीति

**११४९ । साति हेति यूति जूति ।**

स्यति हिनोति यौति जवतीनाम् एते क्त्यन्ता निपात्यन्ते ।

**११५० । शी व्रज यज विद स्वास मन चर भटाख्येन समज निपत निसदः क्यप् ।**

शी—निसद ५।, क्यप् ।१। ।

**एभ्यो भावे क्यप् स्यात् तदन्तश्च स्त्रियाम् । शय्या व्रज्या इज्या विद्या सुत्या आस्या मन्या चर्य्या भृत्या अटाट्या इत्या समज्या निपत्या निषद्या ।**

---

इमो निषेध । जि पू मिजि तु पालने वृदुञ्चीति इमो निषेधे ऋदिरधाविति ऊरि व्यंनचयतीति दीर्घे पूर्णि । पूर्त्तिरिति तु पूरीषङ् पूर्त्तौ इत्यस्य । जौमरास्तु ज्वरत्वरचरहुर्च्छां, धुर्वीतुर्वीत्येतान् वर्ज्जयित्वा रेफान्तादपि क्तेर्निरित्याहु । तन्मते ईर मङ कम्पगत्योरित्यादेरपि ईर्णिरित्यादि ॥११४८॥

सोय नाशे निपातनात् द्रौ सौ मा स्थामिति ङित्वं स्यात् हिनोतेर्गुण युल मिश्रणे जुरहसि इत्येतयोर्दीर्घः ॥११४९॥

अत्र सूत्रे भावे इति नोक्ता वृत्तौ भावे इति व्याख्यानादत्र प्रयोगानुसारेण भावे कर्त्तृभिन्नकारके च स्यात् । परसूत्रेषु तु भावस्यैवानुवृत्ति कदाचित् कारकस्येति ज्ञापनार्थम् । यथा शीङलिजि स्वप्ने शेतेऽस्यामिति क्यपि शीङीङ्य्येणाविति ङयि स्त्रीत्वादापि शय्या खट्वादि । व्रज गतौ व्रजनं व्रज्या । यञ्जौ यजन इज्या ग्रहस्वपाद्योरिति जि । विदल गतौ विदन्त्यनया इति विद्या सवन सुत्या क्यपि कित्त्वात् गुणाभावे स्वस्य तन् । जिलासङ आसन आस्या । मन यौङ बोधे । मन्यतेऽस्यामिति । चर्गमनेऽदने आचारे चरण चर्य्या । भृ लिटुञो भरण भृत्या । अट गतौ यङि अटाट्यभागात् भावे क्यपि हसाल्लोप इत्यकारलोपे पुनर्लोपेद यकारलोपे अटाट्या । इन गतौ एत्यनया अयन वा इत्या । अज क्षेपे गतौ समजन्त्यस्यामिति समज्या सभा । अत्र व्यजोऽरे वेत्यत्र क्यब्वर्ज्जनात् न वी । पतलृञ गत्या निपतन्त्यस्यामिति निपत्या युद्धभूमि. । सदलृजौम विषादादौ । निषीदन्त्यस्यामिति निषद्या क्रयविक्रयभूमि. ॥११५०॥

## ११५१ । कृः शश्च ।

कृ. ५।, श १।, च ।१। ।

करोतेः शः स्यात् क्यप् च भावे स च स्त्रियाम् । क्रिया, कृत्या ।

## ११५२ । सृ-जागुर्यः ।

सृ जागृ ५।, य १। ।

आभ्यां यः स्यात् भावे, स च स्त्रियाम् । परिसर्य्या जागर्य्या ।

## ११५३ । शस्त्यादः ।

शस्-त्यात् ५।, अ १। ।

आभ्यामः स्यात् भावे स च स्त्रियाम् । प्रशंसा दिदृक्षा आटाटा कण्डूया ।

## ११५४ । सेमक्तात् सरोः ।

सेमक्तात् ५।, सरोः ५। ।

यस्मात् क्तो विहितः सेम् स सेमक्तः, तस्मात् समतो धोः

---

डुकृञ भावे शप्रत्यये रतनोर्यमिणाविति षकि चट्रि शयगिति ऋकारस्य रिकारे क्रिया । क्यपि तु गुणाभावे स्वस्येति तनि कृत्या । अत्र चकारेण क्तेरपि समुच्चयात् कृतिरपि । एवं चकारात् मृगयतेरपि शप्रत्यये मृगया ॥११५१॥

परिसरणं परिसर्य्या, परिपूर्वस्यैव प्रयोगः । जागरणं जागर्य्या ॥११५२॥

शंस च त्यश्चेति शस्त्यं तस्मात् । शंसु हिंसास्तुत्योः । प्रशंसनं प्रशंसा । त्य प्रत्ययान्तः । दृश प्रेक्षणे सनि शकृगेति षकि षढोः कः से इति षस्य ककारे दिदृक्षभागादनेन भावे अप्रत्यये लोपोऽत इति सनोऽकारलोपे स्त्रीत्वादापि दिदृक्षा । एवं स्वार्थे सन्नन्तादपि चिकित्सा इत्यादि । अट गतौ यङि अटाट्य-भागादप्रत्यये हसाल्लोप इत्यकारलोपे पुनस्तथैव यकारलोपेऽपि अटाटा । कण्डू-शब्दात् क्यं कृते कण्डूयभागादप्रत्यये कण्डूया । एवं पुत्रकाम्या ग्रामीया इत्यादि । कम ऋतति ईयादौ ऋतीया गोपाया ॥११५३॥

सह इमा वर्त्तते य स सेम् । सेम् क्तो यस्मात् स सेमक्तः तस्मात् । यस्मात् धातोः परस्य क्तस्य इम् सम्भवति स सेमक्तः । सेमक्तात् गुर्वच्चरवतो धातो रः

ञ स्यात् भावे स च स्त्रियाम्। ईहा जागरा। सेमन्तात् किम् ?, नीतिः राद्धिः। रूमतः किम् ?, पत्तिः।

## ११५५। तुलेच्छारा तारा धारा कारा हारा गोधा लेखा रेखा चूड़ाः।

तुला—चूडा १॥।

एते आन्ता निपात्यन्ते। चोदना चूडा।

## ११५६। भीषि चिन्ति पूजि कथि कुम्बि चर्च्चि स्पृहि तोलि दोलि षिड्निदाद्यात्वर् घटादेर्ङः।

भीषि—आत्वर् घटादे ५।, ङ १।।

एभ्यो भावे ङ स्यात् स च स्त्रियाम्। भीषा चिन्ता पूजा

---

स्यादित्यर्थः। ईहङ चेष्टे ईहा जागृच्च् लु जागरे। सेमन्तात् किं नीञ प्रापणे नीति। राध्यौ सिद्धौ राद्धि। रूमत कि पट गतौ पद्दि. ॥११५४॥

तुल कि उन्मितौ। तोलयत्यनयेति तुला परिमाणदण्ड.। इषुश वाञ्छे इच्छा। ऋ गतौ आरा क्षुरिका। तृतरे तारा। धृञ धारा। गुध्य वेष्टे गोधा। हृञ हारा। कृञ कारा। लिखश लेखा। लकारस्य रेफे रेखा च चुदकान्तुदि चूडा। चूडा इति बहुवचनादन्येऽपि निपात्यन्ते। यथा भिदादेर्भावे णक. स्त्री। भेदन भेदिका अतएव चिकीर्षा यस्य भेदिकेति ख्यमुक्तम्। एवं विशेषेण भीषणा विभीषिका। रोगाख्यायाम्। प्रवाहिका प्रच्छर्दिका विचर्च्चिका। सञ्ज्ञायाम् उद्यानपुष्पाणि भज्यन्तेऽस्यामिति उद्यानपुष्पभञ्जिका क्रीडा। ऋणार्ह-पर्य्यायेषु च ऋणे पायसभोजिका मे धारयसि। अर्हे इक्षुभक्षिका भवान् अर्हति। पर्य्याये अद्य तव शायिका। एवम् आसिका आसनमित्यर्थः। एवञ्च सम्पदादेः पद्यतेर्भावे क्विप् स्त्रियाम्। पद्यौङ गतौ सम्पत् आपत् विपत् प्रतिपत्। एवं टुश्चुल च्युते। च्यवण च्युत्। प्रतिश्रुत् प्रतिध्वनि. विपाशा विपाट्। क्षुधा क्षुत् इत्यादयः॥ ११५५॥

कथा कुम्बा चर्चा स्पृहा तोला दोला पचा भिदा छिदा गुहा विदा चिपा जना पीडा सरा वसा रुजा घटा व्यथा त्वरा ।

११५७ । आतोऽन्तः श्रद्धे ।

आत' ५।, अन्तर्-श्रत् गे ५। ।

एभ्यः पराददन्तात् ङः स्यात् स च स्त्रियाम् । अन्तर्द्धा श्रद्धा, संज्ञा प्रमा ।

---

ष इत् यस्य स षित् । भिद आदिर्यस्य स भिदादि' । आत्वर् त्वरपर्यन्त । स आसौ घटादिश्चेति आत्वर्घटादि. । ततो भीषिश्च चिन्तिश्चेत्यादि समाहारस्तस्मात् । ञिभीलि भीत्या ञौ भीषादेशपक्षे भीषि । चिति क स्मृतौ । पूजक पूजे । कथत् क वाक्यप्रबन्धे । कुबिकि स्त्व्याम् । चर्च केङ सम । स्पृहत् कीप्से । तुलकि उन्मितौ । दुलक्युत् क्षेपे । नवैते अदन्ता । एभ्यो ञौपि अन्यीत्यादिना प्राप्तव्यम् अन बाधित्वा अनेन ङप्रत्यये ञेर्लोपे स्त्रीत्वादापि भीषा इत्यादि । षितस्तु जुञौष पच पाके पचा । एव चिनगष चिया । रुजलुष शुद्धौ रुजूषकि भूषे च इति दयो रुजा । लभङ्ङीङष लभा । क्षमुङञिश. क्षमा इति । भिदादेस्तु । भिदिर भिदा । छिदिर छिदा । गुहञ गुहा । विदल मतौ विदा । क्षिपषञौ क्षिपा । एषु ङित्त्वात् न गुण । जनीञ्यङ जनौ हनगमेत्यत्र ङवर्जनात् न लोप । पीड्क पीडा अत्र अदन्तत्वादन प्राप्तौ ङ । सृ गतौ सरा । ङ परे ऋवर्णेरिति ण । ञौवसे निवासे वसा । रुजोञौ रुजा अत्र ङित्त्वात् न गुण । इत्यादिराकृतिगण सृजौ विसर्गे सृजा इत्यपि केचित् । आत्वर्घटादिस्तु । घटषमङ चेष्टने । जॄइर्षम्य ज्यानौ । त्वजि त्वजष मङ त्यागे गतौ । प्रथ षमङ ख्यातौ व्यथषमङ दुःखे । कद क्रद क्लदषमङ वैक्लव्यविकलत्वयो । म्रदषङ चोदने स्खदञ्ष विदारे क्रपषमङ कृपाया स्यात् । क्नवषङ तु भये । दक्षषङ हिंसने । त्रपूषमिङ लज्जायाम् । प्रसषञ प्रसवे ततो, ञित्वर्षमङ वेगे स्यादमी आत्वर्गटा दय । घटा व्यथा इत्यादय ॥ ११५६ ॥

अन्तर्द्धानम् अन्तर्द्धा । एव श्रद्धा श्रदित्यव्ययम् । सज्ञायतेऽनया सज्ञा नाम । प्रमीयतेऽनया प्रमाणमिति वा प्रमा । एषु उपस्येचौत्याकारलोपे स्त्रीत्वादाप् ११५७॥

११५८। श्री षि श्रन्थि ग्रन्थि वेत्ति वन्दासोऽनः।

नि—श्रास ५।, श्रन १।।

एभ्योऽनः स्यात् स च स्त्रियाम्। कारणा ईषणा श्रन्थना ग्रन्थना वेदना वन्दना आसना।

११५९। प्रश्नाख्याने णिः।

प्रश्न—आख्याने ७।, णि १।।

प्रश्ने आख्याने च धोर्णिः स्यात् स च स्त्रियाम्। काङ्कारिमकार्षीः सर्वाङ्कारिमकार्षम्।

११६०। नञोऽन्याक्रोशे स्त्री।

नञ ३।, अनि ।१।, आक्रोशे ७।, स्त्री ।१।।

नञः पराद्धोरनिः स्यात् आक्रोशे, स च स्त्रियाम्। अजीवनिस्तस्य भूयात् अप्रयाणि।

११६१। ईषद्दुःसोः खल् भावे ढे।

ईषत् दुर् सो. ५।, खल् ।१।, भावे ७।, ढे ७।।

एभ्यः पराद्धोः खल् स्यात् भावे ढे च। ईषदाढ्यम्भवं भवता। दुराढ्यम्भव भवता। ईषत्करः कटस्त्वया, दुष्करः सुकरः।

---

डिञ्नात। कारणा। ईषुञ्छे ईषणा। ग्रन्थ क्लिग दर्भे ग्रन्थना। श्रन्थ श्रीचे प्रतिहर्षे श्रन्थना। विदज्ञाने वेदना। वदिङ स्तुत्यभिवादनयो वन्दना। जिआसङ उपवेशे आसना॥ ११५८॥

क्लग्दडुच योर्णिलात् बङ्गी कारि। केचित् तु प्रश्ने आख्याने च सकृति श्च क्यपश्च क्त्वा काङ्कारिका काङ्कृति काङ्क्रिया काङ्कृत्याम् अकार्षीः सर्वाङ्कारिका सर्वाङ्कृति सर्वाङ्क्रिया सर्वाङ्कृत्याम् अकार्षम् इत्युदाहरन्ति॥ ११५९॥

जीवङ्क्ष प्राणे अनि अजीवनि। याल गतौ अप्रयाणि। नीऽच इति णत्वम्। स्त्र्यधिकारेऽपि स्त्रीग्रहणं स्त्र्यधिकारनिवृत्त्यर्थम्॥ ११६०॥

एषामव्ययत्वात् खिल्काय्यीभावेऽपि ईषत् दु.सो. परात् धातो खल्विधाना

## ११६२। आतोऽनोऽदरिद्रः।

आत ५।, अन १।, अदरिद्र ५।।

दरिद्रावर्जात् आदन्तादीषद्दुःसोः परात् अनः स्यात् भावे ढे च। ईषत् पानः दुष्पानः सुपानः। अदरिद्रः किम्? ईषद्दरिद्रम्।

## ११६३। दृश शास युध धृष मृषो वा।

दृश—मृष ५।, वा।१।।

ईषद्दुःसो परेभ्य एभ्योऽनः स्यात् भावे ढे च वा। सुदर्शनः सुदर्शः, दुःशासनः दुःशासः, दुर्योधनः दुर्योधः, सुधर्षणः सुधर्षः, ईषन्मर्षणः ईषन्मर्षः।

## ११६४। तादर्थ्ये चतुम्।

तादर्थ्ये ७।, चतुम्।१।।

धोश्चतुम् स्यात् तादर्थ्ये। कृष्णं द्रष्टुं याति।

---

दाढ्यादिशब्दव्यवधानेऽपि स्यात् तेन ईषदाढ्योपपदात् भवतेर्भावे खलि गुणे खित्वा-दाढ्यस्य मनि ईषदाढ्य भवम्। एव दु॰॰ भवम्। ईषत् क्रियतेऽसौ इति कर्म्मणि खलि ईषत्कर एव दुःखेन क्रिय॰॰ दुष्कर। ॰॰ क्रियतेऽसौ सुकर ॥ ११६१ ॥

ईषत् पीयतेऽसौ इति कर्म्मणि अने ईषत्पान। ॰॰ ॰॰न। ॰॰ दुर्वर्जनात् न णत्वम्। सुपान। अदरिद्र किम्? ईषत् दरिद्रायते इति भावे ॰॰लि दरिद्र आलोपे ईषद्दरिद्रम् ॥ ११६२ ॥

सुखेन दृश्यतेऽसौ इति कर्म्मणि अने सुदर्शन. खलि सुदर्श। एव सुखेन शिष्यतेऽसौ सुशासन सुशास। एव दुःशासन दुःशास। युध्यौङ युद्धे अन्त-र्भूतणत्वार्थत्वात् सकर्म्मकत्वे दुःखेन युध्यतेऽसौ इति कर्म्मणि अने दुर्योधन खलि दुर्योध धृषा कि त्वमर्षे अमर्ष इह अभिभव। सुखेन धृष्यतेऽसौ सुधर्षण सुधर्ष। मृषुञ क्षान्तौ। ईषत् मृष्यतेऽसौ ईषन्मर्षण ईषन्मर्ष ॥ ११६३ ॥

स धात्वर्थ स चासौ अर्थ प्रयोजनश्चेति तदर्थ तस्य भावस्तादर्थ्यं तस्मिन्।

## ११६५ क्त्वाच् वा निषेधेऽलं खलुना।

क्त्वाच् ।१।, वा ।१।, निषेधे ७, अल ।१।, खलुना ३। ।

**निषेधार्थयोः अल खल्वोर्योगे धोः क्त्वाच् स्यात् वा भावे। अलं दत्त्वा अलंदानेन, खलुपीत्वा खलुपानेन।**

## ११६६। पूर्वकाले।

पूर्वकाले ७।

**पूर्वस्मिन् काले स्थिताद्धोः क्त्वाच् स्यात्। विष्णुं नत्वा स्तौति।**

---

यस्य धातोरर्थे अन्यधात्वर्थस्य प्रयोजन भवति तस्मात् धातोर्भावे भविष्यत्काले चतुम् स्यादित्यर्थ। चकारोऽव्ययार्थ दृश्ँ प्रेक्षे चतुम् औदित्त्वात् इमोऽभावे वर्द्रोऽकिदिति ऋकारस्य रेफे शकाजेति षङि तस्य टले द्रष्टुम् अत्र दृशधातोरर्थे या धात्वर्थस्य प्रयोजन भवतीति दृशधातोश्चतुम्। अत्र क्रिययोरेककर्तृत्वे सत्येव चतुम् स्यात्। तेन विप्रमन्न भोक्तु निमन्त्रयते इति न स्यात् अन्नभोजनाय विप्र निमन्त्रयते इत्येव स्यात्॥ ११६४॥

चकारोऽव्ययार्थ। शीव्रज इत्यादिसूत्रस्य वृत्तौ भावपदव्याख्यानात् इत्यादौ भावस्यैवानुवृत्ति। तेन डु दाञलि दाने भावे क्त्वाचि दद्दोष इति दतादेशे दत्त्वा पचेऽनटि सह वारणेत्यादिना तृतीया दानेन। पा पाने भावे क्त्वाचि दामागे इति ङी पीत्वा पचे पानेन॥ ११६५॥

यदा कर्त्ता क्रियाद्वय क्रियात्वय करोति तदा परक्रियापेक्षया पूर्वस्मिन् काले वर्त्तमानात् धातोर्भावे क्त्वाच् स्यात् इत्यर्थ। तेन पक्त्वा भुङ्क्ते पक्त्वा भुक्त्वा याति। विष्णु नत्वा स्तौतीति स्तवनक्रियाया पूर्वकाले वर्त्तमानान्नमो अव्दनत्योरित्यस्मात् क्त्वाचि वनतनेति मलोपे नत्वा। पूर्वकाले किं नमति च स्तौति च इत्यादौ न स्यात्। अत्र क्रियाणामेककर्तृत्वे एव क्त्वाच् स्यात्। तेन गुरौ गते शिष्यो भुङ्क्ते इत्यादौ न स्यात्। किन्तु पुत्र दृष्ट्वा सुख भवति शत्रु दृष्ट्वा दुःख भवतीत्यादौ स्थितस्य इत्यध्याहारादेककर्तृकत्वे क्त्वाच्। यद्यपि कसपतनानन्तरमेव झनत्कारो भवति तथापि झनदिति कृत्वा कस पतति इत्यादौ झनत्कारस्य पूर्वकालविवक्षया क्त्वाच् स्यात। एव मुख व्यादाय निद्रातीत्यादि॥ ११॥

## ११६७। न कित् स्कन्दस्यन्दः।

न ।१।, कित् ।१।, स्कन्द स्यन्द ५।।

**स्कन्त्वा स्यन्त्वा।**

## ११६८। सेमऽक्षुध कुष क्लिश गुध मृड़ मृद वद वस ग्रहः।

सेम् ।१।, अक्षुध—ग्रह ५।।

**धोः पर इम् सहितः क्त्वाच् कित् न स्यात्, न तु क्षुधादेः। शयित्वा। सेम् किम्? श्रुत्वा। क्षुधादेस्तु क्षुधित्वा।**

## ११६९। तृष मृष कृष वञ्च लुञ्चृतो वा।

तृष—ऋत ५।, वा ।१।।

**पञ्च्यः सेम् क्त्वाच् कित् न स्यात् वा। तर्षित्वा मर्षित्वा कर्षित्वा वञ्चित्वा लुञ्चित्वा अर्त्तित्वा। पक्षे तृषित्वा इत्यादयः।**

---

आभ्या पर क्ताच् कित् न स्यात्। स्कन्दिरौ गतिशोषणयोः। क्त्वाच कित्त्वाभावात् हसुङ्क्‌ इत्यनेन नलोपाभावे एकवर्गीयवर्णत्रयमध्यवर्त्तित्वात् दलोपे स्कन्त्वा। स्यन्दङवत्त स्रुतौ क्त्वाचि ऊदित्त्वात् इमोऽभावपक्षे स्यन्त्वा। अत्र नञा निर्दिष्टमनित्यमिति न्यायात् क्त्वाच् स्थानजातस्य यप कित्त्वे प्रस्कद्य प्रस्यद्य इत्यत्र न लोपः स्यात्॥ ११६७॥

सह इमा वर्त्तते योऽसौ स सेम्। शीङलजि क्त्वाच् वसोऽरस्येति इमि अनेन कित्त्वनिषेधे गुणे शयित्वा। एवम् ऋचश्च स्तुत्याम् अर्चित्वा इत्यादि। सेम् किम्? जित्वा श्रुत्वा कृत्वा। क्षुधलृषौ क्त्वाचि क्षुधवसेति इमि क्षुधित्वा। कुषग निष्कर्षे। कुषित्वा। क्लिश्युज चोपतापे। क्लिश्गतु विबाधे एतयो इम् पक्षे क्लिशित्वा। गुध्य वेष्टे गुधग रुषि गुधङ क्रीडे इति त्रयाणा गुधित्वा। मृडगश्च मोदे मृडित्वा मृदग क्षुदि मृदित्वा एषु कित्त्वात् न गुणः। वदै वाचि ग्रहस्वपाद्योरिति जौ उदित्वा वसैञौ निवासे क्षुधवसेति इमि ग्रहस्वपाद्योरिति जौ शासवसेति षत्वे उषित्वा। गग्रहज च ग्रहस्वपाद्योरिति जौ ग्रहेरिमोर्घ इति दीर्घे गृहीत्वा। क्षुधक्लिश वस इति त्रिभ्योऽन्येषु वसोऽरस्येति इम्॥ ११६८॥

১১৭০ । থ-ফাৎ নুঙঃ ।

থ ফাৎ ৫।, নুঙঃ ৫। ।

নকারোঙস্থান্তাৎ ফান্তাচ্চ সেম্ ক্তাচ্ কিৎ ন স্যাৎ বা । শ্রন্থিত্বা শ্রথিত্বা গ্রন্থিত্বা গ্রথিত্বা গুম্ফিত্বা গুফিত্বা । নুঙঃ কিম্ ? কোথিত্বা রেফিত্বা ।

১১৭১ । নশ্-জোঽনিমঃ ।

নশ্-জ ৫।, অনিম ৫। ।

নশো জান্তাচ্চ নুঙোঽনিমঃ পরঃ ক্তাচ্ কিৎ ন স্যাৎ বা । নষ্ট্বা নংষ্ট্বা, ভক্ত্বা ভক্ত্বা । অনিমঃ কিম্ ? অঞ্জিত্বা ।

[৮১৮] ব্যুঙোঽবোহসাদেরিতি দ্যোতিত্বা, দ্যুতিত্বা লেখিত্বা, লিখিত্বা । রুদাদেস্তু রুদিত্বা বিদিত্বা মুষিত্বা । অবঃ কিম্ ? দেবিত্বা । হসাদেঃ কিম্ ?, এষিত্বা ওষিত্বা ।

---

তৃষঁজি তৃষ তৃষি । ক্তাচ কিত্ত্বাভাবে গুণে তর্ষিত্বা কিৎ পক্ষে তৃষিত্বা । এবং মৃষু সেচনে মৃষ্যঙ্ মৃষ্যঞ চান্তৌ এষা মর্ষিত্বা মৃষিত্বা । কৃশিষং তু কার্শ্যে কর্শিত্বা কৃশিত্বা । বন্চু গত্যা বঞ্চিত্বা কিৎ পক্ষে বচিত্বা । এব লুন্ চাপনয়নে লুঞ্চিত্বা লুচিত্বা । ঋত স্পর্দ্ধনৈশ্বর্য্যে অর্ত্তিত্বা ঋতিত্বা ॥ ১১৬৯ ॥

শ্রন্থগ মোক্ষে শ্রন্থিত্বা শ্রথিত্বা । গুন্ফশ গ্রন্থে গুম্ফিত্বা গুফিত্বা । নকারোঙঃ কিম্ ? কুথ্যতু পূতিত্বে কোথিত্বা । রিফশর্ফে রেফিত্বা ॥ ১১৭০ ॥

নশ চ জ চেতি তস্মাৎ । নশ্‌ল্ল নাশে ঊদিত্ত্বাৎ বেমূদিদিত্যনেন ইমোঽভাবপক্ষে নুণ্ রধ ইতি নুমি কিৎ পক্ষে হসুঙ্ ইতি নলোপে শক্রাজেতি ষত্বে নষ্ট্বা ভন্জোধৌ মোটনে ঔদিত্ত্বাৎ ইমোঽভাবে ন লোপে চজ্ডিতি জস্য গকারে ভষ্ভসোরিতি গস্য ককারে ভক্ত্বা । পক্ষে নস্যানুস্বারে অপেজম্নোরিতি তস্য ঙকারে ভঙ্ক্ত্বা । অনিম কিম্ ? অঞ্জধজি ইম্ পক্ষে সেমক্তুশ্বিতি কিত্ত্বনিষেধে নস্যানুস্বারে তস্য ঞকারে অঞ্জিত্বা । ব্যুঙোঽবো হসাদেরিত্যস্যোদাহরণমাহ দ্যুত্‌লঙ দ্যুত্যা দ্যুতিত্বা দ্যোতিত্বা লিখশ লেখনে লিখিত্বা লেখিত্বা । রুদাদেস্তু রুদিত্বা বিদিত্বা মুষিত্বা । অবঃ

## ११७२। पू-क्लिशुदित इम्।

पू क्लिश उदित ५।, इम् ।१। ।

एभ्यः क्वाच् इम् स्यात् वा। पवित्वा पूत्वा, क्लिशित्वा क्लिष्ट्वा, शमित्वा शान्त्वा।

## ११७३। क्रमोर्घौ वा।

क्रम ६।, घँ १।, वा ।१। ।

क्रमित्वा क्रान्त्वा क्रन्त्वा।

## ११७४। जॄ-व्रश्चो न जिः।

जॄ व्रश्च ६।, न ।१।, जि १। ।

आभ्यां क्वाच् इम् स्यात् न तु व्रश्चेर्जिः। जरित्वा व्रश्चित्वा।

---

किम्? दिव्‌ जिगीषादौ उदित्वेन क्वाच् वेट्त्वात् इम् पक्षे सेमचुधकुषेत्यादिना नित्यकित्त्वाभावे गुणे देवित्वा पक्षे द्युत्वा इति बोध्यम्। इसादि किम्? एषित्वा ओषित्वा। अनयोरपि वेमत्वात् इम् पक्षे कित्त्वाभावो नित्यः॥११७१॥

वृदुश्रीत्यनेन कितामिम् निषेधात् पूं इत्यस्याप्राप्तौ विकल्पार्थं ग्रहणम्। क्लिश्युञ् चोपतापे अस्य स्वमते उदित्त्वेऽपि पुनर्ग्रहणम् अन्येषां मते उदित्त्वाभावात्। पूस्वरूपात् क्वाचोऽनेन इमि सेमचुधकुषेत्यादिना कित्त्वनिषेधात् गुणे पवित्वा पक्षे पूत्वा। क्लिश्युञ क्वाच इमि सेमचुश्रेत्यत्र क्लिशवर्जनात् गुणाभावे क्लिशित्वा पक्षे क्लिष्ट्वा। शमुभिषं शमे उदित्त्वादनेन इमि शमित्वा पक्षे अमुङ् झस्यखाविति दीर्घे शान्त्वा॥११७२॥

क्रमो घं. स्यात् क्वाचि। क्रमु गतौ क्वाच् वेट्त्वात् इमोऽभावपक्षेऽनेन दीर्घे क्रान्त्वा पक्षे क्रन्त्वा। इम् पक्षे क्रमित्वा इति बोध्यम्॥११७३॥

विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वम्। जॄस्वरूपात् वृदुश्रीत्यनेन कितामिम् निषेधेऽपि अनेन इमि सेमचुधेत्यादिना कित्त्वनिषेधात् गुणे जरित्वा। पक्षे वॄतो वेम इति दीर्घे जरीत्वा इत्यपि। जॄ इति दीर्घान्तस्य ग्रहणमिति दुर्गसिंहः। जॄ

११७५। ह्वाको ह्विः।

ह्वाक' ६।, ह्वि १।।

ह्वित्वा।

११७६। व्यात्नञः क्त्वो यप् से।

व्यात् ५।, अनञ ५।, क्त्व ५।, यप् ।१।, से ७।।

नञ्वर्जात् व्यात् परात् धोः क्त्वो यप् स्यात् से सति। प्रकर्षेण कृत्वा प्रकृत्य, प्रवत्य प्रतत्य प्रहत्य, उदज्य, प्रदाय प्रमाय प्रगाय प्रह्वाय प्रपाय प्रसाय प्रस्थाय। [७५३] दीङ्ष्ठ्रामिति यपि ङा। प्रदाय [७४५] मिम्योरिति ङा प्रमाय प्रलाय प्रलीय।

---

न्यक्कारे इति कृस्यान्तस्य ग्रहणमित्येके। ग्रथूश् छेदे ऊदित्त्वेन वेमत्वेऽपि अनेन नित्ये मि ग्रथित्वा। सेम् क्त्वाच कित्त्वनिषेधादेव जेरप्राप्तौ अत्र जेर्निषेधो ज्ञापयति कस्यचिद्विधेर्निषेधेऽपि पुन. प्रसक्तिः स्यादिति। तेन ह्ववतेरिति इम् निषेधेऽपि चणादे क्ते इम् स्यात्। यथा भणितिः सङ्कुचितिः निकुचितिः आलोचितिः पठितिः गृहीतिः स्निहितिः उदितिः मुदितिः दीधितिरित्यादि॥११७४॥

ह्वाकी ह्वि. स्यात् क्त्वाचि। ह्वित्वा। ह्वाक किम्? ओह्वाङ्लि गतौ ह्वात्वा॥११७५॥

नास्ति नञ् यत्र सोऽनञ् तस्मात्। कृञदड् च प्रकर्षेण कृत्वा इति व्यस्य य्यनु-कारीति समासे अनेन क्त्वाचो यपि तस्य स्थानिवत्त्वेन कित्वात् गुणाभावे स्वस्य तनि प्रकृत्य। वनुम व्यापृतौ प्रवत्य। तनदुञ विस्तृतौ प्रतत्य। हनली प्रहत्य। एषु वनतनेति न लोपे स्वस्य तन्। अञ्जूअञ्जि हसुङ् इति नलोपे उदज्य। दा इति स्वरूपस्य प्रदाय। मा इति स्वरूपस्य प्रमाय। गै प्रगाय। ह्वाक प्रह्वाय। पा पाने प्रपाय। षोय नाशे प्रसाय। स्था प्रस्थाय। एषु दामागेह्वागित्यत्र यप्वर्जनात् न ङी। ओदीङ्य चये दीङ्ष्ठ्रामिति ङादेशे प्रदाय। डुमिञन क्षेपे मीङ्षतु मीञग वधे एषां मिम्योरिति ङादेशे प्रमाय। ली इत्यस्य लियस्तु वेत्यनेन ङादेशविकल्पे प्रलाय प्रलीय। अनञः किम्? अकृत्वा न कृत्वा। से किम्?

## ११७७। म्लोपो वा अनिमः।

म् लोप १।, वा।१।, अनिम ६। ।

अनिमो मस्य लोपं वा स्यात् यपि। प्रणत्य प्रणम्य। अनिमः किम्? प्रशम्य।

## ११७८। घोर्ञेरयः।

घो ५।, ञे ६।, अय १। ।

घुपूर्वस्य ञेरयः स्यात् यपि। विगणय्य। घोः किम्? सम्प्रधार्य्य।

## ११७९। वापः।

वा।१।, आप ५। ।

आपः परस्य ञेरयं स्यात् वा यपि। प्रापय्य प्राप्य।

## ११८०। वा-मेच्योर्मिच्यौ।

वा।१।, मे च्यो ६॥, मिच्यौ १॥ ।

मेङो मि चेः चीः स्यात् वा यपि। अपमित्य अपमाय, प्रचीय प्रचित्य।

---

सपदि कृत्वा इति। कदाचिदनव्ययपूर्वादपि तेन स्ववन त्यज्य गच्छति। सन्ध्या-वधू गृह्य करेण गाढमित्यादि जौमरा ॥ ११७६ ॥

नमौ शब्दनत्यौ मलोपे स्वस्य तनि प्रणत्य पचे प्रणम्य। एवम् औगम आगत्य आगम्य। अनिम किम्? विक्रम्य आचम्य। निर्जित्य आहत्य विहृत्य इत्यादौ आगमा-देशयोरागमस्य बलवत्त्वादौ स्वस्य तनागमे घोंऽजय्यरे इति न स्यात् ॥ ११७७ ॥

लघोरव्यवहितपरस्य ञेरसम्भवात् हसव्यवधाने इत्यर्थं। गणत्क सङ्ख्याने। ञौ हसाल्लोप इत्यकारलोपे गणिभागात् क्त्वाचौ यपि अनेन ञेरयि विगणय्य एवं विघटय्य इत्यादि। घो. किम्? सपूर्वात् धृक ध्वत्या ञौ धारिभागात् क्त्वाचौ यपि गुर्वक्षरपूर्वत्वात् ञेरयाभावे ञेर्लोपे सम्प्रधार्य्य। एव प्रपाठ्य प्रभाव्य इत्यादि ॥ ११७८ ॥

प्रापय्य प्राप्य। अत्र गुरुपूर्वत्वात् अप्राप्तौ विभाषा ॥ ११७९ ॥

११८१। न वे-ज्या-व्यो जिः।

न।१।, वे ज्या—व्य ६।, जि १।।

एषां जिर्न: स्यात् यपि। प्रवाय प्रज्याय प्रव्याय।

११८२। संपरि-व्यो वा।

सम्-परि-व्य ६।, वा।१।।

आभ्यां व्येञोजिर्वा स्यात् यपि, संवीय संव्याय, परिवीय परिव्याय।

११८३। चणम् वाभीक्ष्ण्ये पूर्वकाले।

चणम्।१।, वा।१।, आभीक्ष्ण्ये ७।, पूर्वकाले ७।।

धो: पूर्वकाले चणम् वा स्यात् पौन:पुन्ये। स्मृत्वा स्मृत्वा नमसि, स्मारं स्मारं नमसि।

कृतो ये यत्र विहितास्तत्र नूनं भवन्ति ते।
कृञो: कभाव इत्युक्तेरन्यत्रापि प्रयोगत:॥

तथाच।

कृत्तद्धितसमासानामभिधानं नियामकम्।
लक्षणं त्वनभिज्ञाना तदभिज्ञानसूचकम्॥

---

मेङ प्रतिदाने क्त्वाची यपि अनेन मि आदेशे स्वस्य तनि अपमित्य। पक्षे एचोऽशित्या अपमाय। चिस्वरूपात् क्त्वाची यपि दीर्घान्तादेशे प्रचीय पक्षे स्वस्य तनि प्रचित्य। पुनर्वाग्रहण परतो वाधिकारनिवृत्त्यर्थम्॥ ११८०॥

वेञेवे स्युतौ ज्यागि जरायां व्येञ् वृतौ एषां ग्रहस्वपाद्योरिति प्राप्तौ जिर्न स्यात् यपि॥ ११८१॥

सम्परिपूर्वस्य व्येञ् वृताविव्यस्य जिर्वा स्यात् यपि। सवीयं परिवीय। उभयत्र जौ कृते जीर्घोऽन्त्य इति दीर्घं। सम्परिपूर्वस्य किम्? प्रव्याय प्रतिव्याय॥११८२॥

अभीक्ष्ण मुहुरर्थमव्ययं तस्य भाव आभीक्ष्ण्यम्। अत्रापि क्रिययोरेककर्तृकत्वे क्त्वीति बोध्यम्। स्मृ स्मृतौ चणम् णित्त्वात् वृद्धौ स्मारं स्मारं आभीक्ष्ण्ये पूर्व-

वक्तव्यात् डित्वम्। चित्त्वादव्ययम्। पचि स्मृत्वा स्मृत्वा। अत्र वाशब्दस्य व्यवस्थावाचित्वात् क्वचित् पौनःपुन्याभावेऽपि चणम् स्यात्। तदेवाह विष्वणीमि। अग्रप्रथमपूर्वेभ्यो भोजणम् वा। अग्रे भोजं व्रजति अग्रे भुंक्त्वा व्रजति। एवं प्रथमं पूर्वम्। कर्म्मणः क्रञ्चणम्। खणमाक्रोशे। चौरं कारमाक्रोशति। खित्त्वात् मन्। णित्त्वात् वृद्धिः। चौरं कृत्वा आक्रोशतीत्यर्थः। आक्रोशे किम्? साधु कृत्वा स्तौति। स्वार्थात् क्रञ्। स्वादुङ्कारं भुङ्क्ते। सुरसङ्कारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। दीर्घात् नेष्यते। स्वादूकृत्य अश्वीकारी दीर्घः। स्वादीं कृत्वा यवागूं भुङ्क्ते। कथमित्थमेवमन्यथाभ्यः क्रञ्चणम्। कथङ्कारं भुङ्क्ते। इत्थङ्कारम्। एवङ्कारम्। अन्यथाकारम्। यथातथाभ्यामचमोत्तरे। यथाकारं तथाकारम्। अहम् भोक्ष्ये तवानेन किम्। अचमोत्तरे किम्? यथा कृत्वा अहं भोक्ष्ये तथा कृत्वा अहं द्रक्ष्यामि। दृशविद्भ्यां साकल्ये। कन्यादर्शं वृणोति या या कन्या पश्यति ता ता सर्वा वृणोतीत्यर्थः। विप्रवेदं भोजयति यं यं विप्रं वेत्ति विन्दति वा तं तं भोजयतीत्यर्थः। साकल्ये किम्? किञ्चिद्विप्रं दृष्ट्वा भोजयति। यावती जीवविन्दात्। यावज्जीवमधीते यावज्जीवति तावदधीते इत्यर्थः। यावत् वेदं भुङ्क्ते यावन्तं विन्दति तावन्तं भुङ्क्ते इत्यर्थः। चर्म्मोदराभ्यां पूरेः। चर्म्मपूरं ददाति। उदरपूरं भुङ्क्ते उदरं पूरयित्वा भुङ्क्ते इत्यर्थः। वर्षप्रमाणे ऊकारलोपश्च वा। गोष्पदप्रं गोष्पदपूरं वृष्टो देवः गोष्पदं पूरयित्वा ववर्षेत्यर्थः। वस्त्रार्थात् क्नोपेः। वस्त्रार्थात् परात् अन्तक्नुयधातोणम् स्यात् वर्षप्रमाणे। वस्त्रक्नोपं चेलक्नोपं वृष्टो देवः वस्त्रम् आर्द्रं कृत्वा वृष्ट इत्यर्थः। निमूलसमूलाभ्यां गताच्च कषः। निमूलकाषं समूलकाषं कषति समूलं कषतीत्यर्थः। यत्र गतार्थात् णम् स्यात् तत्र तद्धातुरनुप्रयुज्यते। गतार्थादिति किम्? चेलक्नोपं वृष्टो देवः। समूलात् गतार्थहन्तेः। समूलघातं हन्ति समूलं हन्तीत्यर्थः। शुष्कचूर्णरुक्षाद्गतार्थपिषः। शुष्कपेषं पिनष्टि शुष्कं पिनष्टीत्यर्थः। एवं चूर्णपेषम्। रुक्षपेषम्। जीवाद्गतार्थग्रहः। जीवग्राहं गृह्णाति जीवं गृह्णातीत्यर्थः। अकृताद्गतार्थं कृञः अकृतकारं करोति अकृतं करोतीत्यर्थः। करणाद्गतार्थहन्तेः। पादघातं भूमिं हन्ति पादेन भूमिं हन्तीत्यर्थः। हस्तार्थकरणाद्गतार्थग्रहवर्त्तिवृतः। हस्तग्राहं गृह्णाति हस्तेन गृह्णातीत्यर्थः। हस्तवर्त्तं वर्त्तयति हस्तेन वर्त्तयतीत्यर्थः। करवर्त्तं वर्त्तते करेण वर्त्तते इत्यर्थः। आत्मात्मीयबन्धुवित्तवाचकात् करणाद्गतार्थपुषः। स्वपोषं पुष्णाति स्वेन पुष्णातीत्यर्थः। एवं

आत्मपोषं आत्मीयपोषं ज्ञातिपोषं बन्धुपोषं धनपोषम्। छेदनात् करणाङ्गतार्थं पिषः। छिद्यतेऽनेनेति छेदनं जलादि। उदकपेषं पिनष्टि उदकेन पिनष्टीत्यर्थः। एवं तैलपेषं घृतपेषम्। आधाराङ्गतार्थबन्धः। चक्रबन्धं बद्धः चक्रे बद्ध इत्यर्थः। मुष्टिबन्धं बद्धः मुष्टौ बद्ध इत्यर्थः। संज्ञायाञ्च। क्रौञ्चबन्धनं बद्धः। एवं मयूरिकाबन्धं बद्ध इत्यादि। बन्धनविशेषाणामियं संज्ञा। कर्त्तुर्जीवपुरुषाङ्गतार्थनशवहः क्रमात्। जीवनाशं नष्टः जीवो नष्ट इत्यर्थः। पुरुषवाहं वहति पुरुषो भूत्वा वहतीत्यर्थः। विद्युत्प्रणाशम्। अयं निपात्यते। विद्युत्प्रणाशं नश्यति विद्युदिव नश्यतीत्यर्थः। ऊर्द्धाङ्गतार्थशुषिपूरेः। ऊर्द्धात् कर्त्तुः पराभ्यां गतार्थशुषिपूरिभ्यां घणम् स्यात्। ऊर्द्धशोषं शुष्कः। ऊर्द्धपूरं पूर्णः। तृतीयान्तादुपपदेन घणमन्तस्य समासो वा वक्तव्यः। तृतीयान्तपदादुपदंशेः। तृतीयान्तपदादुपदंशेर्घणम् स्यात्। तृतीयान्तेन समासश्च वा। मूलकेनोपदंशं भुङ्क्ते। हिंसार्थाच्चैककर्म्मकात्। तृतीयान्तादिपदाद्धिंसार्थधातोश्चानुप्रयोगेण सहैककर्म्मकात् घणम् स्यात्। तेन समासश्च वा। दण्डेनोपघातं दण्डोपघातं गाश्चालयति। केशेषु केशैर्वा ग्राहं युध्यन्ते केशग्राहं युध्यन्ते। पार्श्वयोः पार्श्वाभ्यां वा उपपीडं शेते। मुष्टिपीडं दधाने इति भट्टिः। एवं पाण्युपकर्षं भक्षयति पाणिना उपकृष्य जनो भक्षयतीत्यर्थः। अपादानाद्धातोर्घणम्। त्वरायां समासश्च वा। शय्याया उत्थानं शय्योत्थायं धावति। द्वितीयान्ताद्धातोर्घणम् समासश्च वा। लोष्ट्रं ग्राहं लोष्टग्राहं युध्यन्ते। स्वाङ्गाच्चाध्रुवाद्धातोर्घणम् समासश्च वा। यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तत् अध्रुवम्। भ्रुवौ विक्षेपं भ्रूविक्षेपं वक्ति। अध्रुवादिति किम्? शिर उत्क्षिप्य कथयति। परिपीड्यमानस्वाङ्गाद्धातोर्घणम् समासश्च वा। उरसि परिपेषम् उरःपरिपेषं युध्यन्ते क्रतुसमुरः पीडयित्वा युध्यन्ते इत्यर्थः। उरो विदारं प्रतिचस्करे नखैरिति माघः। उपपदयोगाया धोर्घणम् स्यात् समासश्च। शिलायाः शिलायामुपविश्य शिलोपवेशं लताः लतामनुपात्य लतानुपातम्। नदीं नदीमवस्कन्द्य नद्यवस्कन्दमिति। नाम्न आदिशग्रहः समासश्च वा। नामान्यादिश्य नामादेशं ददाति एवं नामानिग्राहं नामग्राहं आह्वयति। तसन्तस्वाङ्गात् धोर्घणम्। क्वाचो समासश्च वा। मुखतःकारं मुखतःकृत्य मुखतःकृत्वा आस्ते। तसन्तत्वेनाव्ययत्वात् क्वाचो यप्। तसन्तस्वाङ्गात्तु च्वीसम्भुवश्चणम् क्वाचौ समासश्च वा। मुखतो भावं मुखतोभूय मुखतो भूत्वा आस्ते। एवं तूष्णीभावं तूष्णीभूय तूष्णीम्भूत्वा। एवञ्च प्रयोगानुसारात् धातुविशेषेभ्यः अर्थविशेषेषु प्रत्ययविशेषान्

## ११८४। बहुलं ब्रह्मणि।

बहुल ११, ब्रह्मणि ७। ।

यत् इह लौकिकप्रयोगव्युत्पत्तये लक्षणमुक्तं तत् वैदिक-प्रयोगव्युत्पत्तौ बहुलं ज्ञेयम्। क्वचित् विहितं न स्यात्। [१] क्वचित् निषिद्धं स्यात् [२]। क्वचित् वा स्यात्। क्वचित् ततो-ऽन्यत्रापि इत्यर्थः। यथा पूर्वेभिः [१] ब्राह्मणाम् [२] इत्यादौ ञिद्ध्यसिद्धेः।

ब्रह्मशब्दोऽत्र मङ्गलार्थ ।

इति इण्वादि पादः।

इति कृदन्ताध्याय ।

समाप्तम्।

---

कृताऽन्येऽपि साधुशब्दा व्युत्पाद्या.। यथा उणिकृते करोतीति कारुः। वातीति वायु । भातीति भवान्। बिभेत्यस्मादिति मी कृते भीमभीष्मौ निपात्यौ। एव धातुमात्राद्भावे इ । यथा भवन भवि. त्यजन त्यजि नर्त्तन नृति । अत्र किम् ? नोदन नुदि. दर्शन दृशिरित्यादि। धातौ. स्वरूपकथने तिप्। यथा भवति अत्ति दीव्यति । एव स्वरूपकथने इर्ब्रुवादेर्न च गुण । भजि ग्रहि रञ्जि । ब्रुवादेस्तु ब्रुवि युजि' मुहि' सिचि द्रुहि' दृशिरित्यादि। अतएव नाम च धातुज-माह निरुक्ते व्याकरणे शकटस्य च तोकम्। यन्न पदार्थविशेषसमुत्थ प्रत्ययत: प्रकृतेश्च हि दृष्टमिति प्राञ्चः।

कृतो ये यत्रेति—

ये कृत यत्र येष्वर्थेषु विहितास्ते तत्र तेषु नून निश्चित भवन्ति। प्रयोगत महाकविप्रयोगानुसारेण अन्यत्रापि स्यु । तत्र हेतुमाह। कृतो कभाव इति वचनात्। उदाहरणं तत्रैव द्रष्टव्यम्। न केवलमहमेव ब्रवीमि प्राञ्चो-ऽप्येवमाहु इत्यत आह कृत्तद्धितसमासानामिति ॥११८३॥

बहुलमिति। बहव प्रकारा सन्त्यस्येति बहुल चूडादित्वात् ल.। अथवा बहून् अर्थान् लाति गृह्णाति बहुलम् ॥११८४॥

मुग्धबोध पठन-प्रयोजनम्।

गीर्वाणवाणीवदनं मुकुन्द-
सङ्कीर्त्तनञ्चेत्युभयं हि लोके।
सुदुर्लभ तच्च न मुग्धबोधा-
न्नलभ्यतेऽतः पठनीयमेतत्॥

---

ग्रन्थकृत् परिचय.।

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः।
वोपदेवश्चकारेदं विप्रो वेदपदास्पदम्॥

---

वोपदेव प्रशंसा।

यौर्वाचस्पतिनेव, पन्नगपुरी शेषाहिनेवाभवत्
येनैकेन विदुष्मती वसुमती मुख्येन सङ्ख्यावताम्।
सोऽय व्याकरणार्णवैकतरणिश्चातुर्य्यचिन्तामणि-
र्जीयात् कोविदगर्वपर्वतपविः श्रीवोपदेवः कविः॥

---

ग्रन्थोत्कर्षं ख्यापयन्नाह गीर्वाणेत्यादि। गीर्वाणवाणीवदन संस्कृतकथन मुकुन्दसंकीर्त्तनञ्च इत्युभयमेव लोके सुदुर्लभं भवति। तच्च उभय न मुग्धबोधात् मुग्धबोधभिन्नग्रन्थात् न लभ्यते अतो हेतो एतत् पठनीयम्। नानादेशीय-शिष्यपरम्परया नामोत्कीर्त्तनयशोवर्द्धनार्थं गुरोः पितुरात्मनश्च नाम निर्दिशति। वोपदेव विद्वद्धनेश्वरेत्यादि। उ. शिव क विष्णु उश्च कश्च वौ वयोरुपसमीपे दीव्यतीति इदानी तत् शिष्यसत्कीर्त्तिं वद्धयन् श्लोकद्वयमाह यौर्वाचस्पतिनेत्यादि॥

दुर्गादासो व्यरचयदिना मुग्धबोधस्य टीका,
नानाविद्वन्मतविलसितामाशुबोधा सुबोधाम्।
आलोकन्तामपिशुनबुधा सूयमाना. स्वभावात्
दोष त्यक्त्वा लवमपि गुण भूरिवद्भावयन्तु॥

इति श्रीदुर्गादासविद्यावागीशविरचिताया
मुग्धबोधस्य टीकाया कृदन्ताध्याय.।

---

सम्पूर्णोऽयं ग्रन्थः।

